Reg. No C. 1073

# संस्कृतसाहित्यपत्रिका

Vol. XX, No. 1 ]

१८५९ शकीये वैशाखे

२०श-वर्षस्य १म-संख्या

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

विशेष-प्रबन्धः—
राजा कालस्य कारणम्




Main article—
Rājā Kālasya Kāraṇam.

सम्पादकः—

महामहोपाध्याय-श्रीअनन्तकृष्ण-शास्त्री

सहकारिसम्पादकः—

श्रीउपेन्द्रमोहन-सांख्यतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7s.

*Printed and Published by*

**Dinabandhu Sahityashastri**

The Sanskrit Sahitya Parishad, 17, R. G. Kar Road,
Shyambazar, Calcutta.

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—৮ই জ্যৈষ্ঠ, ১৩৪৪, শনিবার সন্ধ্যা ৬৷৹টার সময়ে হইবে। প্রবন্ধাদি দৈনিক পত্রিকায় বিজ্ঞাপিত হইবে।

---

## স্বল্পমূল্যে পুরাতন
## সংস্কৃত-সাহিত্য-পরিষৎ-পত্রিকা

বর্ত্তমানে বিংশ বর্ষ চলিতেছে। পূর্ব্বের কয়েক বর্ষের অল্পসংখ্যক পত্রিকা এখনও সম্পূর্ণভাবে পাওয়া যাইবে। সভ্যগণের সুবিধার জন্য নিম্নলিখিত মূল্যে পুরাতন পত্রিকাগুলি এখনও দেওয়া হইতেছে, এ বিষয়ে সভ্যগণের দৃষ্টি আকর্ষণ করা যাইতেছে। যিনি যে বৎসরের পত্রিকা ক্রয় করিতে ইচ্ছুক সেই বৎসরের পত্রিকা বর্ত্তমানে সম্পূর্ণ পাওয়া যাইবে কিনা পূর্ব্বে পত্রদ্বারা জানিয়া নিলে ভাল হইবে।—

| | | | | | | |
|---|---|---|---|---|---|---|
| এক বৎসরের পুরাতন পত্রিকা··· | | | ৩৲ | ( ডাক মাশুল | ৵৹ ) | |
| ২ বৎসরের | ,, | ,, | ( এক সঙ্গে )—৫৷৹ | ( | ,, | ।৵৹ ) |
| ৩ বৎসরের | ,, | ,, | ,, ৮৲ | ( | ,, | ৷৴৹ ) |
| ৪ বৎসরের | ,, | ,, | ,, ১০৲ | ( | ,, | ৸৹ ) |

---

## ছাত্রবৃত্তি

সংস্কৃত-সাহিত্য-পরিষদে কাব্য, ব্যাকরণ, ন্যায়, বেদান্ত, সাংখ্য, স্মৃতি, মীমাংসা, পুরাণ প্রভৃতি শাস্ত্রে অধ্যয়নার্থী ছাত্রদিগকে জানান যাইতেছে যে, যাঁহারা সংস্কৃত-সাহিত্য-পরিষৎ হইতে **মাসিক বৃত্তি** পাইতে ইচ্ছা করেন তাঁহাদিগকে আগামী **১৫ই জ্যৈষ্ঠের** মধ্যে পরিষৎ-সম্পাদকের নিকট নিজের যোগ্যতা প্রভৃতি জানাইয়া প্রশংসাপত্রসহ আবেদন করিতে হইবে। ছাত্রগণকে আহারের ব্যবস্থা অন্যত্র করিতে হইবে, পরিষদে কোন কোন ছাত্রের থাকার ব্যবস্থা হইতে পারিবে।

পণ্ডিতপ্রবর শ্রীযুক্ত সীতানাথ সিদ্ধান্তবাগীশ এবং শ্রীযুক্ত কালীপদ কাব্য-ব্যাকরণতীর্থ মহাশয় অধ্যাপক নিযুক্ত আছেন। উপাধি-পরীক্ষার্থী ছাত্রগণের আবেদন বিশেষরূপে বিবেচনা করা হইবে। ৩০।১।৪৪

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| May, | १८५९-शकीये वैशाखे | Vol. XX, |
| --- | --- | --- |
| 1937. | २०श-वर्षस्य १म-संख्या | No. 1 |


## स्वधर्मरक्षा

"आहार-निद्रा-भय-मैथुनानि सामान्यमेतत्पशुभिर्नराणाम्"

इति आहार-विहार-व्यवहारास्सर्वेऽपि समाना एव दृश्यन्ते सर्वेषां प्राणिनाम् । यादृशं हि व्यवहारसामर्थ्यं मनुष्याणां युक्तिविशेषानुप्रयोगेन, न ततो न्यूनं पश्वादीनामपि तद् दरीदृश्यते । तदुक्तं शङ्करभगवत्पादैः

"पश्वादिभिश्चाविशेषात्, यथा हि पश्वादयो हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, दण्डोद्यतकरं पुरुषमुपलभ्य मां हन्तुमयमागच्छतीति पलायन्ते, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतो बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते, अतः पश्वादिभिः समानः प्रमाणप्रमेयव्यवहारो विदुषामपि" इति । सति चैवमार्थिकव्यवहारसंरक्षणेन प्राणित्वमेव सुरक्षितं भवति, न तु मनुष्यत्वमपि, "धर्मो हि तेषामधिको विशेषः" इति स्वस्वधर्मानुष्ठानेनैव मनुष्यत्वं सुरक्षितं भवति, नान्यथेति भगवत्पादा अन्ये च सर्वे धर्माचार्या मन्यन्ते ।

भगवानपि गीतायां कर्म-भक्ति-ज्ञानयोगेषु कर्मयोगरक्षणेनैव न केवलं जगतः, किन्तु परमात्मनोऽपि रक्षा, नान्यथा, भक्तियोग-ज्ञानयोगौ तु

कर्मयोगरक्षणेन स्वयमेव रक्षितौ भवतः, इति मत्वैव स्वावतारनिमित्तं धर्ममार्गग्लानिरेव, न तु भक्तिमार्गग्लानिर्ज्ञानमार्गग्लानिर्वेति—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"
"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"
"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥"

इत्यादौ धर्म एव स्वस्य प्रेमातिशयं प्रकाशयन्ति । उपक्रमोपसंहाराभ्यां गीतातात्पर्यपर्यालोचनायामपि कर्मयोग-भक्तियोग-ज्ञानयोगानां त्रयाणां मध्येऽधिकारसन्देहे कर्तव्याकर्तव्याविवेकावस्थायां च कर्मयोग एवानुष्ठेय इत्येव गीताचार्याणामाशय इति जानीमः, अत एव—धर्मक्षेत्रे इति प्रथमं पदम्, अन्तिमं तु पदद्वयम्—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥"

इति श्लोकगतं "मम मति"रिति च सुष्ठु लगति । अनेन तु जानीमः—योगत्रयात्मकं गीताशास्त्रं सर्वमपि "धर्मक्षेत्रे मम मतिरि"ति योजनया धर्मक्षेत्ररक्षायामेव धुरन्धरमिति । व्यक्तं चैतद् महाभारतेऽन्यत्रापि "धर्मो रक्षति रक्षितः ।" इति ।

अत्रेयमाख्यायिका पुरतः स्फुरन्ती, विश्वसिमः, समुल्लिखिता प्रियपाठकानां श्रवणमात्रेणानुसन्धानमात्रेण वोत्साहातिशयं स्वधर्मरक्षणे समुत्पादयिष्यति । धर्मकेतुर्नाम चक्रवर्ती स्वधर्मरक्षैकदीक्षः प्रतिजज्ञे, प्रत्यहं सस्यापणिकायां मध्याह्नेऽतिरिच्यमानं सर्वमपि स्वकोशत एव क्रेतव्यम्, अन्ततो गत्वैकं रात्रिन्दिवं तस्य राजधान्यामुपयोगश्च कर्तव्यः, येन प्रत्यहजीवने कस्यापि स्वरक्ष्येषु त्रुटिलेशोऽपि मा भूदिति ।

तत्परीक्षणाभिमुखास्तु देवा अलक्ष्मीमूर्तिमेकाम्, यस्याः प्रवेशे द्वादश-घटिकाभ्यन्तरेण सर्वाऽपि लक्ष्मीर्गृहाभ्यन्तराद् बहिरवतरेत्, स्वसृष्टां केनचन द्वारेणाऽऽपणिकायां लक्षाधिकरूप्यमूल्येन क्रय्यां व्यवस्थापयामासुः, यस्याः कोऽपि क्रेता आमध्याह्नं नोपातिष्ठत्। कोशाध्यक्षस्तु धर्मकेतोराज्ञया आपणिकायां प्रविष्टोऽलक्ष्मीमूर्तिमेकामेव केनाप्यक्रीतामुपलक्ष्य तदीयान् शक्तिविशेषान् लक्षाधिकं तन्मूल्यं च राज्ञे निवेदयामास। स्वधर्मरक्षैकदीक्षितो धर्मकेतुस्त्वविशङ्कमेव तस्या मूर्तेः क्रयायाज्ञापयामास। ततश्चापणिकाया आनीताऽलक्ष्मीमूर्तिर्देवमन्दिराभ्यन्तरं पूजकद्वारा प्रवेशिता तत्रैव प्रत्यष्ठापि महता समारम्भेण। तदा बहूनि दुर्निमित्तान्यपि सर्वतोऽदृश्यन्ताचिरभाविविजयलक्ष्मीतिरोधानसूचकानि। अलक्षयन्निव सर्वमिदं कर्तव्यैकदत्तदृष्टिर्धर्मकेतुर्मन्त्रिप्रमुखान् सर्वानेव किङ्करान् तस्मिन् दिने विरामाभ्यनुज्ञानेन श्वोभाविनि प्रभाते पञ्चघटिकायां वाद्यमानायामेव स्वसभायां सन्निधानायाज्ञापयत्। निर्गतेषु राजधानीतः सर्वेष्वपि किङ्करेषु, प्रसुप्तेषु च स्वीयेषु सर्वेषु परिवारेषु, वाद्यमानायामेव दशमघटिकायाम्, सेनानीवेषेण खड्गहस्तो धर्मकेतु राजधानीमहाद्वारपालस्य स्थाने जागरूकोऽवातिष्ठत्। वाद्यमानायां च द्वादशघटिकायां कोशागारतो निर्गच्छन्तीं साश्रुमुखीं काञ्चन स्त्रियं राजधानीमहाद्वारस्य सावधानं स्वयं रक्ष्यमाणस्य सविधे समागतामालोक्याप्राक्षीत्—कासि त्वम्? कुतो रोदिषि, का वा विपत् तवेति। सा च धर्मकेतुगुणान् कीर्तयन्ती सविनयमेवम् अवादीत्—अहं हि राज्यलक्ष्मीः, अलक्ष्मीमूर्तेरत्रावस्थापनेनात्रावस्थातुमनीशानाऽगत्या बहिर्निर्गच्छामि किंकर्तव्यतामूढा। धर्मकेतुरवोचत्—तव को वाऽपराधः, यथेच्छं गम्यताम्, नाहं स्वधर्माद् विरन्तुं शक्नोमि। ततः सा बहिरगात्। ततस्तामनु भगवन्तं नारायणं तमनु सर्वांश्च देवान् बहिर्निर्गच्छतो धर्मकेतुः ससन्तोषमविशङ्कमेव बहिर्गमनायान्वमन्यत। ततश्च धर्मदेवता राजगृहाद् निर्गत्य महाद्वारसविधं समागता काऽसीति धर्मकेतुना पृष्टाऽवादीत्—अहं हि धर्मदेवता,

राजलक्ष्म्याः, भगवतो नारायणस्य, सर्वेषां च देवानामत्रासन्निधानाद् नात्रावस्थातुं पारयामि, अशरणा चाहं दुःखेन महता समाक्रान्ता तेषामेव मार्गमनुसरामीति। श्रुत्वैव तद्वचनं कोपाविष्ट इव धर्मकेतुः खड्गेन हस्त-गृहीतेन वारयामास धर्मदेवतां बहिर्गमनात्, वर्णयन्—यदर्थं मया राज्यश्री-प्रभृतयोऽपि तृणायामन्यन्त, कथं त्वमपि मां विहाय राजधान्या निर्गन्तु-मर्हसीति, आज्ञापयामास चान्तरेव प्रविश्य पूजास्थानं विहाय नान्यत्र पदात् पदमपि चलितव्यमिति। तदनु तदाज्ञापरवशा सा पूजास्थान एवावातिष्ठत। राज्यलक्ष्मीर्भगवन्नारायणादयश्च धर्मदेवतामनागतां दृष्ट्वाऽशरणा दुःखिताश्च विना धर्मं कुत्रापि जीविका नास्माकं भवितेति यथागतं पुनरपि राजधानी-मेव प्रवेष्टुं महाद्वारे समागता धर्मकेतुना रुद्धाश्च प्रार्थयामासुस्तेषामपराध-क्षमापणेनान्तरेव यथापूर्वमवस्थानायावसरप्रदानम्। अनुमता च राज्ञो यथापूर्वमेव राजधान्यामेव न्यवसन्। प्रत्यूषे पञ्चघटिकायामुपस्थितेषु च मन्त्रिप्रमुखेषु सर्वेषु, धर्मकेतुरपि सभायामुपस्थाय सर्वमिदं यथावद्वर्णयत्, श्रुत्वा चेदं सर्वं सन्तुष्टान्तःकरणास्सन्त उच्चैरुद्घोषयामासुः "धर्म एव विजयते! धर्म एव विजयते! धर्म एव विजयते! धर्मो रक्षति रक्षितः! धर्मो रक्षति रक्षितः! धर्मो रक्षति रक्षितः" !!! इति।

# "राजा कालस्य कारणम्"

## ( १ )

कालो नाम परिस्थितिः। परिस्थितिर्हि प्रपञ्चस्य राजाधीना। राजा हि कर्तुमकर्तुमन्यथा वा कर्तुं शक्नोति, यां स योग्यां मन्यते। यदि मन्यते राजा दरिद्रं प्रचुरधनयितुम्, यदि वा प्रचुरधनं दरिद्रयितुं करोत्येव तथेति बहुशो दृष्टम्। परिस्थितिरर्थानां राजाधीनैव। प्रसिद्धं हि कुचेलोपाख्यानादिषु राज्ञा वासुदेवेनेच्छामात्रेणातिदरिद्रोऽपि कुचेलः कुबेरतां प्रापितः, चक्रवर्त्यपि हरिश्चन्द्रोऽकिञ्चनतां प्रापितश्चक्रवर्तिपदं तत एव प्राप्तवताऽपि विश्वामित्रेण। नहीदमन्तरेण राजानमन्येन केनापि संभवति, इति परिस्थितिमार्थिकीमपेक्ष्य सर्वे एवैककण्ठेन स्वीकुर्वन्ति॥

धार्मिकपरिस्थितौ धार्मिकमधार्मिकयितुमधार्मिकं धार्मिकयितुं च किं राजा प्रभवति! इति संशये तु केचन मन्यन्ते—अर्धजरतीयन्यायाश्रयणायोगात् तत्रापि प्रभुरेव राजेति। अशोकादयो हि बहव एव चक्रवर्तिनः सर्वा एव प्रजाः पूर्वं मतान्तरावलम्बिनीरपि तत्परिवर्तनेन बौद्धादिमते व्यवस्थापयन्ति स्मेति कस्य वेदं परोक्षमितिहासपरिशीलकस्य। भारतवर्षे वैदिकं मतं विहायावैदिकानि मतानि यावन्ति साम्प्रतं जीवन्ति, सर्वेषां तेषां जीवने राजावलम्ब एक एव निदानम्, माहम्मदमतं वा ख्रैस्तवमतं वा भारतवर्षे कथमन्यथाऽवकाशमलभत? कंस-हिरण्यकशिपु-शिशुपालादयश्चक्रवर्तिनः कति वा नास्तिकमतस्यैव प्रवर्तका आसन्निति पुराणेतिहासादितोऽपि सम्यगेव जानीमः। सुधीरमिदं पृच्छ्यते—के वा भारते वर्षे साम्प्रतं जीवन्ति भक्तप्रवरप्रह्लादसदृशाः, महर्षिकल्पा धार्मिका धर्मार्थं स्वं जीवितमपि तृणाय मन्वानाः स्वार्थत्यागेन धर्मरक्षणैकदीक्षादीक्षिताः पण्डिता वा, येषां प्रार्थनया भगवान् स्वयमवतीर्य

स्वप्रतिज्ञां परिपालयिष्यति, यदि धर्मग्लानिरेव कदाचन केनापि साम्प्रतिकेन महात्मना महाराजेन महोदयेन महाशयेन वा स्यात्। परमार्थतस्तु —न कोऽपि महात्मा महाराजो वा साम्प्रतमधर्मं प्रचारयितुमिच्छति, किन्तु धर्ममेव, इति धर्मबुद्ध्या स्वपरिस्थितिमनुसृत्य पराशरादीनामिवाशोकादीनामिव वा परिवर्तनकथा कथं वा निन्दामर्हति? यतः परिवर्तितानां परिस्थितीनां साधुत्वासाधुत्वविचारोऽपि तत्तत्समयानुगुणराजावलम्ब्यानुसारेणैवात्मानं लभते। सर्वथा तु—विना राजपरिवर्तनं राजमतपरिवर्तनं वा परिस्थितिपरिवर्तनं न कथमपि संभवति ॥

इममेवाऽऽशयमभिप्रेत्य पद्मनाभालये स्वीये ट्रावङ्कूरमहाराजानां स्वपरिस्थित्यनुसारेणास्पृश्यानां प्रवेशानुज्ञासमुद्घोषोऽपि समुदेति स्मेति स्पष्टं तदीयाः सचिवोत्तमाः श्रीमन्तः C. P. रामस्वाम्यार्यमहोदयाः स्वीयं मन्तव्यं सर्वत्र व्याख्यानमुखेन प्रचारयन्ति। सनातनधर्मावलम्बिनोऽपि मन्दिरेष्वस्पृश्यानां प्रवेशमशास्त्रीयमधर्ममयोग्यं परिस्थित्यननुगुणं वा मन्वाना अप्यनन्तशयनसंस्थाननिवासिनो राजाज्ञोल्लङ्घनेऽनीश्वरास्तत्परिस्थित्यनुगुणमेव राजाज्ञां परिपालयन्तीति प्रत्यक्षमिदं सर्वेषाम्। 'कोचिन'महाराजा इदानीन्तना नेममनन्तशयनमहाराजसिद्धान्तमनुमोदन्ते, अन्ये वा नानुमोदन्त इति त्वन्यदेतत्, यतस्तेऽपि स्वमतमेव तत्रानुसरन्ति ॥

"सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः" इति न्यायेन स्वीये राज्ये माहम्मदानां ख्रैस्तवानां चाधिक्ये क्रमेण स्वीयं सर्वं राज्यं स्वप्रजासु हिन्दुभावोऽपि विनाशोन्मुखः कथं वा रक्षितुं शक्यते? यदि स्वराज्यपरिस्थितिरक्षणार्थं राजापि न प्रयतिष्यते। सनातनधर्मावलम्बिनोऽपि महाराजानामेषां मतपरिवर्तनमपेक्षमाणाश्चक्रवर्तिप्रतिनिधीनेव शरणं गच्छन्ति। प्रजासु मताधिक्यं यत्र भवति, तदनुगुणं गमनं किमसाम्प्रतं महाराजानाम्? विश्वसिमः—ट्रावङ्कूरमहाराजा अपि समालोच्यैव स्वीयां परिस्थितिं मन्दिरप्रवेशव्यवस्थां काञ्चनो-

द्घोषयामासुः । अतोऽशोकादय इव ट्रावङ्कुरमहाराजा अपि जटिलायां परिस्थितौ साहसावलम्बनेनादर्शतामेवार्हन्ति भारतीयेषु राजसु ।

सनातनधर्मावलम्बिनो हि ज्ञात्वापि विपत्तिं हिन्दुभावस्यानन्तशयने संख्याधिक्यं च मतान्तरावलम्बिनाम्, विपदुद्धारार्थं हिन्दुसंख्याया अन्यूनीकरणार्थं च न कथमपि प्रयतन्ते, केवलमिदमयोग्यमिदमयोग्यमिति प्रस्तुतेषु सर्वेषु कार्येषु विघटनमात्रमाचरन्ति । मन्दिरेषु चैतन्यं पतितानां मन्दिरप्रवेशेनापि सुरक्षितमेव, केवलमस्पृश्यानां प्रवेशमात्रेण विप्लवल इति सपक्षपातमेव समुद्घोषणम् । स्पर्शास्पर्शविचारे शास्त्रीया व्यवस्थाऽपि तत्तज्जातिविशेषं पुरस्कृत्य कया वा सनातनधर्मसंख्यया प्रकाशिता वर्तते ! यामवलम्ब्य ट्रावङ्कुरमहाराजा अपि निर्णेतुं शक्नुयुः । केरलदेशे क्षेत्राणां रचना हि न शैवागमानामनुसारेण, वैखानसागमानाम्, पाञ्चरात्रागमानां वा, किन्तु केरलतन्त्रग्रन्थानामनुसारेण । किमिदानीं कोऽपि व्यवस्थापयितुं शक्नोति केरलक्षेत्रे, विशिष्य च पद्मनाभक्षेत्रे द्विहस्ताधिकपरिमाणायाः पद्मनाभमूर्तेरनुलोमान्त्यजादीनां चातुर्वर्ण्येन समानमेव दर्शनादौ नाधिकार इति ?

विश्वसिमः—अस्पृश्यानां मन्दिरे समयविशेषे दर्शनव्यवस्थापनेन सनातनधर्मसमाजो न कथमपि तृणायामन्यत । सनातनधर्मरक्षणैकदीक्षैव हि ट्रावङ्कुरमहाराजानामिदानीन्तनानाम् । अत एव हि सुरापायिनामन्येषां च महापातकिनां मन्दिरप्रवेशोऽपि तैर्निरुद्धो वर्तते । वर्णाश्रमस्वराज्यसंघीयविद्वत्परिषदपि प्रोक्षणादिना शुद्धिप्रापणमेवापेक्षते । तत्रापि वैखानसागमेषु—"पूजाकाले च दर्शने" इति पूजाकाले दर्शनमेव विशिष्य निन्दति, न कालान्तरेषु । तथाच कालान्तरेऽपि मन्दिरेष्वस्पृश्यप्रवेशे प्रायश्चित्तव्यवस्थया यदि विद्वत्परिषदपि सन्तुष्टा, तर्हि प्रत्यहं संप्रोक्षणव्यवस्थाया असाधुत्वमपि कथं समर्थयन्ति ? अतः परिस्थितिमनुसृत्यानन्तशयनमहाराजानां मन्दिरे स्वीयेऽस्पृश्यानामपि प्रवेशव्यवस्थापनं न दोषाय ।

केरलदेशे हि बहवोऽस्पृश्यजातयो : वर्तन्ते सुराविक्रेतारः ( इलवा ) कृषीवलाः ( चेरमन ) इत्यादिपदव्यपदेश्याः, येषां संस्कृतभाषायां किं पदं बोधकमित्यपि नैतावतापि केऽपि पण्डिता वक्तुं पारयन्ति, तेषामुत्पत्तिप्रकारम्, जातिविशेषव्यवस्थापकं च। सति चैवं वचनानुसारेणापि चण्डालादिशब्दमात्रदर्शनेन कथं वैतेषामपि मन्दिरेष्वस्पृश्यताव्यवस्थापनं साम्प्रतम्। उत्तरदेशे तु रथ्याप्रान्तेषु शिवमन्दिराणि कालीमन्दिराणि चाविशेषेण सर्वैः सदैवतानि दृश्यन्ते, इति सदाचारानुसारेण व्यवस्थापि सदाचारव्यवस्थां विना कथमात्मानं विन्दते ?

वर्णाश्रमस्वराज्यसंघस्तु स्वीये पुरीधामाधिवेशने नवमे 'कोचिन्' महाराजानामस्पृश्यानां स्वतन्त्रमन्दिरनिर्माणादिव्यवस्थया तानभिनन्दति। किमिदं मन्दिरमपि पाञ्चरात्राद्यागमानुसारि साधु मन्यते, उत स्वेच्छाकल्पितम्। आद्ये सुधीरमिदं पृच्छ्यते—कुत्र वा तन्त्रेऽस्पृश्यानां पृथङ्मन्दिरव्यवस्था निरधारि, के वा मन्त्रास्तत्र विहिताः ? के वा प्रतिष्ठापका आचार्याः ? के वा पूजकाः, कानि वा तत्र प्रमाणानि ? विना प्रमाणं स्वेच्छामात्रेण मन्दिरादिव्यवस्थापनं सनातनधर्मावलम्बिभिः किमिदं प्रतारणमात्रमस्पृश्यानाम्। यदि अस्पृश्यप्रवेशेन देवतासान्निध्यमेकस्मिन मन्दिरे सुरक्ष्यते, कथं वर्णानां मन्दिरमात्रे तत्प्रवेशेन तदपगच्छति। यदि सर्वत्रापगच्छत्यवर्णानां प्रवेशेन, तर्हि कुतो वा 'कोच्चिन'महाराजानां पृथङ्मन्दिरव्यवस्थापनार्थं प्रयत्ने धन्यवादावसरः ? यदि तत्र 'राजा कालस्य कारणम्', तर्हि कथं वाऽनन्तशयनमात्रे तेनापराद्धम् ? इति। अयमाक्षेपो वा, सिद्धान्तो वा भवतु, मासद्वयमध्ये सनातनधर्मावलम्बिनां स्वीयमन्तव्यप्रकाशनार्थमवसरो दीयते, स्वीयं मन्तव्यमत्राषाढमाससप्तिकायां प्रबन्धान्तरलाभे, अन्यथा तु ततोऽपि पूर्वं प्रकाशयिष्यामः।

---

अद्वितीयनैयायिकवरेण्य-पण्डितप्रवर-पूज्यपादोपाध्यायकुलपति-

## महामहोपाध्याय-श्रीकामाख्यानाथ-तर्कवागीश-

महाशयानां परलोकगमनात्

# शोकोच्छ्वासः

[ निबन्धकः—श्रीताराप्रसन्नतर्कतीर्थः ।

आन्वीक्षिकीशास्त्रराज्ये सम्राड् विपुलविक्रमः ।
सुतीक्ष्णप्रतिभास्त्रेण विजितारिर्महायशाः ॥
अलौकिकप्रभावेण वाणीलक्ष्मीसमन्वितः ।
सर्वशास्त्रार्थतत्त्वज्ञो य एकः सूरिकेशरी ॥
स हन्तास्मान् भाग्यहीनाञ्छोकसिन्धौ विनिक्षिपन् ।
परलोकं परिप्राप्तो हा हता हा हता वयम् ॥
अनुत्कक्लीववाग् नित्यं सपौरुषमहाशयः ।
तेजसो विग्रहः साक्षाद् राजन्यवृन्दवन्दितः ॥
वज्रादपि कठोरश्च कुसुमादपि कोमलः ।
लोकोत्तरमनोवृत्तिर्य एकः सूरिकेशरी ॥
स हन्तास्मान भाग्यहीनाञ्छोकसिन्धौ विनिक्षिपन् ।
परलोकं परिप्राप्तो हा हता हा हता वयम् ॥
अदम्योद्यमशालित्वादा सिद्धेः साधको महान् ।
अश्रान्तकर्मयोगित्वादाफलोदयकारकः ॥
असामान्यप्रभावत्वान्मानगौरवमण्डितः ।
अदृष्टपूर्वपाण्डित्यो य एकः सूरिकेशरी ॥
स हन्तास्मान् भाग्यहीनाञ्छोकसिन्धौ विनिक्षिपन् ।
परलोकं परिप्राप्तो हा हता हा हता वयम् ॥

पुरुषायुषजीवोऽसौ नित्यं नियन्त्रितक्रियः ।
आ मृत्योः शास्त्रसेवित्वात् सर्वेभ्यः प्राप्तगौरवः ॥
जलवत् तरलीकृत्य तर्कशास्त्रस्य वाचकः ।
तर्कवाचामीश्वरोऽस्माद् य एकः सूरिकेशरी ॥
स हन्तास्मान् भाग्यहीनाञ्छोकसिन्धौ विनिक्षिपन् ।
परलोकं परिप्राप्तो हा हता हा हता वयम् ॥
साहित्यरसमाधुर्यं तर्कशास्त्रेऽपि दर्शयन् ।
नानाख्यानावतारेण रससिन्धौ निमज्जयन् ॥
दुरूहस्थानबोधार्थं चित्तक्लान्तिं विनाशयन् ।
छात्रानध्यापिपन्नित्यं य एकः सूरिकेशरी ॥
स हन्तास्मान् भाग्यहीनाञ्छोकसिन्धौ विनिक्षिपन् ।
परलोकं परिप्राप्तो हा हता हा हता वयम् ॥

---

## नगरपालनसभा

[ निबन्धकः—रङ्गाचार्यः ]

नियतमिदं नैसर्गिकं नान्तरीयकञ्च यदसौ विवादो न्यायाधिकरण-सभायाः पुरस्तादेव समापनीय आसीदिति । न कोऽपि नाम नासीद्यो नेदमजानात् । अतश्चात्र संरम्भस्य वा संक्षोभस्य वा विस्मयस्य वाऽल्पीयसापि हेतुना नेदानीं नितान्तमभूवे । ननु कोऽसौ विवादः । वादिनी सुब्बुपाटी । प्रतिवादिनी अम्मुकुट्टी । सुब्बुपाटी न्यायाधिकरणसभायां स्वकीयं विवादं विचारणायाभ्यधिकृतमारचयामास । यथा—यद्यात्मनः प्रतिवादिनी अम्मुकुट्टी नगरपालनसभायाः सभ्यतया पौरैर्नियोजिताऽभूत्,

तदसमञ्जसम्। निरर्थकम्। अनीतिकञ्च। तादृशं नियोजनं प्रत्याख्येयम्। स्वयमेव तत्सभ्यतामर्हति। यथा स्वयं तत्सभाङ्गभूतेति प्रख्यापिता लोकैर्विदितचरी च स्यात्तथा विधातव्यमिति।

अहो। अस्याः सुहृदः कति कति नाम न सम्बभूवुः। ननु कीदृशाः ? न केवलं स्त्रियः, अपि तु कुलपालिकाः। न परं वर्षीयांसः, किन्तु बाला यवीयांसः। नैव मूर्खाः, परन्तु विवेकिनोऽपि। सत्यप्रियैरेतदवश्यम् अभ्युपेतव्यं यत् सुब्बुपाटो विधातुः काचनान्यादृशी विस्मयकरी पुरुषमयी सृष्टिः। स्वभावेन शीलेन गुणेन परमसौ सर्वेषां प्रियंभविष्णुः। तदीयासु कालकलासु कोऽपि क्षणो वृथा यापित इति न कश्चिदपि वक्तृप्रवेको वक्तुमीशांबभूव। असौ किल नगरपालनसभायाः काचन करुणामयी अधिष्ठानदेवतेत्येव पौरैः समभाव्यत। महती किल सेवा तया तस्याः सभाया वैतानिक्या इव वितायते स्म। यावती अन्तर्विनयसंपत्तिस्तावती, ततोऽप्यधिका वा स्वाभाविकी प्रतिपत्तिर्धार्मिकेषु विषयेषु। दुर्वारगर्वानलदूषिताशयः को वा विचक्षणम्मन्योऽधन्यो जरत्या गुणातिशयमन्तरेण न शश्लाघे।

अम्मुकुट्टी। अस्याः कौटुम्बिको स्थितिरन्यादृशी। अस्याः सहकृत्वानोऽङ्गुलिगणेयाः केचन पात्रेसमिताः। तादात्विकसमयानुरोधेनात्महितमेकं कामयमानाः कपटसौहृदव्यमाविष्कुर्वाणास्तां केवलं ते वलन्तेस्म। वस्तुतस्त्वेषां प्रीतिरभिमानश्च जरतीपक्षमेवावालम्बिषाताम्। विरलाः सुहृदः। पिण्डीशूराः पानप्रसिताश्च। विद्वेषिणस्तु अनल्पाः। ते च तस्यां पूर्वोत्पन्नं रूढमूलमात्मीयं प्रद्वेषं पोषयितुकामाः सम्यञ्चं समयविशेषं कमप्युदीक्षमाणा रन्ध्रान्वेषणपरायणाः परमासत। किं बहुना ?—

> "औद्धत्यं वृद्धतातः प्रभवति भवने दुर्मतिर्नाम माता
> क्षुत्तृष्णे द्वे :भगिन्यौ पतिसुतरहिते ते तदीयावलम्बे।
> द्वौ पुत्रौ शोक-मोहौ श्रवणविरहितौ पङ्गुराद्योऽपरोऽन्धो
> द्वे मित्रे द्वेष-रोषौ बहुमतकलहो मत्सरोऽस्याः प्रियोऽभूत्॥"

आस्माकीना सुब्बुपाटी न किल साधारणी जरती, यथा शेषी, कुप्पू, नाणीपाटीप्रभृतयः। असौ न केवलं कुलेन महती, किन्तु वपुषा वयसा च। अनभिज्ञा श्वश्रूननान्दृजनवचनकाटवस्य, यतः प्रथम एव वयसि अननुभूतपतिमुखदर्शना पितृगृहं प्रतिनिवृत्तवती सद्यः परिहृतमूर्धजापि षष्टिर्वर्षाणि कथमपि यापितानीति अनवगणितार्धमूर्धावगुण्ठना। अपरिशीलितभूषणकथापि मूषकशतदूषितरुद्राक्षवलयैकाञ्चितकण्ठनाला गलितदशनेति कदाचित् स्मयमाना अजातदशनार्भकायन्ती वाक्कृत्वचेन वचनेन परिचितपूर्वेषु स्वयं कुशलानुयोगपुरःसरं प्रदर्शितादरा, अननुयुक्तापि आत्मीयाशयप्रकाशने समुदित्वरत्वरा च।

उपपालकाधिकारिणः ( Sub-Inspectors of Police ) अर्भक एकद्वानिव दिवसान् अस्वस्थोऽस्तीति ज्ञायते। झटिति सुब्बुपाटी समाहूयते। पाटी अविलम्बितं गच्छति। अर्भकं स्नेहमयेन चक्षुषा ईक्षते। सप्रणयं स्वभुजाभ्यामादत्ते। कपोलयोश्चुम्बति। "अङ्क, रत्न, शुक" इति लालयन्ती सुधामयीर्गिरः किरन्ती मूर्ध्नि तम् उपजिघ्रति। अयि पार्वति! अर्भकस्य न कोऽपि दोषः। आगमयस्व तावत्। अजीर्णस्य हेतोः किञ्चिदिव क्लिश्नाति। अल्पं शुण्ठीस्वरसं परिकल्पय। सोष्णमन्तः सेवय। दृषदि हरिद्राखण्डान् सर्षपांश्च निधाय सम्यगापेष्य संपिष्य आयसदर्व्यां क्वाथय। मूर्ध्नि ललाटे उरसि चालेपनविधया तदानयाय। पार्वती च तदात्वे स्वयं कस्यचिदधिकारिणो भार्येति अचेतयन्ती सुलभकोपस्य मुनेः पुरः सूरीव प्रणाय्यान्तेवासिनीयन्ती यद्यत् पाटी समादिशति, तत्तद् विधिविहितमिव सपरीप्समाचरति। क्षणादिव समनन्तरं तदीयः अपरिपूर्णैकहायनो बाल आत्मीयमव्याजमुग्धं लोचनमुन्मीलयति। अनिमित्तं हसति। मुखं विकासयति। पल्लवकोमलाभ्यां पद्भ्यां व्योमाभिहन्ति। तदा उपपालकस्य प्रेयस्या मानसी वृत्तिः कीदृशी स्यादिति स्वयमेव भावुका भावयन्तु। सा च परःसहस्राणि कृतज्ञवचनानि पाटी-कर्णोत्सवीकुर्वती मोदते। भृत्यद्वारा पिष्टकचूर्णानि मधुराणि रसवन्ति नानाविधानि

वैदेशिकानि स्वदेशीयानि च गिरिजानि फलानि पाटीगृहं प्रापयति। यानि च पयःपात्रं बिडाला इव मधुचषकं मक्षिका इव जरतीमभितः स्वयमनाहूताः सञ्चरन्तो बालजनाः स्वकीयकञ्चुकगह्वरेषु वक्त्रकन्दरेषु च प्रवेश्य झटिति क्षणप्रभारोचींषीव तिरोहितानि कुर्वन्ति।

अथवा, दीनस्य रामार्यस्य कुटुम्बिनी प्रसवातुरा खिद्यते। यावत् पाटीदं शृणोति तावत् त्वरितं करगतं कार्यजातं सहसा विधूय सरभसं तत्र गच्छति। जननीव धात्रीव दासीव परिचरन्तीव अन्वग्भावं स्थित्वा यावत्सुखप्रसूतिस्तावत्तत्रैव सन्निधत्ते। नान्यत्र पदात्पदमपि चलति, प्रसं शिशुं च स्वस्तिमन्तौ निशम्य स्वयमभिनन्दति। सस्नेहं बन्धुजनैस्तदागतैः सह व्याहृत्य शर्करापोरलिकाञ्च गृहीत्वा स्वगृहं निवर्तते।

आहोस्वित् नूतनं किञ्चित्कुटुम्बं देशान्तराद् यात्राप्रसङ्गेन स्वग्रामं विश्रान्तये समाश्रयते। तदा सर्वजनप्रियंभावुका जरती स्वयं स्वागतपुरःसरं सौखशायनिकी भूत्वा तस्मै इयं दधिविक्रयिणी ( मारियायी ) अयं निर्णेजनविधौ पटीयान् रजकः ( पक्किलिः ) एष तैलवणिक् ( वारप्प ) इति तांस्तान् प्रति कुटुम्बावश्यकान् व्यक्तिदर्शं निर्दिशन्ती मिथः परिचयमादधाना स्वयमेकान्ते कमप्यानन्दमनुभवति। भाटकप्रदानेन प्रतिमासं क्रियमाणावसथाभ्यवहाराः पिपठिषवो बालाः कदाचिन्मनोविनोदप्रियाः अल्पाल्पानि नानाविधानि चेष्टितानि कुर्वाणा अरमन्त। यथा —गुब्बुपाटी महानसान्तर्यदावनतमुखी षड्भिः स्तम्भैः स्थास्नुर्मण्डपिकेव तिष्ठन्ती संलग्नचुल्लीमपोह्य रन्धनस्थालीर्निर्मलीकुर्वती शोधनकर्मणि व्याप्रियमाणा भवति, तदा बाला अशब्दमलक्षितञ्च बहिर्द्वारकवाटिकामर्गलितामारच्य्य तूष्णीकां साधुवदासीरन्। यथा वा, कदाचिद्यानि वस्तूनि अविलम्बितमपेक्षितानि स्युः तानि अयथास्थानं गुढनिक्षिप्तानि दुरुपलम्भानि कृत्वा स्वयं निलीनाः पाटी किं चेष्टते इति विष्वगुत्पश्यन्तस्तिष्ठेयुः। अथवा, यदासौ सर्वाणि पचनपरिवेषणादिकृत्यजातानि कृत्वा क्लाम्यन्ती विश्रान्तिसुखपरा साचीकृतस्वापघना पक्षोपरिनिक्षिप्तान्यपक्षः शैलराज-

शिशुरिव पार्श्वैकायप्रकल्पितावनमसाबूलैकगृहप्रदेशा दीर्घदीर्घायमाणदारुण-घुरणावर्तनपरायणा सुखं स्वपिति तदा उच्चैःस्तरामाक्रुश्य शब्दायन्तो बाला निद्राभङ्गमाचरेयुः। अताहो! तर्णकं बन्धनादुन्मोच्य महानसं वा प्रवेशयेयुः। गां वाऽन्यदीयगोष्ठमाटीकयेयुः। यदि नामैवं क्रमो भवति, अहं पृच्छामि, कस्य वा कोपो न भवेत्। तदा ऊर्ध्वज्ञुः पाटी शय्योत्थायं शिथिलचेलाञ्चला समुत्थाय कृतोन्मेषरोषा क्रोधलिङ्गस्फुलिङ्गायमाननारका भीनकारमाक्रोशन्ती रे रौण्डात्मजाः! किमिति मामेवमाबाधध्वम्, किमेकयाविपूलिकया नाशं न गमिष्यथ। रे! रे! कौलटेराः! कुतो रे मदीयं जाठरमनलमित्थमुत्थापयत। शनयः! बान्धकिनेयाः! पीडाः! किं वो मृत्युर्नायाति। तुण्डं पश्य रे। दग्धोदरं कुसूलपूरमाकण्ठमशितव्येन मनोहत्य पूरयित्वा अपयाथ चेद्पयात नाम रे। दास्याः पुत्राः! नाशवन्तो भविष्यथ। मौसलाः! भस्मसाद्भविष्यथ हताशाः। हे चिताधिरोहिणः, जीर्णभूयं प्रयास्यथ। दुर्जाना दौर्भागिनेयाः! चपलाः! वटवः! तिष्ठत। तिष्ठत। मत्तमहिषा इव प्रतिगृहं प्रतिचत्वरं प्रतिमठं वेदिकादर्शं लोलुठ्यमानाः किं तूष्णीकामासितुं नेशिध्वे। तिष्ठत। तिष्ठत। पुनरपि दुर्जठरदुष्पूरणायागन्तव्यं खलु। तदा पश्यत। किं भविष्यतीति। किमेतावता इति सुरभिमुद्रां प्रदर्शयन्ती अकालघनगर्जितमिवानभ्रा गौरिव शापवृष्टीश्चेलक्रोपं वर्षुकायेत वृद्धा। तदा बालाः प्रातः प्रालेयावनम्रवेणुकरीरा इव कपटं प्रह्वभावमभिनयन्तः अलक्षितं केऽपि कफोणिं प्रदर्शयन्तः शनैः शनैरेकैकशः समागन्तवो मन्तुमिमं क्षन्तुमर्हति पाटीति अपाजेकृत्य प्राध्वं प्रार्थयेयुः। पाटि! पाटि! अद्य क्षमस्व तावत्। न हि वयमागस्कृताः। वाताभिहतः कवाटः स्वयमेवार्गलितो बभूव। तर्णको मातरमन्विष्यन् स्वयमेव बन्धनादात्मानं मोचितवान्। नास्माभिर्मोचितः। पलालं जिघत्सुर्गौरन्यदीयगोष्ठमभितश्चक्राम। वयं दीना बालाः किं करवाम। किमिति अकाण्डे पाटी अस्मभ्यं क्रुध्यति। वयं भवत्याः पौत्रभागधेयानि खलु। रे! रे! शङ्कर! पूर्वेद्यु पर्यायात् प्राप्तः स्थिरवासर इति रात्रौ

परिणतपाटीहस्तपरिष्कृतो लाशुनिकः साम्भारः, गोलालुमया घृतपक्का भ्राष्ट्राः कियदिव स्वादवः ! रे ! रे ! देवानां प्रिय ! किमरे त्वं वेत्सि ! कदलीनालदधिकोशम्भरी कियदिव स्वादीयसी ! हे हे खट्वारूढाः ! किं यूयं जानीथ। अस्मत्पाटीपाणिपरिकल्पितो जम्बीररसमिश्रः सूक्ष्म-तीक्ष्णकोपदंशो भोजनकंशा कथमिव ज्योगासीत्। रे रे, किं बहुना। यद्यत् पाटीकरेण परिपक्वं तत् सर्वम् अमृतम् ! अमृतम् ! स भगवान् तदीयं स्वादिमानं वेद। एवं बालेषु जरतीस्तोत्राध्यायपारायणपरायणेषु दीना अस्मज्जरती प्रोत्सारितधूमलेखा द्यौरिव प्रशान्तमन्यूत्पीडा—हे हे वत्साः ! किमिति पटपटात्कारं ललाटंतपे तिग्मकरे तपति बहिः सञ्चरथ ! कुत्रापि प्रच्छायशीतले प्रदेशे सुखं स्वपितेति व्याहरन्ती अन्तर्गृहं प्रविशेत्। "शैत्यं हि यत्सा प्रकृतिर्जलस्य"। एवं जरत्यां निवचनेकृत्यापगतायां बाला नैजं कापेयकलापटिमानं वचसा हासेन मिथः समुपमर्दनेन च यथार्थयन्तो विकत्थनपरा अदर्शितलांगूलचेष्टा एकद्वेषु दिवसेषु परं साधुशीला भवेयुः।

बालेष्वन्यतमो गोपालः। स विनोदप्रियः परिहासशीलः। कदाचित् कांचन विनोदकेलिं कर्तुमियेष। तत्प्रहसे सवयोभिः सह द्वन्द्वं मन्त्रयित्वा वचनमित्यमुत्थापयामास। पाटि ! पाटि ! (असौ किल सर्वलोक-साधारणी पितामही) नगरपालनसभायामेकं स्थानमङ्गभूतानां विविक्त-मास्ते। तच्च पौरजननियोजनायत्तम्। नियोजनं च नातिचिरात् संपत्स्यते। प्रातिस्विकतया तत् स्त्रिया निश्चप्रचम्। न कोऽपि पुरुषस्तत्र नियुज्येत। नगरपालनसभाङ्गता हि पौराणां हृदये महतीं महनीयताबुद्धिमापादयति। तच्च साधारणपौरजनदुरवापम्। प्रार्थितदुर्लभम्। बहुजनसंमतिमपेक्षते। मन्ये पाटी सर्वजनविदिता। भवत्यां सर्वेऽपि बद्धादराः। कुतः पाटी तत्स्थानाय न प्रयतते। यदि नाम पाटी प्रयतेत नियतं अत्रः करस्थः। लोके सर्वेऽपि धनिका महान्तो भवत्यां प्रियंभावुकाः सुमनीभवन्ति। वयं बालाः सर्वेऽपि एकमतयो भूत्वा साहाय्यकविधया

अत्र परिश्राम्यामः, भवतीं च नगरपालनसभाया अङ्गभूतां दिदृक्षामहे। इति। पाटी किञ्चिद्विवास्मयत। बालाश्च—उत्सहतां पाटी। वयमपि अत्र प्रोत्सहामहे। एवमहंयूनां यूनां समाजे गभीरधीरं गिरमुदीरयति पाटी कञ्चन निश्चयमणिं हृदयपेटिकापुटे निधाय "भवतु" इति वचनं किञ्चिदुदञ्चयाञ्चकार।

बाला जरतीप्रधानावलम्बभूता इतस्ततो वृन्दैरुदचरन्त। प्रतिदिनं आयतीगवं प्रक्रम्य आतिष्ठद्गु नक्तं रजःसंतमसे देशे सासद्यमानाश्चर्च्यमाणाश्च शुभंयुं वृत्तान्तमिमं सर्वपथीनमातेनिरे। स च समाचारो दवाग्निरिव सहसा दिङ्मुखेषु प्रासरत्। स च सविस्मयं सकुतूहलं सर्वैः समाकर्णितः। बालाश्च नियोजनसंमतिदातॄणां नामधामादिकं जिज्ञासवो बलवदिवायतिषत। महदिवान्दोलनमभूत् तादृशम् यथा सुब्बुपाटी विना प्रतिरोधं सुखं सभाङ्गतया नियुक्ता भवेत्। वस्तुतस्तदानींतनो दशाविपाकस्तादृशो यथा न कोऽपि नामोपरोधः समलक्ष्यत। हा! विना भगवन्तमेकं सर्वेश्वरं कतमद् वस्तु विधिना सृष्टेषु ईषद्दोषं विना संलक्ष्यते। तत्रापि केचन पुरोभागिणः स्वयं प्रादुरभूवन्। एवं मिथो विचिकित्सां चक्रिरे। नगरपालनसभायां सुब्बुपाटी जरती किमियम् आचरिष्यति। किमेषा जानाति। कूपमण्डूकीयं निर्जले देशे शफरीव निसर्गचपला किं करिष्यति। केयं कालस्य कुटिलता। कुतो नाम अम्मुकुट्टी तूष्णीमास्ते। कदाचित् नायं विषयस्तस्याः कर्णजाहमगाहत। अन्यथा नैव शयाना भवेत्। इति सत्वरं गत्वा तामिमं वृत्तान्तं प्रबोधयामासुः। विना विलम्बम् अम्मुकुट्टी नगरपालनसभायाः स्वयमेव सभ्यतया नियोक्तव्येति सभाध्यक्षस्य पुरः स्वकीयं प्रार्थनापत्रं समर्पयामास। अहो! किं ब्रूमः। एषा अम्मुकुट्टी पतितदशना। पलितकेशा। विगलयौवना। गलितरूपा। बाल्येऽसौ वक्कयिणी नृत्यकलायां कृतहस्तेति प्रथितासीत्, तदात्वे च बंहीयसां यवीयसां हृदयमावर्जितवती। बहूनि पारितोषिकाणि प्राप्तवती। विपुलं धनं चार्जितवती। अहो धनस्य वा कामस्य वा को नामाविषयः। धनेन किं

दुःसाधम्, किमपि कार्यं कर्तुमकर्तुमन्यथाकर्तुं तत् प्रभविष्णु खलु। सुब्बुपाटी जनुषा दरिद्रा। धनेन विहर्तुं सा सुतरां न शशाक। वस्तुतो नियोजितारो गुणग्राहिणः। ते जानन्ति खलु कनकायसोस्तारतम्यम्। सुब्बुपाटी प्रत्येकमेकैकमपि नियोजयितॄमहाभागं दृष्टवती। अनुनीतवती। एकैकोऽपि तस्या एव स्वकीयां संमतिं प्रत्यजानात्।

अम्मुकुट्टी। किमिदानीं कर्तव्यम्। यं यं ददर्श स सर्वोऽपि जरतीपक्ष एव स्थितः। नीरसा अनुनयवाचः फलाय न कल्पन्ते स्म। तस्याः सहकुर्वाणास्तां तादृशीं दृष्ट्वा "किमत्र चिन्तनीयम्। यत् प्रतिविधातुं शक्यम् तदाचरितव्यम्। गम्यतां गृहान्तः। उद्घाट्यतामायसी पेटिका। गृह्यन्तां सहस्रमितानि रूपकाणि। बहिरागम्यताम्। दृश्यतामसौ गर्भपोटा दासी जरती कां दिशं कांदिशीकी पलायत" इति सपद्येव तस्याः प्रतिनिधयो निश्चक्रमुः। प्रतिनियोजितारमुपजग्मुः। धनाञ्जलिं प्रदर्शयामासुः। काळः कुटिलः। दौर्भिक्ष्यं लोकमधिशास्ति। 'यदि याच्यते विना 'न'-शब्दं नान्यः शब्दः पुरःसरति। जनाश्च क्षुत्क्षामकण्ठाः। क्षुच्च दवाग्निरिव समिन्धे। लोको रिक्तः। किं कुरुताम्। चिरमिवाचर्विततृणपूलानाम् अपीतपानीयानां गवां सरोदर्शनमिव जनानां वक्त्राणि स्वयं विवृतानि। हस्ताः स्वयं प्रसृताः। धनानि चुलुकीकृतानि। संनिपातज्वरे प्रज्ञाभङ्ग इव सर्वा अपि जरतीपक्षे कृताः प्रतिज्ञाः पङ्कावमर्दं रसातलमवमर्दिताः। जरतीकथैव विस्मृता। प्राङ्मुखनदीप्रवाहाः प्रतीपं प्रवृत्ता इव लोका अम्मुकुट्टीपक्षमाद्रियन्ते स्म। वयमेकं चिन्तयामो दैवमन्यत्तु चिन्तयेत्।

अहो जरत्या बालाः किं कुर्वताम्। ईदृशमतर्कितोपनतं विपर्यासं दृष्ट्वा परं व्यमनायन्त। बालभावानुगुणमात्मीयं करकौशलं प्रतिनिधीन् प्रति प्रदर्शयामासुः, धूलीमुष्टीः प्रचिक्षिपुः। लघुशिलाखण्डान् पातयामासुः। उच्चावचं निन्दितुं प्रावर्तन्त। स्वकीयैरकर्कशैरर्भककरैर्यत्कर्तुं शक्यम् तत् प्रतिनिधिभ्यः संभावयामासुः "फट्ट फट्ट फट्ट" इति शब्दः शुश्रुवे। तेऽपि "अस्मदीयमिदं प्रतिगृह्णीत" इति सवृद्धिकं तत् प्रत्यर्पयामासुः।

नियोजनसमयः संनिकर्षमयासीत्। संक्षोभोऽन्यादृशः समवर्धत। कोलाहलो महानासीत्। किमिदानीं कर्तव्यम्। बालाः सममिलन्। उपरि कर्तव्यं कार्यजातं विममृशुः। जरतीं प्राबोधयन्। तत्र तत्र आत्मीयाम् आर्हन्तीमधिकृत्य उपन्यासानारचयितुम्। जरती च कूपोपकण्ठेषु नदीतीरेषु आलयेषु चत्वरेषु समानात्मधर्माणां परिणतवयसां नारीणामन्येषां च पुरत आत्मीयचतुरिमातिशयमन्तरेण निःसङ्कोचं धीरधोरियं सुधीर-मुदीरयामास।

हन्त! नियोजनदिवसः समुपनतः। अथ सुब्बुपाटी स्वीयेनैव पाणिना रसवत्तराः सुखोष्णा ओष्ठावलोप्या मृद्वीः पार्वणचन्द्राकाराः "इड्डलिकाः", घनानि मधुराणि कदुष्णानि सुगन्धीनि "काफी"पेयानि, गुडधानाः, अन्यानि च स्वादीयांसि खाद्यानि सम्बभार। सर्वेभ्यो यथा-भिलषितं परिवेषयामास। अवशिष्टानि संमतिप्रदानस्थलत्वेन परिकल्पितं पटमण्डपमासादयामास। अम्मुकुट्टी तु नगरे विद्यमानान् सर्वानपि मोटार-शकटान् अश्वशकटान् गोशकटान् द्विचक्रिकाः प्रदेयाधिकभाटकप्रदानेन स्वाधीनीकृतवती। बहूनि नवनवानि चित्तावर्जकानि वस्तूनि सज्जी-चकार। संमतिप्रदानसमयश्च १९३६-७-४ तमे दिवसे प्रातर्युगान्तरमधि-रूढे भानौ पञ्चनाडीभ्यः परं निश्चितः। आघोषणपत्रिकाः वीथीषु चत्वरेषु आलयेषु प्रतिभित्तिप्रदेशं संलग्नीकृताः। गोशकटा अश्वशकटादयः प्रति-वीथि निबिडमनमितस्ततः संचरन्ति स्म, धावन्ति प्रतिधावन्ति च। संमति-दातार आगताः प्रगताश्च। अन्तराले उदासीनाश्च पौरा जरत्यै अन्यस्यै च कति संख्येति प्रतिव्यक्ति अनुयोगपरा बभूवुः। कथमपि नियोजनविधि-र्निष्प्रत्यूहं समपद्यत। कीदृशः परिणामः। सुब्बुपाटी २२३ संमति-पत्रिका लेभे। अम्मुकुट्टी तु २२५। अहो भावुकाः। किमतः परं जरती-प्रतिवादिन्याः कुतूहलातिरेकं प्रति वक्तव्यम्। अन्यादृशः कोलाहलः। अदृष्टपूर्वः समाडम्बरक्रमः। "अम्मुकुट्टी अजेजयीत्" इति एकस्वर एकाकारो जयमयः शब्दः प्रतिक्षणं व्यभ्राम्यदभ्रान्तरे। घोषयात्रा विप्रसमाराधनम्

संगीतगोष्ठी नक्तमार्गेयविनोदाः सुगन्धिचन्दनरसपृषतासेचनं पुष्पहारः अन्यान्यानि च समधिकेन आडम्बरेण समपद्यन्त। अम्मुकुट्टी च यथा-समुदाचारं नगरपालनसभ्यतां प्राप।

तपस्विनी सुब्बुपाटी किं कुरुताम्। बाला नेषदपि सुखायन्ते स्म। पाटि! नास्माभिः शान्तैर्भवितव्यम्। नियोजनविधिरन्याय्येन प्रावर्तत। व्यवहारो न्यायाधिकरणे विचारश्रेण्यधिरूढ आधातव्यः। वयं तु साक्षिणः। इति जरती च तथाकरणं समीचीनमाकलयन्ती तथैवाचचार। व्यवहारो महता समारोहेण समपद्यत।

## विवादशरीरम्

"नियोजनविधये निश्चिताद्दिवसात् प्राग्दिने प्रतिवादिनी निर्भरासूया-हेतोः सान्द्रप्ररोहद्रोहबुद्ध्या च संमतिदातॄणां दृष्टौ बुद्धयौ च यथा वादिनी लघ्वी भायात् अलक्ष्यतामतिश्च समुत्पद्येत तथा कर्तुं विहितोद्यमना स्थूल-स्थूलैरक्षरैर्विलिखितेन "मह्यं संमतिं दत्त,—सुब्बुपाटी" (Vote for me Subbupati) इति वाक्येन समुपेता बृहतीराघोषणपत्रिकाः (Placards) चत्वारिंशदधिकानां अक्ष्णा, पादेन, पुच्छेन, विकलानां शुनकानाम् अतिश्वीनां ग्रामसूकरीणां गर्दभीनाञ्च उभयोः पार्श्वभागयो-र्दृढबद्धं लम्बयित्वा तेषां पुच्छाग्रेषु सरन्ध्रचतुरस्रत्रापुषकपात्राणि च आवध्य वीथीषु रथ्यासु पल्लीषु राजपथेषु च प्रतीपं विप्रतीपमितस्ततः परितो विद्राव्य सञ्चारयामास। अयं च क्रमः, वादिनी सशपथमभिदधाति, नियतं महतोऽपयशःप्रख्यापनस्य हेतुरासीत्" इति। प्रतिवादिनी—"सर्वमिदं मिथ्याकल्पनोपज्ञम्। जरतीयं सभाङ्गतया प्रख्यापनं नार्हति, परिणत-वयस्कत्वात्। यदि नामाधिकरणिकेभ्यो रोचते, पुनरपि नियोजनविधिः प्रकामं प्रक्रमताम्। न मे विसंवादः। शुनकादिष्वाघोषणलंबपत्रिका-प्रचारणं तु जरत्या आत्मानं बहिः प्रकाशयितुं स्वयमेव कृतमश्लीलं कृत्यम्। नहि वयं तत्रापराध्नुमः। नाप्यस्माकं तत्र कोऽपि संबन्धो विद्यते"। इति॥

वादिनी। एकं मदीयं संमतिदानाग्रं गृध्रोपग्रहं निगृह्य प्रसादोपरि निगूढं प्रतिवादिनी निक्षिप्तवती। अन्यमेकं प्रलोभ्यान्तगृ हं निरुद्धवती। चत्वारिंशतं धनेन क्रीतवती। तान् संतर्प्य वशीकृतवती।

वादिनीपक्षे न्यायवित्।—प्रतिवादिनी कुलटा। स्वैरिणी। अनक्षरा। नैवार्हति नियोजनम्।

प्रतिवादिनी-न्यायवित्।—इयं जरती इङ्गुलिकासंभरणविद्यां विना नान्यज्जानाति। पतितदशना। स्खलद्वाक्। अनक्षरा। न सुतरामर्हति नियोजनम्।

### व्यवहारनिर्णयः

सर्वेऽपि विवादा उभयतः सप्रमाणं निरूपिताः। सादरं च समाकर्णिताः। साक्षिणश्च विचारिताः। वादिनीं लघूकर्तुं यच्छुनकादिसंचारणं प्रतिवादिन्या कृतं तत्सत्यमिति विश्वसिमि। चत्वारो हायनाः सभ्यताया अवधिरिति निर्दिष्टम्। एतावता समयेन ईषदूनाश्चतुर्हायना व्यतीताः। द्वित्राणि दिनानि अवशिष्टानि, तानि वादिन्या सुखमनुभवितुमनया अधिकरणसभया निर्णीय आदेशः क्रियते।

— ——

# भक्तिः

( पूर्वानुवृत्तिः )

[ निबन्धकः—गुरुवर्यः श्रीनडादूर-श्रीकृष्णमहाचार्यः ]

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।

नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ गी. ९. ७४.

इत्यनेन भजनप्रकारमाह भगवान् यशोदाकिशोरः । अत्र चकारात्—

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।"

इति श्रीभागवतोक्तवन्दनसहचरितश्रवणाद्यपि बोद्धव्यम् ।

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥"

इत्यनेन भजनस्वरूपमुपदिशन्नवमाध्यायमुपसंहरति । मयि सर्वेश्वरे भक्ताभीष्टदातरि, अनवच्छिन्नगङ्गाप्रवाहवत् मय्याविष्टमना भवेत्यर्थः । सर्वदा चञ्चलम् अनेकबाह्यपदार्थासक्तं मनो झटिति मय्यावेशयितुं न शक्नोषि चेत्तर्हि मद्भक्तो भव ।

"भजनं भक्तिरित्युक्तं वाङ्मनःकायकर्मभिः ।

भज इत्येष वै धातुः सेवायां परिकीर्तितः ॥

तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ।"

इति स्मृत्युक्ततत्साधनभूतां भक्तिं कुर्वित्यर्थः । साधनभक्तिश्च—

"सुरर्षे विहिता शास्त्रे हरिमुद्दिश्य या क्रिया ।

सैव भक्तिरिति प्रोक्ता यया भक्तिः परा भवेत् ॥"

इति वचनाद्भगवदर्था क्रियैव । तत्क्रियामेव निर्दिशति मद्याजीति । मद्-यजनकरणशीलो भव, षोडशोपचारादिभिः पूजाविधानैः प्रत्यहमेककालं

द्विकालं वा मम मूर्तिमतिप्रीत्याऽर्चय। कर्तृत्वाभिमाननिवृत्तये मनो-वाक्कायैर्मह्यं प्रणामः कर्तव्यः इत्याह—मां नमस्कुर्विति।

"सर्वं त्वदीयं न ममास्ति किंचिद् अहं त्वदीयो न ममाहमस्मि"

इति न्यासदशक-न्यासविंशति-'जितं ते'-स्तोत्राद्युक्तप्रकारेण मयि सर्वस्वं समर्प्य स्वाभिमानं त्यजेत्यर्थः।

"द्व्यक्षरं तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम्॥"

इति भारते व्यासोक्तेः। साष्टाङ्गप्रणामं कुरु।

"वैकुण्ठं खण्डपरशुं भगवन्तं भवच्छिदम्।
प्रणिपत्य यथान्यायं न संसारे पुनर्भवेत्॥"

इति प्रणाममाहात्म्यं वामने प्रह्लादेनोक्तम्। वैष्णवधर्मे च—

"नम इत्येव यो ब्रूयाद् मद्भक्तः श्रद्धयाऽन्वितः।
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद॥"

इति। एवं कृते सुशकं मयि मनो नियोक्तुमित्याह—एवमुक्तप्रकारेण आत्मानं मनः मयि युक्त्वा मत्परायणो मदेकशरणः मामेव एष्यसि इति भक्तिप्रकारानुपदिदेश। एवमेव भक्तिं विषयीकृत्य तत्र तत्राध्यायेषु समुपन्यस्तं भगवता वासुदेवेनेति रसिकधुरीणाः सर्वेऽपि जानन्ति। श्रीमद्भगवद्गीता भक्तिविषयिणीत्येव सुवचम्। परमभागवतामेसराश्च भक्तवर्या भक्तिमेव सर्वत्र याचन्ते स्वभक्त्यतिशयञ्चाविष्कुर्वन्ति तत्र तत्र। ध्वन्यालोकाख्यालङ्कारग्रन्थप्रणेता श्रीमदानन्दवर्धनाचार्यः विरोधा-लङ्कारेणार्थान्तरसंक्रमितवाच्यस्य ध्वनिप्रभेदस्य संकीर्णत्वमुपपादयन् स्वकृत-मिदं पद्यमुदाहरति—

"या व्यापारवती रसान् रसयितुं काचित्कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम्॥

इति। एवमेवान्ये महाकवयः। भीष्मो युधिष्ठिरं प्रति—

"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा॥"

इत्याह। "भक्त्यैकलभ्यः पुरुषोत्तमोऽसौ जगत्प्रसूतिस्थितिनाशहेतुः" इति 'जितं ते'-स्तोत्रीयद्वितीयभाग उच्यते। श्रीमन्मध्वाचार्यमतावलम्बिनां मतमपि "मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधन"मिति निरुच्यते।

"जन्मान्तरसहस्रेषु तपो-दान-समाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥

इति च प्राचीनवचनम्।

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतस्सा मे हृदयान्नापसर्पतु॥

इति प्रह्लादवचनं विष्णुपुराणे। श्रीपराशरोऽप्याह—

"सत्वासक्तमतिः कृष्णे दश्यमानो महोरगैः।
न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः॥"

इति। "नास्य भक्तात् प्रियतरो लोके कश्चन विद्यते" इति च मोक्षधर्मे नारायणवचनम्। भक्तेः फलमुक्तं विष्णुधर्मे—

"अश्वमेधसहस्राणां सहस्रं यः समाचरेत्।
नासौ तत्फलमाप्नोति मद्भक्त्या यदवाप्नुयात्॥"

इति। एवं भक्तिमहिमा भक्तमहिमा च मनीषिभिस्स्वयमेवाभ्यूह्यः। तत्तादृशी भक्तिर्नवविधा प्रोक्ता श्रीभगवतेत्युक्तपूर्वमेव। श्रवणकीर्तनादिषु भक्तिप्रभेदेष्वेकैकेष्वपि निष्णाताः परमं भक्ता विलसन्तीति सर्वे जानन्ति।

"श्रीकृष्णश्रवणे परीक्षिदभवद् वैयासकिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने।
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्ये च सख्येऽर्जुनो
देवस्यात्मनिवेदने बलिरभूत् सर्वस्य संपूजने।

इति। भगवद्भक्त्या निर्मलस्वान्तानां पश्चोक्तभक्तानामैतिहासिकयः कथा विदितचरा एव सर्वेषाम्। भक्तिप्रियः केशवः। तथा चोपवर्णितम्—

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम्।
कुब्जायाः कमनीयरूपमधिकं किं तत्सुदाम्नो धनं
भक्त्या तुष्यति केवलं न तु गुणैर्भक्तिप्रियः केशवः॥

स्पष्टोऽयमर्थः। भगवति परमानुरागरूपा या भक्तिः सैव अस्यावश्यकी न तु जात्यादयो गुणाः। श्रीमान् राघवो भक्त्या शबर्या वितीर्णानि फलानि गृह्णन् सानुग्रहमेवमुवाच—

"यज्ञ-दान-तपोभिर्वा वेदाध्ययनकर्मभिः।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः कदा॥
तस्माद्भामिनि वक्ष्येऽहमिदानीं भक्तिसाधनम्।
सतां सङ्गतिरेवात्र साधनं प्रथमं स्मृतम्॥
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः।
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः॥" इति

भगवानपि सर्वव्यापको भक्तकामकल्पद्रुमो भक्तेच्छारूपसहकारि-कारणेनास्यां भूमौ साधुपरित्राणादिकार्यं कर्तुं मत्स्याद्यवतारेण प्रादुर्बभूव प्रादुर्भविष्यति च। तत्र प्रमाणं च

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे॥"

इति गीतायामेव गोपकन्यासुजङ्गेन सङ्गीतम्।

"वासुदेवस्स्वभक्तेषु वात्सल्यात्तत्तदीप्सितम्।
अधिकार्यानुगुण्येन प्रयच्छति फलं बहु॥" इति

"उपासकानुगुण्येन भजते मूर्तिपञ्चकम्।
तदर्चाविभवव्यूहसूक्ष्मान्तर्यामिसंज्ञकम् ॥"

इति च सर्वदर्शनसंग्रहीयरामानुजदर्शने भगवतो नानात्वं वर्णितम्।

"चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥"

इति रामतापनीयोपनिषदि।

"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥"

इति च गीतायाम्। उपासनासौलभ्यार्थं रामकृष्णाद्यवताररूपेण वा शिला-दारु-लोहादिमयदिव्यमङ्गलविग्रहादिरूपेण वा भगवान् विश्वमूर्तिः परमात्मा तावत् तत्तदुपासकधारणाशक्त्यनुसारेणोपासनीयो भवति। एवं भगवद्वाच-कादीनामपि नाम्नाम् अनेकोपायसाध्यपापनाशादिरूपं कार्यं तन्नामोच्चारण-मात्रेण भवति। भगवन्नामग्रहणेन पापः अजामिलाख्यधरणीदेवो विमुक्तिं गतः। "भक्तिरेवैनं वर्धयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषः, भक्तिरेव भूयसी" इति श्रुतिश्च श्रूयते। भक्त्या केवलं श्रीकृष्णः कुचेलमुनये धानामुष्टिमुचे दत्ते स्म वित्तेशताम्। यदप्याहुः श्रीमन्नि-गमान्तदेशिकवर्याः—

"देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धानामुष्टिमुचे कुचेलमुनये दत्ते स्म वित्तेशताम् ॥" इति।

"कामाद्गोप्यो भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।
सम्बन्धाद्वृष्णयस्स्नेहाद्यूयं भक्त्या वयं नृप ॥"

इत्यादिवचनानुसारेण भगवद्विषयकसकलभावानामपि मोक्षसाधकत्वमवगम्य पुष्टिमार्गेण च तत्तद्भोगाननुभवन्तः वासुदेवस्सर्वमिति सर्वत्र कृष्णमेव भावयन्तो नित्यानन्दमनुभवन्ति भक्ताः। किं बहुना वेदशास्त्रपुराणेतिहास-काव्यादीन्यखिलान्यपि भगवद्भक्तिमेव व्यञ्जयन्तीति सर्वे भावुका जानन्ति। यादवचक्रवर्ती चाह "वेदैश्च सर्वैरहमेव वेद्यः" इति।

"वासुदेवपरा वेदा वासुदेवपरा मखाः।"

"वेदे रामायणे चैव पुराणे भारते तथा ॥

आदावन्ते च मध्ये च हरिस्सर्वत्र गीयते ॥"

इति श्रीमद्रामानुजमुनयः श्रीमति वेदार्थसंग्रहे अनवधिकातिशयासंख्येय-कल्याणगुणालयं स्वसङ्कल्पप्रवृत्तसमस्तचिदचिद्वस्तुजाततया सर्वस्यात्मभूतं प्रतिपाद्य, तदुपासनं साङ्गं तत्प्रापकं प्रतिपादयन्ति शास्त्राणि" इति। प्रह्लाद-नारद-पराशर-पुण्डरीकव्यासाम्बरीष-शुक-शौनक-भीष्म-दाल्भ्यरुक्मङ्गदार्जुनप्रभृतयः परमभागवता असंख्येया श्रूयन्ते भगवद्भक्तियुक्ताः। कुलशेखर-रामदास-जयदेव-नामदेवादीनां भक्तानां चरितानि भक्तमालादि-ग्रन्थरत्नेषु द्रष्टव्यानि। दाक्षिणात्येषु च वैष्णवाः भूतयोगि-सरोयोगि-महदाह्वय-भट्टनाथ-श्रीभक्तिसार-भक्ताङ्घ्रिरेणु-परकालयतीन्द्रमिश्र-श्रीमत्परा-ङ्कुशादयो भक्ताः, श्रीवागीशाद्याः शैवभक्ताश्चासंख्येयास्तदा तदा भगवद्दर्शरव-तीर्थं भक्तिरसनिष्यन्दिनीभिः श्रोत्रसुखाभिः स्तुतिभिर्भगवन्तं संस्तुत्य कलिदूषितानखिलानन्वगृह्णन्निति च श्रूयते। एवं स्त्रीरत्नेषु, तिर्यग्जन्तुषु च भक्तिभरिता भगवन्तमर्चयामासुः परां काष्ठां श्रेयसः प्राप्नुवन्ति स्मेति च श्रूयते। लोकेऽस्मिन्नपि भगवद्भक्तिभरितान्तःकरणा महान्त-स्तत्र तत्र विलसन्ति। येऽप्यन्यमतावलम्बिनो निरीश्वरवादिनस्तेऽपि भगवद्ध्यानेनैव पूता भवन्ति। येन केनापि वा कारणेन, कार्येण वा, इच्छयाऽनिच्छया वा सर्वे प्राणिनः कदाचिदपि वा भगवन्तं स्मरन्त्येव। भगवद्भक्तेर्न देशकालावस्थावयोरूपाणि निर्दिश्यन्ते। भगवद्भक्तिमार्गोप-देष्टारो महान्तस्तत्र तत्रोपदिशन्ति। तेषामुपदेशश्रवणेन भगवद्भक्तिवर्धन-शीलग्रन्थजालावलोकनेन च सर्वेऽपि भगवति भक्तवत्सले सर्वलोकशरण्ये परां भक्तिमवश्यं कृत्वा सर्वानन्दानामुपरि वर्तेरन्निति सत्सम्प्रदायमार्गो-पदेशिनामाचार्यवर्याणामाशयः ॥

# समालोचनम्

ब्रह्मविद्याख्यत्रैमासिकपत्रिकायाः प्रथमा सञ्चिकाऽस्माभिः प्राप्ता। सर्वाङ्गशोभनेयं पत्रिका, विश्वसिमः—अप्रकाशितानामत्युत्तमानां महामूल्यानां चादर्शानां क्रमशः प्रकाशनेन पण्डितसमाजस्य महान्तमुपकारमाधास्यति।

माधवव्याख्या हि ऋग्वेदस्यात्र प्रकाश्यमाना विनैव क्लेशं मन्त्रार्थविज्ञान ऋषिच्छन्दःसूक्तादिस्वरूपविज्ञाने च सुतरामुपकरिष्यति। इदमेवात्र क्लेश· निदानं यदिदानीं संपूर्णेयं व्याख्या नोपलभ्यते, विश्वसिमः प्रियपाठकाः केऽपि यदि मातृकां काञ्चन माधवव्याख्याया उपलभन्ते, तर्हि तत्प्रेषणेन प्रोत्साह- यिष्यन्ति ब्रह्मविद्यासंपादकान्। अडयार ( मद्रास् ) प्राचीन नवीन-मुद्रिता· मुद्रितपुस्तकालयो हि Calolcott. महोदयैः संगृहीतः एवमुपयोक्ष्यमाणो नूनं सुगृहीतनामधेयांस्तानाधास्यति। अतिस्वल्प एव भागः प्राचीनादर्शानां कृतेऽत्र पत्रिकायां सुरक्षित इति महदिदं दुःखमेव तत्त्वगवेषणैकचित्तानां पण्डितानाम्। विश्वसिमः—अन्ततो गत्वाऽर्धांशो विनियुज्येत प्राचीना- दर्शानां कृतेऽर्धांशश्चान्यान्यानामधुनातनानामनुवादसमालोचनादीनाम्। येन सर्व एव स्वतन्त्रबुद्धयः परतन्त्रबुद्धयश्च न वञ्चिता भविष्यन्ति।

दिङ्नागानां प्रमाणसमुच्चयशीर्षकस्तु प्रबन्धः शीर्षदर्शनेनैवमानन्दयति स्म यद् दिङ्नागानां प्रमाणसमुच्चयात् कानिचन सूक्ष्माणि तत्त्वानि स्वतन्त्र- प्रबन्धद्वारात्र संगृहीष्यन्त इति ; परिणामस्तु—प्रमाणसमुच्चयस्य मुद्रापितस्य समालोचनमात्ररूपः पाठविशेषक्रमविशेपादिमात्रमधिकृत्य समालोचनविधया- भिप्रायविशेषमात्रज्ञापनेन यथावशंसितं भविष्यति वा न वेत्यत्र विशेषतः सन्दिह्यते। आदर्शविशेषानधिकृत्य हि संस्करणानि भवन्ति, कथमपि असंस्कृतस्य प्रमाणसमुच्चयस्य यथास्वीयादर्शं प्रकाशनेनोपकृतवतां H. R. रङ्गस्वाम्यय्यङ्गारमहोदयानां धन्यवाद एवास्माभिः प्रथमं कर्तव्यो मन्यते, पाठविशेषपरिवर्तनादिकमपेक्षितं तु संस्कारान्तरद्वारा समालोचका

यदि समानेष्यन्ति, तदानीं मन्यामहे महानेवोपकारः स्यात् पाठविशेष-साधुत्वासाधुत्वविचारे। अनुवादांशे तु समालोचकैः पर्यायपदान्तरं प्रयोक्तव्यमिति मन्यते, रङ्गस्वाम्यभ्यङ्कारमहोदयैस्तु पदान्तरमिति नेदं महते दोषाय भवतीति वयमभिप्रेमः। तत्त्ववैलक्षण्यं भाववैलक्षण्यं च समालोचनसमालोचनेनापि न स्फुरति। विश्वसिमः—ब्रह्मविद्यासंपादका ग्रन्थसमालोचनानां पृथगन्ते स्थानव्यवस्थापनेन स्वतन्त्रप्रबन्धानां स्थाने तेषामवसराप्रदानेन पाठकमहोदयानामितः परं तन्त्रप्रबन्धभावनां नोत्पादयिष्यन्तीति। एन अप्पास्वामिशास्त्रिणो बौद्धग्रन्थसमालोचने महामहोपाध्यायानां विधुशेखरशास्त्रिणामन्तेवासिपदेऽवस्थाय तत्रापि गवेषणशक्तिं प्राप्ताः अन्यतमा मुष्टिमेयेषु बौद्धशास्त्रनिष्णातेषु प्राचीनसंस्कृतपण्डितेषु इति तु वस्तुस्थितिः॥

आश्वलायनगृह्यसूत्रं श्रीदेवस्वामिभाष्योपेतं बहोः कालाद् बहुभिर्मृग्यमाणं संपादकमहोदयैस्सदयं बहिरानीतमिति महदिदमानन्दस्थानम्। विश्वसिमः, सर्वेऽपि प्रियपाठका एतादृशत्रैमासिकपत्रिकाणां संग्रहणेन चिरगोपितानि सुरत्नान्येव संग्रहीष्यन्तीति। वार्षिकमस्या मूल्यं रूप्यषट्कमात्रम्। प्राप्तिस्थानम् ब्रह्मविद्यासंपादकः अडयार ( Adyar ) मद्रास।

## -'नानार्थसंग्रह'स्थ-शब्दानाम्

# अकारादिक्रमेण सूची

( पूर्वानुवृत्तिः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| June, 1937. | १८५९-शकीये ज्यैष्ठे २०श-वर्षस्य २य-संख्या | Vol. XX, No. 2 |
|---|---|---|


## चातुर्वर्ण्यम्

स्वधर्मो नाम स्वजातिधर्मः, स्वाश्रमधर्मः, स्वकुलधर्म इति त्रिधा किल विभज्यते। जातिधर्मा हि नित्या जीविकार्थाः काम्याश्चेति सर्वविदितमिदम्। यजनयाजनाध्ययनाध्यापनादयो हि ब्राह्मणधर्मा येषु यजनाध्ययनदानानि नित्यानि, याजनाध्यापनप्रतिग्रहास्तु काम्याः, यजनाध्ययनदानानि न केवलं ब्राह्मणानाम्, किन्तु क्षत्रियवैश्यानामपि धर्माः। जीविकार्थं तु तेषां युद्धादिकं कृषिगोरक्षावाणिज्यादिकं चेति कर्ममीमांसायां परिषत्पत्रिकायां प्रकाशितायां विशदीकृतम् ॥

कलौ तु क्षत्रियवैश्या द्विजपदवाच्याः सन्ति वा न वेति विषये वादप्रतिवादा बहुश एव तत्र तत्र श्रूयन्ते। वयं तु निश्चिनुमः—अविच्छिन्नपरम्परयोपनयनादिसंस्कारसंस्कृता बहुशो ब्राह्मणा इव तादृशाः क्षत्रियवैश्या दक्षिणदेशेषु विरलविरलाः। उत्तरदेशे तु बहुशः क्षत्रियवैश्या अव्यविच्छिन्नपरम्परयोपनयनादिसंस्कारसंस्कृताः स्वोचितगायत्रीमन्त्रादिजपनिरताश्च दरीदृश्यन्ते। बहुपरम्परापर्यन्तमुच्छिन्नपरम्परा अपि क्षत्रियवैश्या उत्तरदेशेऽपि न, न सन्ति ॥

इदमेवात्र विवादास्पदम्—यद् बहुपरम्परापर्यन्तमुच्छिन्नोपनयनादि-संस्कारा अपि क्षत्रियवैश्यादिपदव्यवहारभाजः किं भवितुमर्हन्ति, उत न ? यदि भवन्ति, तर्हि तेषां पुनरप्युपनयनादिसंस्कारव्यवस्थापनेन द्विज-भाव आनेतुं शक्यते वा न वेति। अत्र च ब्राह्मसंस्कारमीमांसाकारा राममिश्रशास्त्रिणोऽन्ये च तदनुयायिनः सर्वेषां क्षत्रियवैश्यानां बहुपरम्परा-पर्यन्तं द्वित्रपरम्परापर्यन्तं वा विच्छिन्नोपनयनानामपि पुनः संस्कारो न दोषायेति मन्यन्ते। विच्छिन्नोपनयनादिसंस्कारास्सर्वेऽपि क्षत्रियवैश्यादि-पदेनैव व्यवहारमर्हन्ति, न शूद्रादिपदेनेत्यत्र तु कस्यापि सनातनधर्मानु-यायिनो विप्रतिपत्तिः, केवलं पुनः संस्कारे परम्परानियम आवश्यक इति श्रीमदापस्तम्बसूत्रानुयायिनां पारस्करादिगृह्यसूत्रानुयायिनां च निर्णयः। यतस्ततोऽपि परम्परात्रयमनुपनयन एव ब्राह्मसंस्कारो भवितुमर्हति, न तदतिक्रमेऽपि। परम्परात्रयमुपलक्षणं बहुपरम्पराणामिति वादस्तु श्रीराम-मिश्रशास्त्रिणां तदनुसारिणां च, धर्मशास्त्रं विना प्रमाणं श्रुताधिकारिपरित्यागे-नाधिकार्यन्तरकल्पनस्यासांप्रतत्वात्, आम्नायस्य गतिं वक्तुं पारयामः नाम्नायं पर्यनुयोक्तुमिति न्यायेन श्रुतातिक्रमेणार्थान्तरकल्पनस्यान्याय्य-त्वाच्च न क्षोदक्षममिति पश्यामः। सति चैवम्—धर्ममीमांसानिबन्धकाराणा-मेव पक्षोऽस्माकमपि—यदि तेऽपि कलावपि क्षत्रियवैश्यानां सत्त्वमात्रं व्यवस्थापयन्ति, न सर्वेषां पुनरुपनयनादिसंस्कारयोग्यतामविशेषेण।

नहि जातिः कस्यापि केनापि कर्मणा परिवर्तते ; आजानजत्वात्। अन्यथा हि गुणकर्मकृता जातिव्यवस्था, न स्वभावनिबन्धना, इत्यव्यवस्थैव समापद्येत। तदुक्तं कुमारिलभट्टैः—"एकेनैव प्रयत्नेन परपीडानुग्रहादिकं कुर्वतां युगपदेव ब्राह्मण्याब्राह्मण्यविरोधः। सति चैवम्—मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादित्यादिकं ब्राह्मणधर्माधिकारविच्छेदमेव गमयती"ति।

भगवद्गीता हि—क्षत्रियस्य सतोऽर्जुनस्य युद्धाख्ये स्वधर्मे प्रवृत्तस्य भीष्मादिबन्धुवर्गस्याचार्यगणस्य च दर्शनेन—

"कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥"

इति भीष्मादिषु पूजार्हताभावनया दुर्योधनादिषु कृपया "किं मे राज्येन गोविन्द किं भोगैर्जीवितेन वा ।" इति राज्यलक्ष्म्यामुत्कटवैराग्येण शमदमादिब्राह्मधर्माविर्भावेण "पापमेवाऽऽश्रयेदस्मान् हत्वैतानाततायिनः" इति ज्ञानविज्ञानादिसम्पत्त्या च युद्धादुपरतस्य भिक्षाचर्यं ब्राह्मणधर्ममेव स्वस्यापि स्वधर्मं मन्वानस्यापि क्षत्रियत्वं तु न विच्छिन्नम्, न वा ब्राह्मणत्वं प्राप्तमिति विशदयति । अन्यथा हि—"धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" इति "तं तथा कृपयाविष्टमि"त्यनूद्य कथमर्जुनं प्रति क्षत्रियधर्मोपदेशः स्थाने स्यात् । न हि तदैतादृशोऽर्जुनः क्षत्रियो भवितुमर्हति, किन्तु ब्राह्मण एव स्यात्, यदि भगवद्गीताऽपि मन्येत—गुणकर्मकृतैव जातिव्यवस्था, न स्वभावनिबन्धनेति, एवं वदन्तोऽपि वयं न, कर्मणैकान्ततो न जातिपरिवृत्तिरिति वदामः, यतो वयमपि—"तत्र कर्मविशेषेण पुनर्जन्मनि—जायते" इत्युमामहेश्वरसंवादगतेन वचनेन कर्माधीना जातिपरिवृत्तिर्जन्मान्तरे भवति मातापित्रोरपि परिवृत्ताविति पूर्वमेव "हिन्दुधर्मः" इति शीर्षकप्रबन्धे अस्यैव वत्सरस्याग्रहायणसंख्यायामवोचाम । मन्यामहे कुमारिलपादाः —"मासेन शूद्रो भवती"ति ब्राह्मणकर्माधिकारविच्छेदपरमिति वदन्तोऽपि जन्मान्तरे ब्राह्मणजन्माननुवृत्तिमेव मन्यन्ते, न त्वस्मिन्नेव जन्मनि मासं क्षीरविक्रयमात्रेण ब्राह्मणकर्माधिकारात् पातित्यमपि ।

विश्वामित्रस्तु मन्त्रदर्शनशक्तिं ब्रह्मर्षित्वमेव तपोविशेषेणातिकठिनेन प्रापत्, न तु ब्राह्मणत्वजातिम्, इति महाभारतगतार्ष्टिषेणोपाख्याने उपक्रमोपसंहाराभ्यां सम्यगालोचिताभ्यां विषदीभवतीति विश्वामित्रोदाहरणमपि न प्रस्तुतार्थसाधनायालम् ।

जन्मना स्वभावसिद्धस्य चातुर्वर्ण्यस्य पूर्णकलयाऽभिव्यञ्जनार्थमेव हि ब्राह्मणादिकर्मविशेषाः, न तु नूतनस्य तस्योत्पादनार्थम् । तदुक्तम्—

"चित्रकर्म यथाऽनेकै रङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत्स्यात् संस्कारैर्विधिपूर्वकैः ॥" इति ।

अत्र ब्राह्मण्यमिति क्षत्रियत्वादीनामप्युपलक्षणम्, अथवा द्विजत्वमपीत्यर्थकमिति मन्तव्यम् । अभिव्यक्तिर्हि नाम प्रकाशो विद्यमानस्यैवावृतस्याऽऽवरणनिवृत्तिमात्रमपेक्षते, यथा दर्पणादिगता प्रतिबिम्बग्रहणशक्तिः तत्प्रतिबन्धकमालिन्यनिवृत्तिमात्रमपेक्षते, घर्षणादिना । अन्यथा हि घर्षणेन मृन्मयेष्टकास्वपि दर्पणसाम्यं प्रतिबिम्बग्रहणशक्तिर्वा शक्येताऽऽनेतुम् । सति चैवम्—

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥"

इति श्लोकः पूर्वतनजात्यन्तरगुणकर्मभ्यां जात्यन्तरसृष्टावेव भगवतोऽप्यधिकारः, न तु स्वेच्छया । यतो भगवानपि तत्तज्जीवकृतिमपेक्ष्यैव सृष्टौ प्रभवति, न तु स्वेच्छावशात् । अत एवोक्तम्—"तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्" इति तत्तज्जन्मप्रेरकतयैव तस्य कर्तृत्वव्यपदेशः, परमार्थतस्तु न स्वयं कर्तेति ; अन्यथा हि वैषम्य-नैर्घृण्ये भगवति समापद्येते । व्यक्तं चैतद् ब्रह्मसूत्रेऽपि—"वैषम्य-नैर्घृण्ये न, सापेक्षत्वात् तथाहि दर्शनम्" इति बादरायणीये । यत्र द्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-द्वैताद्वैत-केवलाद्वैताचार्याः सर्व एवैकवाक्यतयाऽमुमेवार्थमभिप्रयन्तः—जीवजातिवैषम्यादौ जन्मान्तरकर्मापेक्ष एव भगवतोऽप्यधिकार इति सिद्धान्तमेव साधु मन्यन्ते ।

अशेषनैयायिकमुकुटमणिलालितचरणयुगलानां महामहोपाध्यायानां
कामाख्यानाथतर्कवागीशमहोदयानां

## महाप्रयाणम्*

[ निबन्धकः —श्रीहेमन्तकुमारतर्कतीर्थः ]

अयि भारतभूमि दुर्भगे करुणामर्हसि सार्वलौकिकीम् ।
यदुपैषि मुहुर्मुहुर्व्यथां कृतिपुत्रात्ययतो नवां नवाम् ॥१॥
जननी सुभगा बहुप्रजा जगतीह प्रथितेति भारती ।
तव किन्तु विभूतये शुचां गुणिनः सत्तनयाः सुदुर्भगे ॥२॥
कति नाम न शोकशङ्कवस्तव खाताः प्रतिपर्व मर्मणि ।
अधुना परमेयमाहतिः स्मृतिपान्थः स हि तर्कवाक्पतिः ॥३॥
प्रसितं खलु तर्कविद्यया बुधवन्द्यं मुनिगोतमोपमम् ।
कृतिनं सुतमद्य ते हरन् कुटिलः कालहतोऽहरन्न किम् ॥४॥
अतिदुःसहया शुचाऽनया वयमार्ता भवती तु सुस्थिरा ।
तदियं कृपणे वसुन्धरे ! तव सर्वंसहता न शोभते ॥५॥
मरणं तदखण्डजीवनं न शुचे कीर्तिमतां विपश्चिताम् ।
तनयं गुणमात्रतो धृतं हृदयं मातुरथापि शोचति ॥६॥
अथवा स्तनयित्नुगर्जितं तव शोकार्तसमुत्कटध्वनिः ।
दहनो न तवैव वक्षसो गुरुदम्भोलिविजृम्भितं नु यत् ॥७॥
श्वसनं नु समीरकम्पनं तव वक्षोऽस्थिविदारणं महत् ।
प्रखरातपरौद्रता ध्रुवं तव हाहाकृतिरेव नापरम् ॥८॥
कृपणे ! ननु देवभारति ! प्रतिपालः स वराकि सम्प्रति ।
मरणावधि यस्तवाभवत् परिचर्यापर एकचेतसा ॥९॥

---

* निबन्धोऽयं तत्रभवतां परलोकप्रयाणे शोकप्रकाशार्थं परिषदनुष्ठिते विशेषाधिवेशने निबन्धकेन वाचितः ।

अबुधः किल गोतमो वधूं परसङ्गात् कृतवाञ्छिलामयीम् ।
बहुपण्डिततुण्डघट्टिनां स मुदाऽसेवत तर्कभारतीम् ॥१०॥
रमणीं नवनीतकोमलामिव शय्यासु विलासकोमलाम् ।
उपभुज्य स तर्क-भारतीमनयत् कोविदवृन्दमातृताम् ॥११॥
बहुदोषविदङ्गसङ्गमाहृतदोषामसितां स दोषवित् ।
अबुधैरपदे कदर्थितामनयत् प्रेमवशात् कृतार्थताम् ॥१२॥
बहुपण्डितदंशनव्रणव्यपरोपोचितवक्त्रमारुतैः ।
मृदुपाणितलावमर्शनैरनिशं तां सदयोऽभ्युपाचरत् ॥१३॥
कृपणे ! ननु तर्कभारति ! वत वृत्ता विधवासि सम्प्रति ।
चिरशोकविलुप्तसौष्ठवा मृतकल्पा प्रतिभास्यतः परम् ॥१४॥
विद्वत्सभाजनसभाजनभाजनानामाराधनामुपगतः प्रसभं जनानाम् ।
प्रेत्यापि दैवतसभाजनभाजनं सन् भूयात् सदा स्वकृतिसञ्चितपुण्यलोकः ॥१५॥

---

## कालापयोरालापः

प्रथमः । हंहो श्रीमन्, अद्य कं पाठं गुरोर्गृहीतवानसि ?

द्वितीयः । "अभ्यस्तानामाकारस्य" इत्यादितः पञ्चानां सूत्राणाम् ।

प्रथमः । ब्रूहि तावदस्य पञ्चमस्य च सूत्रस्यार्थम् ।

द्वितीयः । पूर्वतः कार्यं निमित्तञ्चाधिक्रियेते, तेन 'अभ्यस्तसंज्ञकानां धातूनाम् अगुणे सार्वधातुके ( लडादि विभक्तिचतुष्टये ) परे लोपो भवती'-त्यस्यार्थः सम्पद्यते । पञ्चमन्तु "लोपः सप्तम्यां जहातेः" इति सूत्रम् । 'जहातेर्धातोः आकारस्य लोपो भवति सप्तम्यां ( विधिलिङि ) परत' इति च तस्यार्थः ।

प्रथमः । इदानीं दद्यादिति पदं विशेषसूत्रोल्लेखपूर्वकं साध्यताम् ।

द्वितीयः । दाधातोः सप्तम्याः ( विधिलिङः ) प्रथमैकवचने द्वित्वे,

"ह्रस्वः" इत्यनेन पूर्वस्य ह्रस्वत्वे "अभ्यस्तानामाकारस्य"इत्याकारलोपे च दद्यादिति पदं निष्पद्यते।

प्रथमः। एवञ्चेद् दद्यादिनिवद् यथोक्तसूत्रेणैवाकारलोपे जह्यादित्यस्यापि सुसाधत्वेन किमित्याकारलोपार्थं "लोपः सप्तम्यां जहातेः" इति सूत्रान्तरं कल्पितं शर्ववर्माचार्येण ?

द्वितीयः। आर्य, अद्यैव गृहीतपाठोऽस्मीति निःशेषतः सर्वं नाध्यकार्षम्, गुरुणापि मन्ये समयापेक्षिणा विशेषो न स्फोटितः। तत् प्रसीदतु भवान्, करोत्वस्य तत्त्वस्य प्रकाशेनानुग्रहम्, अन्यथा वयं द्वितीयमिव गुरुं भवन्तं मन्यामहे, शिष्यमहत्तरे भवति गुरुरपि विशेषतः स्निह्यतीति जानीमः।

प्रथमः। श्रूयताम्। श्रीमताऽध्यधीतानि सूत्राण्युत्तरमस्य सन्निविशत इति वदामि। "अभ्यस्तानामाकारस्य" इत्ययं तावत् सामान्यत्वादुत्सर्गविधिः। यच्चितस्तार्तीयीकं सूत्रम् "उभयेषामीकारो व्यञ्जनादावद" इति, स खलु विशेषत्वादपवादविधिः। विशेषविधित्वञ्च 'व्यञ्जनादा'विति विशेषणोपादानेन निमित्तस्य सङ्कोचात्। ततश्च "उत्सर्गापवादयोरपवादविधिर्बलवान्" इति न्यायेनाकारलोपं बाधित्वा व्यञ्जनादौ प्रत्यये "उभयेषा" मित्यनेनेकारेण भवितव्यम्। पारिशेष्याच्च स्वरादावेव प्रत्यये आकारलोपस्य विषय इति जह्यादित्यत्र व्यञ्जनादौ प्रत्यये आकारलोपार्थं सूत्रान्तरमावश्यकम्, तच्च सूत्रं केवल'हा'धात्वाश्रयत्वात् सप्तमीमात्रस्य निमित्तत्वाच्चास्यापि सूत्रस्यापवादः। दद्यादित्यादिषु च तत्र दासंज्ञकानां वर्जना 'दभ्यस्तानामाकारस्ये"त्यनेनैवाकारलोपो निर्बाध इति सर्वं समञ्जसम्। अत एव "अभ्यस्तानामाकारस्य" इत्यत्र टीकाकृद्भिरपि लिखितम्—"व्यञ्जनादावीत्वं वक्ष्यति स्वरादौ विधिरयम्" इति। यच्चात्र 'दत्ते धत्ते' इति व्यञ्जनादावप्युदाहरणं तच्च 'उभयेषाम्'—इत्यत्र दाधा-इत्येतयोर्वर्जनाभिप्रायकमिति न किञ्चित्तिरोहितम्।

---

# आयुर्वेदस्य पूर्णावयवत्वम्

[ निबन्धकः—आयुर्वेदमहोपाध्याय-पञ्चकर्मविशारद-
श्रीकुञ्जकिशोरभट्टाचार्यः ]

सृष्ट्वा प्राणिप्रपञ्चं कथमपि हृदये निर्वृतः सृष्टिकर्ता
यावत्तं रोगशीर्णं हृतसकलसुखं दुःखमग्नं ददर्श लोके ।
तावत् स्वेनैव सृष्टैर्विविधगुणभृतैर्मूलगुल्मादिभागै-
रायुर्वेदेन रोगप्रतिहतिमदिशत् प्राङ् नमो मे तदस्मै ॥

सिद्धौ वैद्यकविद्यया सुरपुरे यावश्विनौ पूर्वतः
कृत्तं यज्ञशिरः सुरैरभिहितौ सन्धाय कीर्तिं गतौ ।
यन्नामस्मरणाद् व्यपैति भविनां रोगोच्चयस्तत्क्षणात्
ताभ्यामस्तु नमो ममाद्य सकलक्षेमैकसम्पत्तये ॥

यस्माद् भरद्वाजमुनिः कृपाखनिः सम्प्राप्तवान् वैद्यकबुद्धिमुज्ज्वलाम् ।
तं वासवं प्राणभृतां परायणं नमामि मानोन्नतमुन्नतान्तरम् ॥

क्षीराब्धिमन्थनभवं भवरोगशान्त्यै हस्ते सुधाकलसशोभि नमामयारिम् ।
धन्वन्तरिं शिवपुरीपतिरूपमाप्तं स्वाप्तं श्रयामि सकलाशुभशान्तिदक्षम् ॥

मान्याः सभ्यमहोदयाः, पुण्यसलिलायाः सुरसरितस्तीरावनौ, दान-वीराणां प्रातरावर्त्यंयशसां महाराज-मणीन्द्रचन्द्रनन्दिमहोदयानां दान-शीलतायाः समुन्नतां पताकामिवोद्वहति तदीयजन्मागारचत्वरपरिसरे, रत्नगर्भाया राजमातुः पूतस्मृतिपरिवीतेऽस्मिन् आयुर्वेदमहाविद्यालये आयुर्वेद-कल्याणकामनया समवेतान् वः समालोकयतः प्रसीदतीदं मे सबाह्यमन्तः-करणम् । इतश्चतुर्दशवत्सरेभ्यः प्राग् यदा तदादितया राजर्षेरस्मिन् विद्याश्रमे प्रवेशसौभाग्यमन्वभवम्, तदानीं क्षोदीयसस्तस्य प्रतिष्ठानस्यैवम् अचेतनं विद्यां वितरत् सुहृदार्त्तसेवासदनतारूपं रूपं मनसाऽपि न मया

कल्पितमासीत्, न वा कल्पितोऽस्यामेव कलिकालमहानगर्यामात्मानमार्तसेवायां नियोज्याऽऽयुर्वेदस्य या सफलजीवनीभावः एवमलघुसम्पातसम्मानसुखानुभावश्च ।

आयुर्वेदस्य समालोचनायां चिकीर्षितायामादितस्त एव स्मृतिपथमनुप्रपद्यन्ते, ये तस्य कल्याणमभीप्सन्तः प्राणैः पणैः पर्यचेष्टन्त, आयुर्वेदस्य विजयवैजयन्तीमनामृष्टशुद्धामुन्नमितां संरक्षन्तो भवाम्भोधेः परं पारमासेदिवांसश्च । हा हन्त ! न सन्तीदानीमात्रेयचिकित्सासाम्राज्यस्य मुकुटमणयः श्यामादासवाचस्पतयः, न वर्तन्तेऽद्य शल्यशालाक्यचिकित्साविशारदा धन्वन्तरिकल्पा युगायुर्वेदपितामहाः प्रणाचार्या हाराणचन्द्रचक्रवर्तिनः, न जीवन्त्यद्य पञ्चकर्मचिकित्सायाः पुनः प्रवर्तयितार आर्षायुर्वेदशास्त्रे श्रद्दधानाः स्वाचारनिष्ठाः केदारनाथमहाशयाः, न ध्रियन्ते च पूर्णाङ्गायुर्वेदपुनरुज्जीवकास्त्यागमूर्तयो यामिनीभूषणसेनमहोदयाः । तत्त्वजिज्ञासुभिरभिगम्यानि स्थानानि क्रमशस्तिरोदधन इत्यहो दुष्पूरोऽयमभावः प्राच्यचिकित्सकानाम् ।

## आयुर्वेदस्य प्राचीनत्वम्

नेदं तिरोहितमितिहासं समालोचयतां मनस्विनाम्, यन्मानवसभ्यतायाः समुन्मेषः प्रथमतो भारतवर्ष एव व्यभादिति । अत्रत्या आर्या ज्ञानगरिम्णा बोधमहिम्ना च सर्वासामेव जातीनां मूर्धन्यतया विरेजिरे । यदा तावदन्या जातयः स्वैरं स्वैरं सभ्यतायाः सोपानपरम्परामत्यक्रामन्, तदैवार्या ज्ञानसभ्यनयोर्निःशेषविकाशेन महामहिमान्विताः सर्वोच्चं सभ्यतासोपानमधिकुर्वाणा अभूवन् । यदा चान्या जातय आममांसेन जीवयात्रां निर्वर्तयन्त आसंस्तदैवार्यर्षीणां वेदध्वनिमांसला उदात्ताः कण्ठा भारततपोवनमभिभूतान्यध्वनिकमकुर्वन्, दर्शनानां दुरवगाहं तत्त्वं न्यरूपयन्, स्वां सभ्यतां सर्वत्र समचारयंश्च । तत एवायुर्वेदविषयं ज्ञानमवयवशः पूर्तिमलभत । पवित्रे पञ्चनदतीर्थे पुण्यसलिलायाः सरस्वत्यास्तीरे मानवानामध्यात्मोन्नतये व्याप्रियमाणा आर्या ऐशोपासनाव्यसनिनस्तपोबलेन

अतीतानागतवर्तमानं सर्वमेव करामलकवदपश्यन्। तत एव ज्ञानात्त आयुर्वेदं प्रावर्तयन्निति सर्वथा प्राचीनत्वमभ्रान्तत्वञ्चास्य निर्विवादं। यदाहस्म चरकः—

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा।
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्॥ इति।

भारतीयप्राचीनसभ्यताया अन्यतमं निदर्शनं नामायुर्वेदशास्त्रम्। आर्यर्षीणां ज्ञानभित्तेरुपरि प्रतिष्ठितम्, आचार्यपारम्पर्येण युगपारम्पर्येण चानादिकालसिद्धतया बहुदर्शितायाः सुदृढां भित्तिमुपाश्रित्य वर्तमानम्, जडविज्ञानस्य समुन्नते शिखरे स्थिरपदमद आयुर्वेदमतं न मतान्तरेणातिशाययितुं शक्येत न वा हेतुवादेन व्याहन्येतेत्यव्याहतमनतिशायि चेदं शास्त्रम्। यथोक्तम्—

"पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥" इति।

चरणव्यूहकारा आयुर्वेदम् ऋग्वेदस्योपाङ्गमाहुः स्म। प्राचीनतमेऽस्मिन् ऋग्वेदे आयुर्वेदीयचिकित्साया अत्याश्चर्यमयी विभूतिर्दृश्यते। अश्विनौ युद्धे छिन्नैकपदाया विश्पलाया जङ्घां वियोऽयायसीं जङ्घां युयुजतुः। ऋज्रश्वपरावृजयोरान्ध्यमपनिन्यतुः, घोषां कुष्ठव्याधेर्मुमुचतुः, वामदेवं मातृकुक्षितो बहिश्चक्रतुश्च। अथर्ववेदे दैवव्यपाश्रयं शान्तिस्वस्त्ययनादि, युक्तिव्यपाश्रयम् औषधविधानं सत्त्वावजयश्च दृश्यन्त इत्यतः केचनायुर्वेदमथर्ववेदोपाङ्गं कथयन्ति।

आयुर्वेदस्तन्मतसिद्धा चिकित्सा च

"हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।
मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते॥" ( चरके सूत्रस्थानम् )

जीवनयात्राप्रत्यूहभूतस्य रोगस्य प्रशमोपायश्चिकित्सा। यदा प्रभृति जीवनप्रवाहः प्रावहत् ततः प्रभृत्येव जीवनं नीरुग् विधातुं यत्नोऽपि प्रावर्तत।

पश्वादिसाधारणोऽयं धर्म इति मार्जारादीनां रोगोपक्रमे वनं गतानां यथाज्ञातेन वनौषधिना प्रतिचिकीर्षा परिदृश्यते। एवं पशुचिकित्सार्थं "गजायुर्वेदसंहिता" प्रभृतयो ग्रन्थाः प्राणीयन्त।

चरकसुश्रुतयोर्मतेन चतुराननो ब्रह्मैवायुर्वेदस्य प्रथमः प्रवर्तक इत्यायाति। स एवादौ लक्षश्लोकात्मिकाम् आयुर्वेदसंहितां विरचय्य प्रजापतिमन्वशात्। प्रजापतिर्देववैद्यावश्विनौ, तौ चेन्द्रमिति क्रमः। केवलं देवेष्वेवोपलम्भात् सोऽयं काल आयुर्वेदस्य दैवं युगमिति व्यपदेष्टुं शक्यते। मर्त्ये रोगाणामाक्रमणेन मानवानां धर्माचरणम् अध्ययनं ब्रह्मचर्यञ्च प्रतिहन्यमानान्युपलभ्य लोकक्षेमप्रणिहितमनसो महर्षयस्तुषारधवलस्य हिमालयस्य प्रत्यन्तदेशे सम्भूय चतुर्वर्गसाधनीभूतम् आयुर्वेदं ज्ञातुं सर्वसम्मत्या भरद्वाजर्षिम् इन्द्रसमीपे प्रेषयामासुः। सोऽयमिन्द्रादुपलब्धविद्यः सर्वादावायुर्वेदस्य कायचिकित्साम्प्रचिकाय। कालान्तरे च धन्वन्तरिर्भगवान् ज्ञातायुस्तत्त्वः शल्यचिकित्सामनुशशास। परस्ताच्चैकतो भरद्वाजशिष्यप्रशिष्या आत्रेयाग्निवेश-भेल-जतुकर्ण-पराशर-हारीत-क्षारपाण्यादयः स्वेन स्वेन नाम्नोपलक्षिताः पृथक् संहिताः प्रणीय कायचिकित्सां प्रथयाम्बभूवुः, अपरतश्च धन्वन्तरिशिष्याः सुश्रुतौपधेनवौरभ्र-वैतरण-करवीर्य-पौष्कलावतप्रभृतयः शल्यचिकित्सकाः शल्यप्रधानान् चिकित्साग्रन्थान् विरचयाञ्चक्रुः। अत्रैव युगे विदेहनिमिप्रभृतयः शालाक्यचिकित्साप्रवीणा अन्ये च तत्तद्विभागीयचिकित्सकाः स्वेषु स्वेषु विभागेषु नैपुण्यमनितरसाधारणम् आविश्चक्रुः। तथैव ऋषिपरम्परया साधारणमानवेष्वप्यस्य प्रचारः पठनपाठनाभ्यामाचरणैश्च निरपद्यतेति निरुक्तः क्रमः। अत्रापि युगेऽस्य नैकविधा समुन्नतिः समाराधितेति वैदेशिकपरिव्राजकानां भ्रमणवार्तापर्यालोचनयाऽवगम्यते। ग्रीकसम्राजः सेकेन्दरशाहमहाभागस्य भारतागमनावसरेऽप्यत्रायुर्वेदस्य चिकित्सा कुशलिनी प्रावर्तत। सर्पदंशनेनापेतप्राणेषु भारतागतेषु स्वसैनिकेषु, उपायाज्ञानादप्रतिभातिभारावनतकन्धरेषु स्वचिकित्सकेषु सम्राड् भारतीयांश्चिकित्सकानाहूय तैरेव तावदकालमृत्यु-

विकलान् योधानुद्दधारेति श्रूयते। युगस्यास्यान्तिमे भागे च शवव्यवच्छेदः प्राचलत्। चन्द्रगुप्ते राजनि विषभक्षणेनास्त्राघातेन कारणान्तरेण वाऽकस्मान्मृतानां देहं छित्त्वा 'आशुमृतक' ( post mortom ) परीक्षा समजघट इति ज्ञायते। इयमाशुमृतकपरीक्षा सूक्ष्मासु शारीरविद्यासु निदर्शनम् आर्याणां पारदर्शितायाः। माहम्मदसाम्राज्यकाले च बहवश्चिकित्सका भारतादन्यत्र समाहूयन्ते स्मेत्यपि प्रमाणसहो वादः।

## अवनतेः कारणम्

सोऽयमायुर्वेदो माहम्मदसमृद्धेर्मध्यभागादारभ्य जात्यन्तरीयाणामाक्रमणात्, राजकरावलम्बविरहात्, राजानुगृहीताया वैदेशिकचिकित्सायाः प्रचारबाहुल्याच्च क्रमेण सङ्कोचमनुभवन् स्वसत्तायामेव सम्प्रति प्रमाणमपेक्षते। तानीमान्यार्याणामायुर्वेदशास्त्राणि, ता एता ओषध्यस्तदिदं भारतं वर्षम्, यैस्ते पुरा चिकित्साविद्यायां प्रावीण्यमधिगत्य विस्मयविमूढं विदधुर्विश्वजीवनिकायम्, हा हन्त चक्षूंषीवान्धानां सन्त्यपि तानीदानीं नेषदपि फलाय कल्पन्ते। आत्मीयवस्तुष्वीषत्करत्वबुद्धिरेवात्र विशेषेणापराध्यतीति जानीमः। मृतकल्पानामारोग्यमुपकल्पयदार्यर्षीणां सूचिकाभरणमपस्मृत्य वयमिदानीमन्येषां वेध ( injection ) दर्शनेन विस्मयामहे। चित्रीयामहे चाद्यापरेषां मोहन ( chloraform ) दर्शनेन, परमासीदस्माकमपि कालान्तरम्, यत्र चिकित्सायाः प्रारम्भदशायां 'मोहचूर्णेन' रोगिणं पिहितबोधं विधायास्त्रोपचारः प्रारेभे। अविज्ञाततत्त्वास्ते विधयः कालप्रभावादस्मानप्यपरेष्वज्ञतया प्रतिपादयामासुः। मृतां गर्भिणीमधिकृत्य सुश्रुतीयनिदाने—

"वस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि।
तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद् भिषक्॥"

इत्यादि वचनञ्च शस्त्रचिकित्सायास्तादात्विकं पौष्कल्यमेवाघोषयति। तदेतत् सर्वमस्माकमनभ्यासहतमिति किमतः परं दुःखमाख्यापयामः।

यदा च शौद्धोदनिर्बुद्धदेवः स्वयं राजाज्ञां व्याजीकृत्य शल्यचिकित्सामवरुरुधे तत एव शल्यशालाक्यचिकित्साः क्रमेण भारतादन्तर्दधतेस्म ।

## त्रिदोषतत्त्वम्

वायुपित्तश्लेष्माण एव रोगोत्पत्ते रोगविनिश्चयस्य रोगोपशमनस्य च मूलमित्यायुर्वेदाचार्याः। त एत आयुर्विज्ञाने त्रिधातव इति त्रिदोषा इति च व्यपदिश्यन्ते। एत एव त्रिधातवो जीवदेहस्य परममवलम्बनमित्याहुः शास्त्रकाराः। तथा च—

"विसर्गादानविक्षेपैः सोमसूर्यानिला यथा ।
धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥"

इति सोमसूर्यानिलानां विसर्गादानविक्षेपदृष्टान्तेन वाय्वादित्रिदोषाणां जगद्धारकत्वं निर्णिन्युः। तत्र वायुर्मनोवत्। मनो यथा निराकारं क्रियाशीलञ्च, एवं वायुरपि निराकारश्च सक्रियश्च। यथा च कामक्रोधादिगुणलिङ्गैर्मननादिक्रियालिङ्गैश्च मनोऽनुमीयते एवं रूक्षत्वादिभिः सप्तभिर्गुणैः श्वासप्रश्वासाद्यनन्तक्रियाभिश्च व्यज्यमानो वायुः प्रतीतिपथमारोहति। वायोर्योगवाहित्वाद् वस्त्वन्तरसम्बन्धेनायं द्विविधमपि कार्यं निर्वाहयति—श्लेष्माश्रितः शैत्यम्, पित्ताश्रितश्च दाहमुत्पादयति।

रसविशेषः पित्तम्, तैजसत्वादुष्णस्वभावम्। उष्मवत्तरस्य तोयस्य कार्यमिवास्य कार्यं मानवदेहेष्वनुभूयते। इदमुष्णत्वादिगुणसप्तकसमन्वितम्, दाहोत्तापादिकार्यकारि च ।

श्लेष्मापि पित्तवदेव रसविशेषः। जलमिव शीतधर्मायं शीततरस्य नीरस्येव कार्यं प्राणिदेहेष्वादधाति। गुरुत्वादिसप्तगुणकोऽयम्। एष्वेको वायुरेव चालकः, कफपित्तौ पुनः पङ्गू। तथा च—

"पित्तः पङ्गुः कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत् ॥" इति ।

इमे धातवः स्थानक्रियादिभेदेन प्रत्येकं पञ्चधा भवन्ति। एषां साम्यावस्थैव स्वास्थ्यम्, वैषम्यावस्था चास्वास्थ्यं रोग इति यावत्। त एते

शरीरधारणात्त्रिधातव इति विकाराश्च त्रिदोषा इत्यभिधीयन्ते। एतानति-क्रम्य न केऽपि रोगाः प्रादुर्भवन्तीत्याह भगवान् सुश्रुतः—

"यथा हि कृत्स्नं विकारजातं विश्वरूपेणावस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विश्वरूपेणावस्थितम् अव्यतिरिच्य वातपित्तश्लेष्माणो वर्त्तन्ते।" इति।

नाडीविज्ञानम्

आयुर्वेदीयं नाडीविज्ञानं नाम रोगनिर्णयस्य विस्मयावहो हेतुरिति सर्व एव स्वीकुर्वन्ति। अत्र हि नाडीविज्ञाने वायुपित्तश्लेष्मणां ह्रासवृद्धी विषयीभवन्त्यौ रोगमनायासेनानुमापयतः। सत्यपि नाडीनामनेकधा भेदे प्राणवहासु दशसु नाडीषु इडा-पिङ्गला-सुषुम्णानामानो नाड्य एव प्रधानपदवीमधिरोहन्ति। तासु पुनरेका सुषुम्णैव ज्यायसीति सैव रोग-विज्ञाने परीक्ष्यते। सेयं पुंसां दक्षिणं करमारभ्य दक्षिणं चरणं यावत्, योषिताञ्च वामं करमारभ्य वामं चरणं यावत् प्रसारिता वर्त्तते। अत एव पुंसां दक्षिणः करो योषिताञ्च वामः करः परीक्ष्यते चिकित्सकैः। इदानीमपि तथा नाडीविज्ञाननिपुणा वर्त्तन्ते, ये केवलं नाड्या एव परीक्षया द्वित्रदिनान्तरितं मृत्युमवबोद्धुमलंभवन्ति। तदिदं विज्ञानमभिनिवेश-मात्रापेक्षमिति यैर्यावान् अभिनिवेशः प्रादुष्कृतः स्यात् तैस्तावानेव नाडी-विज्ञाने विशेष उपदर्शयितुं शक्येत। प्राचीनास्तान्त्रिका अस्मिन् नाडी-विज्ञाने सविशेषमुन्नता आसन्। ते हि नाडीचक्रस्य विशोधनेना-लौकिकान्यनेकानि कर्माणि समपादयन्तेति तन्त्रादितो वृद्धमुखतश्चाभि-ज्ञायते। नाडीविज्ञानविधौ चरकसूत्रमाश्रित्य नूतनो नाडीविज्ञानग्रन्थो निर्मीयते चेदायुर्वेदस्य कल्याणमशेषतो साधितं स्यादिति विश्वसिमः।

( क्रमशः )

———

# धर्ममीमांसा

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

दासयोनय इत्यस्य दासत्वकारणानीत्यर्थः। एषामेव सप्तानां स्वोपार्जितेष्वपि धनेष्वधिकारो नास्तीति गम्यते पौर्वापर्येण समस्थानीयत्वाद् वचनयोरिति। अथवाऽसच्छूद्राणामेव धनाधिकारनिषेधस्तेषां ब्राह्मणादिबाधनसम्भवात्। ये तु शूद्रा ब्राह्मणादिसंसर्गाच्छुद्धस्वभावास्तेषां वृत्त्यन्तरग्रहणे स्वोपार्जितधनाधिकारे तद्व्यवहारे च न दोषः। तथा च सच्छूद्राणां वृत्तिमाह याज्ञवल्क्यः—

> शूद्रस्य द्विजशुश्रूषा तया जीवन् वणिग् भवेत्।
> शिल्पैर्वा विविधैर्जीवेद् द्विजातिहितमाचरन् ॥ इति।

पराशरोऽप्याह—

> शूद्राणां द्विजशुश्रूषा परो धर्मः प्रकीर्तितः।
> अन्यथा कुरुते किञ्चित् तद् भवेत् तस्य निष्फलम्।
> क्षत्रियोऽपि कृषिं कृत्वा द्विजान् देवांश्च पूजयेत्।
> वैश्यः शूद्रः सदा कुर्यात् कृषि-वाणिज्य-शिल्पकान् ॥ इति।

अत्र अन्यथा कुरुते किञ्चिदित्यादिना सेवां परित्यज्य केवलं व्रतोपवासाद्यनुष्ठानं तेषां निष्फलमेवेत्यर्थ उक्तः। शङ्खश्चाह—"शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यर्थे"ति। एषु वाक्येषु शूद्राणां कृषिवाणिज्यादिवृत्त्यन्तरस्य विहितत्वेऽपि तैर्द्विजातिशुश्रूषा न परिहर्त्तव्येत्यर्थो विहितः। अत एव याज्ञवल्क्येन तया जीवन् वणिग् भवेदित्युक्तम्। पराशरोऽपि द्विजातिशुश्रूषापरित्यागेन शूद्राणां वृत्त्यन्तरग्रहणस्य निष्फलत्वमुक्तवान्। मनुस्तु स्पष्ट एवाह—

न स्वामिना निसृष्टोऽपि शूद्रो दास्याद् विमुच्यते ।
निसर्गजं हि तत् तस्य कस्तस्मात् तदपोहते ॥ इति ।

एतेन द्विजातिसेवासहकृतवृत्त्यन्तरग्रहणेन सच्छूद्रा न दोषभाजो भवन्तीति सिद्धान्तः। यदि त्वसच्छूद्रा वैश्या वा निकृष्टगुणाः स्वस्ववृत्ति-धर्माभ्यां विच्युता भवन्ति तदा राजा बलात् तैः स्ववर्णोचितं कर्म कारयेत्, अन्यथा तादृशा वैश्या अपि समाजमाकुलीकुर्युर्यथाह मनुः—

वैश्य-शूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ।
तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत् ।। इति ।

सच्छूद्रा अपि चेद् गुणवन्तः स्युस्तदा ते वार्द्धके उत्तमवर्णानामपि मान्या भवन्ति इत्याह याज्ञवल्क्यः । यथा—

विद्या-कर्म-वयो-बन्धु-वित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति ॥ इति ।

तेषान्तु स्वधर्मानुष्ठानादुत्तमजातित्वप्राप्तिः स्वर्गलाभश्च प्रागेव निरूपितौ ।

इति शूद्रधर्मः ॥

अथ वर्णसङ्करधर्मः ।

तत्र प्रागुक्तवर्णचतुष्टयेषु सवर्णमातापितृजाः सन्तानाः समानवर्णत्वमाप्नुवन्ति । तथा च याज्ञवल्क्यः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः ॥

इति । मनुरपि—

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥

इति । ततश्च समानजातीयमातापितृजो वर्णः शुद्ध इत्युच्यते । भिन्न-वर्णाभ्यान्तु मातापितृभ्यामुत्पादितो वर्णः सङ्कीर्णो भवति । स च गौण-मुख्यभेदाद्द्विविधः । तत्रासमानवर्णमातापित्र्युत्पादितः प्रथमो यथा मूर्द्धाभिषिक्तादि । व्यभिचारावेद्यावेदनस्वधर्मत्यागजन्यश्च पारिभाषिको

गौणो द्वितीय इति। यद्यप्यवेद्यावेदने उपनयनसंस्काराद्यभावेऽपि वा वर्णगतसाङ्कर्यं न विद्यते, तथापि तयोः पारिभाषिकसङ्करत्वाद् गौणत्वमिति। तत्र यो मुख्यो वर्णसङ्करः सोऽपि द्विविधः, अनुलोमप्रतिलोमभेदात्। उत्कृष्टवर्णादनुत्कृष्टवर्णायामुत्पन्नोऽनुलोमः। यथाह याज्ञवल्क्यः—

> विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
> जातोऽम्बष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा॥
> वैश्या-शूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।
> वैश्यात् तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः॥

इति। निषादो नामापरोऽपि मत्स्यघातकर्मा प्रतिलोमजोऽस्ति। यथा जातिविवेके—

> क्षत्रिणी शूद्रसंयोगात् क्षत्तारं जनयेत् सुतम्।
> निषाद इति विख्यातः सर्वधर्मबहिष्कृतः॥

इति। एतद्व्यवच्छेदायास्य संज्ञान्तरमाह पारशव इति। विन्नास्विति विवाहितास्वित्यर्थः। ब्राह्मणादयो यदि क्षत्रियाद्यसवर्णकन्यानां विवाहमकृत्वापि चौर्यादिना लब्धास्ताः स्त्रीत्वं प्रापयेयुस्तदा तदुत्पन्नः सङ्करः संज्ञान्तरं लभत इत्यग्रे स्फुटीभविष्यतीत्यतो विन्नास्वित्युक्तम्। एवमनुलोमसङ्करः षड् विधः। तथाच मनुः—

> विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।
> वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः॥

इति। अपसदत्वञ्चैषां सवर्णाजातपुत्रापेक्षया निकृष्टत्वात्। एषु चानुलोमसङ्करेषु मूर्द्धाभिषिक्त-माहिष्य-करणानाम् अनन्तरजातानां मातृजातित उत्कृष्टत्वं पितृजातितश्चापकृष्टत्वं ज्ञेयम्। तथाच मनुः—

> स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
> सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥

इति। अत्र च पितृतोऽपकृष्टत्वे हेतुमाह मातृदोषविगर्हितानिति। तथाचाहैतद्वचनभाष्ये मेधातिथिः "अनन्तरास्वव्यवहितास्वानुलोम्येन य उत्-

पन्नाः पुत्रास्ते सदृशा ज्ञेया न तु तज्जातीयाः। यथा ब्राह्मणात् क्षत्रियायां क्षत्रियाद् वैश्यायां वैश्यात् शूद्रायाम् तेन सदृशा न तु त एव। अत्र हेतुः मातृदोषविगर्हितान्। तत्सदृशग्रहणात् मातृत उत्कृष्टान् पितृतो निकृष्टान्" इति। एष्वनुलोमसङ्करेषु क्षत्रियायां वैश्यायाञ्च जाता ये पुत्रास्तेषामुपनयनसंस्कारोऽपि भवति द्विजधर्मवत्त्वात्। तथाच मनुः—

सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः॥

इति। सजातिजा इति ब्राह्मणाद् ब्राह्मण्यां क्षत्रियात् क्षत्रियायां वैश्याद् वैश्यायाम्। अनन्तरजा इत्युपलक्षणम् तेनैकान्तरजस्याम्बष्ठस्यापि परिग्रहोऽन्यथा षट्संख्यापूरणासम्भवात्। अतो मूर्द्धाभिषिक्ताम्बष्ठमाहिष्यास्त्रयः। एते षट् पुत्रा द्विजधर्मिण उपनयनार्हा इत्यर्थः। अन्ये त्वनुलोमजाः शूद्रयामुत्पन्ना ये निषादोग्रकरणास्ते, ये च प्रतिलोमजातास्ते सर्व एव शूद्रसमानधर्माण उपनयनसंस्काराभावात् तेषामिति तात्पर्यम्। अथ मुद्धाभिषिक्तादीनामुपनयनयोग्यानां त्रयाणां सङ्कराणां धर्माचारौ कीदृशाविति चेद् मातृवर्णसदृशाविति विज्ञेयम्। अत एवोक्तं मातृदोषविगर्हितानिति। तथाच शङ्खः "ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एवे"ति। विष्णुरप्याह "अनुलोमासु मातृवर्णाः, प्रतिलोमास्वार्यविगर्हिता" इति। अत एव नात्र मूर्द्धाभिषिक्तादीनां क्षत्रियादिजातिप्राप्तिरुच्यते परन्तु तेषां मूर्द्धाभिषिक्तादिसङ्करजातित्वमेव। अनया तु शङ्खोक्त्या तेषां क्षत्रियादिधर्मप्राप्तिरेवावगम्यते। तथाच मिताक्षरायां "यदेतत् शङ्खस्मरणम् तत् क्षत्रियादिधर्मप्राप्त्यर्थं न पुनर्मूर्द्धाभिषिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वे"ति। अपकृष्टवर्णादुत्कृष्टवर्णायामुत्पादितः प्रतिलोमवर्णसङ्करः। अत्र प्रतिलोमजानां षण्णां सङ्कराणामुत्पत्तिक्रममाह याज्ञवल्क्यः—

( क्रमशः )

---

# सन्देशः

परिषदो विशेषाधिवेशनम्—व्यतीते त्रिचत्वारिंशदुत्तरत्रयोदशशततमे (१३४३) वङ्गीयाब्दे सौरफाल्गुनस्य सप्तमदिवसे स्मार्त्तप्रवर-महामहोपाध्याय-शितिकण्ठवाचस्पतिमहोदयानां लोकान्तरप्रयाणमुपलक्ष्य परिषदः किञ्चन विशेषाधिवेशनमनुष्ठितम्। महामहोपाध्याय-श्रीयुक्त-फणिभूषण-तर्कवागीशमहोदयानामाध्यक्ष्येण सुनिष्पादितायां तस्यां सभायां बहवो वाग्मिनो यथारीति परासोर्गुणानधिकृत्य वाग्वैभवं प्राकाशयन् सर्वसम्मत्येदं निरधारयंश्च—स्वर्गता वाचस्पतिमहोदयाः परिषदः सह-सभापतिपदमनुगृह्य नानाविधामुन्नतिं तस्या जनयन्तिस्म। तेषां वियोगेन परिषदियं केनचनात्मनो मङ्गलकामेन जनेन विरहितेति महदपूरणीयञ्चेदं वैमनस्यं तस्याः, पारिषद्याश्च शोकसंविग्नाः शोकक्षुब्धानां तत्परिजनानां शोकोपशान्तये भगवन्तं भूतभावनं प्रार्थयन्त इति, लेखस्यास्य प्रतिलिपिर्वाचस्पतिमहोदयानां परिजनानां समीपे प्रेषणीयेति चेति।

व्यतीते सौरवैशाखस्य पञ्चदशदिवसे भारतविख्यातनैयायिकानां महामहोपाध्यायकामाख्यानाथतर्कवागीशमहोदयानां देहान्तरप्राप्तिमधिकृत्य शोकप्रकाशार्थं बहवः पारिपद्याः सम्भूय परिपद्येकं विशेषाधिवेशनमन्वतिष्ठन्। अत्रापि तत्रभवतां महामहोपाध्यायफणिभूषणतर्कवागीशमहोदयानां साभापत्यं सभासदामदीनामनुपधिश्च मुदमुपदीकृतवत् सभाकार्यं निरवाहयत्। सभ्येषु च महामहिमशालिनः केचित् पल्लविता वाचः श्रोतॄणां श्रवणसीमसु कुर्वाणा आत्मनश्च तांश्च सममेव समरञ्जयन्। परेतानां महामहोपाध्यायानामतिगभीरः पाण्डित्यप्रकर्षः साधारणदुर्लभश्चारित्रगरिमा, वार्धकचरमाचलेऽपि शैशवसुलभमार्जवमित्येवमादीनि वस्तूनि तेषां वक्तॄणां प्रतिपाद्यपदवीमधिकुर्वन्ति तेषां वैखरीरमन्दान् करतलध्वनीनलम्भयन्। पद्यरसिकेन च केनचिद् विदुषा स्वं वक्तव्यं पद्येन पत्रारूढं कृत्वा तस्यामेव सभायां वाचितम्, तदेतदस्यामेव पत्रिकायामन्यत्र दिदृक्षमाणैरक्षिगोचरीकर्तव्यम्। अन्ततश्च तेषां महाप्रयाणेन परिषदो भारतभूमेश्चापूरणीयां क्षतिमुद्घोष्य तत्कुटुम्बेषु चैतत् सर्वं विज्ञापयितुमनुज्ञाप्य सभाभङ्गो विघोषितः।

# समालोचनम्

आर्यावर्तहृदयम्—श्रीमता विष्णुपदभट्टाचार्य-काव्यतीर्थ एम्. ए महोदयेन सम्पादितम्। तेनैव १२।१ संख्यक-वागवाजार ष्ट्रीट् इत्याख्य-वर्त्मनः प्रकाशितम्। मूल्यं मुद्रापञ्चकमात्रम्।

संस्कृतसरणौ सञ्चरतामपरिचितचरमपीदं पुस्तकम् आङ्गलवर्त्मनि विचरतां सुपरिचितमेव स्यादिति तर्कयामहे। भूतपूर्ववङ्गशासकधुरीणैः श्रीमद्भि'र्लर्ड् रोनाल्ड से' इत्याख्यमहोदयैर्लिखितस्य, तेषामेव चिरशासन-सम्भूताया बहुदर्शितायाः फलीभूतस्य "दि हार्ट अफ् आर्यावर्त्त" इत्याख्य-स्याङ्गलभाषामयस्य पुस्तकस्यानुवादात्मकोऽयं ग्रन्थः।

यथासम्भवं सरलया संस्कृतभाषया मूलग्रन्थं सतृणमनुवदता तत्र-भवता काव्यतीर्थमहोदयेन दर्शितमात्मनः प्रावीण्यमेवंविधेषु दुष्कर-व्यापारेषु। शासकसम्प्रदायाः केन भावेनार्यावर्त्तं पश्यन्तीति जिज्ञासुभिः संस्कृतज्ञैर्विद्वद्भिरवश्यमेवायं ग्रन्थः संग्राह्यः; आङ्गलभाषाविशेषज्ञैरप्यनु-वादमाधुर्यमास्वादयद्भिरयं ग्राह्यकोटिमनुप्रविशतीति न रिक्तं वचः।

धीरसरणिमधधीरयन्तः केचन स्वं पौरोभाग्यमात्रं पुरस्कृत्य यदि नामानुवादेऽस्मिन् मूलानुगतिविरहमाविष्कुर्वते, तर्हि तेषां मुखमुद्रणायैवं ब्रूमः—नूनं जानन्त्येव भाषान्तरीकरणपरायणा विद्वद्धुरीणाः कियदायाया-ससाध्येयं भाषान्तरीकरणक्रियेति। सन्ति किल प्रत्येकं भाषासु कानिच-नान्यभाषाविलक्षणानि प्रातिस्विकानि वस्तूनि, यानि यदर्थप्रत्यायनेच्छयोच्चरि-तानि तदर्थान् तद्भाषागतान्येव प्रत्याययन्ति न पुनर्भाषान्तरीकृतान्यपीति। अत्र हि विषये परिपूर्णसर्वावयवा आङ्लादिभाषा अपि यदा दैन्यमा-वहन्ति तदा कैव कथा स्वतो दीनायाः क्षीणावयवाया अमरभारत्याः। एवं स्थिते महान्तमिमं ग्रन्थम् आङ्लभाषातः संस्कृतभाषायां विपरिणमयितुं यं हि नाम आप्राणमायासम् आस्थितवांस्तत्रभवाननुवादकस्तत्कृतेऽसौ सर्वेषामेवाव्याजसुन्दरं धन्यवादं विन्देदेवेति नो विश्वासः।

नानार्थसंग्रह-शब्दसूची समाप्ता ॥

# कलङ्कमोचनम् ( नाटकम् )

[ त्यक्तमहामहोपाध्यायपद-श्रीपञ्चाननतर्करत्नभट्टाचार्य-विरचितम् ]

प्रस्तावना

राधासङ्गभवोर्जितस्रुतिरसा वर्हश्रियं पुष्णती
प्रोड्डीनालिविलोलमालचपलापीताम्वराडम्वरा।
कालिन्दीतटिनीतमालविटपिच्छायासमालम्बिनी
पापं तापमपास्यतां सपदि वः श्रीकृष्णकादम्बिनी ॥१॥

---

१। श्रीकृष्णपक्षे—राधायाः श्रीराधिकायाः सङ्गो मेलनम्। ऊर्जितस्रुतिः प्रबलगतिः। रसः प्रीतिः। वर्हश्रियं चूडायां सन्निवेशनेन वर्हस्य मयूर-पिच्छस्य श्रियं वर्द्धयन्ती, वर्हधारणजन्यां शोभां दधतीति वा। प्रोड्डीनभ्रमरा विलोला माला यस्य—स चासौ चपला-पीताम्वराडम्वरश्चेति विशेषण-समासात्। अलिः भ्रमरः। विलोला चञ्चला। माला पुष्पमाला। चपला-वत् पीतं यत् अम्बरं तस्याडम्बरः विन्यासः यत्र। तेन आडम्बरयति हर्षं जनयति इति वा। तापः संसारक्लेशः। अत्र लिङ्गविपरिणामः। कादम्बिनीपक्षे—राधो वैशाखमासः, आसङ्गः मेलनम्। ओर्जितस्रुतिः कार्त्तिक-मासपर्यन्तं कृता स्रुतिः क्षरणं यस्य तादृशो रसः जलं यस्याः। ऊर्ज्जः कार्त्तिकमासः आ ऊर्ज्जात् ओर्ज्जं तद्वती वा कृता ओर्जिता। "आ वैशाखाद् भुजगवनिताचुम्बनायासखिन्नो देवो दैत्यप्रमथनपटुर्यावदेकान्तशान्तः। अम्भः-शय्यापरिगततनुर्योगनिद्रामुपैति तावद् वृष्टेः समय उदित" इति ज्यौतिषवचनात् वैशाखमारभ्य श्रीहरिशयनसमयव्यापी वृष्टिपतनकालः। अन्यच्च, मार्ग-शीर्षमासमारभ्य चैत्रान्तं यावन्न वृष्टिपतनसमयः, तदानीं वृष्टिपाते अकाल-वर्षणजो दोष इति ज्ञेयम्। वर्हेति। मेघागमे मयूरा नृत्यन्ति, तेन वर्ह-

अपि च—

जगदालोकगोलोकरासमण्डलमण्डनम् ।
खण्डनं सर्वतमसां पातु वो राधिकामहः ॥२॥

नान्द्यन्ते सूत्रधारः । अलमतिप्रसङ्गेन, आह्वयामि तावद्द्वितीयां मदनुवर्त्तने द्वितीयां मे परिषदमिमामाराधयितुं नवेन प्रयोगेण । (नेपथ्याभिमुखमवलोक्य ) आर्ये इतस्तावत् ।

नटी । ( प्रविश्य ) इअं दावह्मि, आणवेदु अज्जो किं करणिज्जं त्ति । [ इयं तावदस्मि, आज्ञापयतु आर्यः किं करणीयमिति ] ।

सूत्र । आदिष्टोऽस्मि वाराणसेयविदग्धैः कश्चिन्नवः प्रयोगः प्रवर्त्यतामिति । तद् भवत्याः साहायकमत्र कामये ।

नटी । आस्सवह्मि अज्जस्स, आणवेदु अज्जो कदमो पओओ अणुट्ठादव्वोत्ति । [ आश्रवास्मि आर्यस्य, आज्ञापयतु आर्यः कतमः प्रयोगोऽनुष्ठातव्य इति ] ।

सूत्र । अपि ज्ञायते भवत्या ?

वासिष्ठाद्यैर्द्विजबुधवरैः शोभितो भट्टपल्ली-
नामग्रामः सुरसरिदभिष्यन्दनप्रत्यगन्तः ।

---

श्रीर्भवति । प्रोड्डीनेति प्रोड्डीना आलयः श्रेण्यो येषां ते वयः पक्षिणः बलाका इति यावत्, तेषां लोला चपला मालाः यत्र एकैकश्रेणीबद्धा बलाका उड्डीना मालायमाना अभवन्, ताश्च माला बह्वयः, चञ्चलतया विसंष्ठुलाश्चेति स्वभाववर्णनम् । चपलाभिः विद्युद्भिः पीतः अम्बरस्य आडम्बरो दर्पो यया । आकाशस्य सर्वव्यापित्वदर्पविषं विद्युद्द्वारा पीतवतीत्यर्थः, विद्युतामाकाशापेक्षया व्यापकत्वोक्तिः । अथवा विद्युद्भिः पीते पीतवर्णे अम्बरे आकाशे आडम्बरः तूर्यरवो गजेन्द्रगर्जनं वा यस्याः सा । कालिन्दीति । छाया कान्तिः । समा तुल्या । आलम्बिनी दूरविलम्बिनी । तापं निदाघक्लेशम् ॥१॥

आसन्नायां यमदिशि मतो यो नवद्वीपधाम्नो
विद्याचारस्फुरितगरिमा विश्रुतो गौडभूमौ ॥३॥

नटी। अज्ज, गोदमसिद्धपुरिसाणं अल्लालभट्टपादाणं पढमग्गहारदाए भट्टवल्लित्ति जस्स नाम, तं कधं ण आणामि ? [ आर्य, गौतमसिद्धपुरुषाणाम् अल्लालभट्टपादानां प्रथमाग्रहारतया भट्टपल्लीति यस्य नाम, तं कथं न जानामि ]।

सूत्र। ( सहर्षम् ) अयि विदुषि, तेषामेव महापुरुषाणामधस्तनैकादशपुरुषेण तद्ग्रामाभिजनेन कवित्वकीर्तिमण्डित-नन्दलालविद्यारत्न-भट्टाचार्यतनूजन्मना श्रीपञ्चाननतर्करत्नभट्टाचार्येण विरचितं कलङ्कमोचनं नाम नाटकं प्रयुयुक्ष्यतेऽस्माभिः। किमत्र वा भवती मन्यते ?

नटी। ( सहर्षम् ) सुट्ठु णिरूविदं अज्जेण, जदो इमिणा पओएण अह्माणं वि कलङ्कमोअणं हुविस्सदि [ सुष्ठु निरूपितमार्येण, यतः अनेन प्रयोगेण अस्माकमपि कलङ्कमोचनं भविष्यति ]

सूत्र। ( सवितर्कम् ) भिन्नार्थमिदमुच्यताम्।

नटी। ( संस्कृतमाश्रित्य )

यन्नाम स्मरतां पदानुसरणादन्त्याः पुलिन्दादयो
मुक्ता जात्यपकर्षहेतुकलुषाद् दीव्यन्ति देवैर्दिवि।
शौरेस्तस्य पदानुकारकलया तद्भावसम्भाविताः
किं शैलूष्यकलङ्कपङ्करहिता न प्राप्नुमः सद्गतिम् ? ॥४॥

---

( ४ ) आभीरहूणान्ध्रपुलिन्दपुक्कसाः यदुपाश्रयाश्रयाः शुध्यन्तीति श्रीमद्भागवतवचनार्थं स्मरन्ती वदति यन्नाम स्मरतामिति। जात्यपकर्षहेतुभूतानि कलुषाणि बहुजन्मान्यनुवर्तन्ते, तत्र प्रथमे हीनजन्मन्यपि यदि श्रीकृष्णनामस्मरणपराणां स्थानानुसरणं चरणसेवा वा घटते तदा तज्जन्मन्येव तत्पापमुक्ताः स्वर्गं भुञ्जते। तस्य शौरेः श्रीकृष्णस्य पदानुकारकलया व्यवसितानुकरणस्य

( नेपथ्ये )

यन्नामप्रतिरूपकेण।तनुजं स्वीयं मुमूर्षुः स्मरन्
पापः प्रापदजामिलः परपदं मुक्तः समस्तैरघैः ।
साक्षात् तस्य हरेः कथामनुवदत्यन्त्येऽपि शान्तांहसि
श्रीनाथस्य कृपाश्रये वसतयेऽलं कः कलङ्कक्रमः ? ॥५॥

सूत्र। ( विलोक्य ) आर्ये पश्य, एष मुनिवरो गर्गः, समर्थयमान इव भवत्या वचनं श्रीराधापवादश्रवणविमूढं शिष्यमुपदिशन्नित एवाभिवर्तते, तदावामित एव प्रणम्यैनमचिरनिर्वर्त्यस्वकृत्यसम्पादनाय साधयावः। ( इति सप्रणामं निष्क्रान्तौ )।

( इति प्रस्तावना )

---

कयाचिन्मात्रया तद्भावेन सम्भाविताः आत्मनि तद्भावमारोप्य सम्भाविताः अन्येभ्यः सम्भावनां सम्माननां प्राप्ताः, शैलूष्यकलङ्कमुक्ताः नटजातिलाभ-हेतुपापरहिताः। न प्राप्नुमः वर्तमानसामीप्ये लट, एतद्देहपातानन्तरमेव न तु जन्मव्यवधानापेक्षेति सूचनाय।

( ५ ) अतः परं प्रथमाङ्कविष्कम्भकस्य पात्रप्रवेशसूचकं नेपथ्यवचनं यन्नामेति। अस्यायमाशयः, गर्गशिष्यो बौधायनः श्रीराधाया जारसङ्गकलङ्कं कर्णाकर्णिकया श्रुत्वा तत्त्वनिर्णयार्थं स्वगुरुं पृष्टवान्, तत्र गुरुरुत्तरं वक्तु-मुपक्रममाणो यत् पद्यमुक्तवान् तदेवेदम्। कलुषकर्मकृत् अजामिलो मुमूर्षा-दशायां नारायणनामकं स्वसुतमाहूतवान्, अत एव तादृशो नारायणशब्दो न भगवन्नारायणार्थक इति नारायणप्रतिरूपकत्वकथनम्। श्रीकृष्णस्य कृपा-लवपात्रेऽपि कस्यापि कलङ्कोदयस्यावसरो नास्ति, अस्य पद्यस्यायं भावः। तदुत्तरस्य अस्य तु प्रवेशानन्तरं वचनमस्ति। उभयोस्तात्पर्यं तु—यदा श्रीकृष्ण-कथानुवादपरस्यान्त्यस्यापि जनस्य कोऽपि कलङ्कोदयो न भवेत्, तदा श्रीकृष्णस्या-परमूर्तौ श्रीराधायां कलङ्क इति तु कल्पनामात्रं न तु वास्तवमिति।

विष्कम्भकः

[ तत्र प्रविशति सशिष्यो गर्गः ]

गर्गः ।

यन्नामप्रतिरूपकेण तनुजं स्वीयं मुमूर्षुः स्मरन्
पापः प्रापदजामिलः परपदं मुक्तः समस्तैरघैः ।
साक्षात्तस्य हरेः कथामनुवदत्यन्त्येऽपि शान्तांहसि
श्रीनाथस्य कृपाश्रये वसतयेऽलं कः कलङ्कक्रमः ॥६॥

अत एव वत्स बौधायन,

कलङ्कः कल्पनामात्रं श्रीराधायां तदात्मनि ।
नित्यतेजसि मार्तण्डे यथा दर्पणकालिमा ॥७॥

बौधायनः । (साञ्जलिबन्धम्) भगवन्, युज्यत एवेदं यदि श्रीराधा तदात्मा स्यात्, स्याच्च तत्पदार्थो नन्दनन्दनः, न चैतत् प्रतिपद्यते तर्कपरो लोकः ।

गर्गः । वत्स ! ततः किम् ?

नालीको नलिनीनाथो यदन्धो नैनमीक्षते ।
विमूढानामबोधेन तत्त्वं न परिलुप्यते ॥८॥

अपि चाम्नायते नैषा तर्केण मतिरापनेयेति ।

बौधा । (साञ्जलिबन्धम्) अस्तु लोकतर्कः, यदेव तत्त्वं तदुपदिश्य कृतार्थीक्रियतामयं दासः ।

गर्गः । साधु वत्स ! यस्त्वं श्रीराधाकृष्णतत्त्वश्रवणे पर्युत्सुकोऽसि । तदवधेहि—

बौधा । भगवन् ! अवहितोऽस्मि ।

गर्गः । श्रीमद्गोलोकधाम्नि क्वचन लीलाव्यतिकरे कुपितया श्रीराधया श्रीकृष्णं प्रति भूतलावतरणायाभिशप्तम्, ततश्चामर्षवशेन तत्प्रियानुचरेण श्रीदाम्नाऽधिक्षिप्ता श्रीराधा श्रीदाम्ने, श्रीदामा च तस्यै परस्परं शापमुत्ससर्ज । येन श्रीदाम्नो नरजन्म श्रीराधायाश्च भूतलावतरणं

छायया रायाणजायाभावः पौंश्चल्यपरिवादः शतवार्षिकः श्रीकृष्णविच्छेदश्च नियतः।

( बौधायनो विस्मयं नाटयति )

अथ भक्तवत्सलस्य भगवतः श्रीकृष्णस्य श्रीराधापरिरक्षणाय प्रतिपन्न-भूभारहरणाय च नन्दनन्दनतया प्रादुर्भावो रहसि वास्तवश्रीराधा-परिणयनञ्चेति। तदेतत् संग्रहपद्यम्—

श्रीदामोद्दामशापं सफलयितुमना राधिकाऽत्रावतीर्णा
मायारायाणजायाऽजनि जनविदिता छाययाच्छन्नकाया।
तस्या गोलोकनाथस्त्वभिलषितकरो नन्दपुत्रायमाणः
पाणिं जग्राह गूढं पृथुकतनुरनुध्यायमानो मुनीन्द्रैः ॥९॥

बौधा। भगवन्! भागधेयं मे, श्रवणपुटेन यदेतदमृतरसास्वादो जायते।

गर्गः। ( सपरितोषम् ) वत्स! यद्येवम्, मननानुकूलं तर्कमुप-दिशामि। तथाहि—

स्तनन्धयेन येनातिदारुणा पूतना हता।
सप्ताब्देनोद्धृतश्चाद्रिः सप्ताहानि शिलीन्ध्रवत् ॥१०॥

तं नन्दनन्दनमशेषजगन्निदानं भूमानमर्भकतया कलयन्ति मूढाः।
भूमण्डलादतिबृहन्त्यपि तारकाणि खद्योतवत्क्षुद्रराणि विदन्ति बालाः ॥११

बौधा। भगवन्, दृष्टान्तेऽस्ति दूरत्वं दोषः।

गर्गः। अत्राप्यस्ति तावत्, आसुरभाव एव दोषः, येन हि समाक्रान्तचेताः पुरुषः—

अखिलपतिरुपात्तमर्त्यलीलस्तदुचितमाचरतीह सर्वशक्तिः।
नट इव धृतभूमिकानुवर्त्ती क्वचिदितरन्निजमायया तु गूढः ॥१२॥

इति नावबुध्यते।

बौधा। भगवन्! अनेन श्रीराधाकृष्णतत्त्वाधिगमेन कृतार्थोऽस्मि।

भगवन्मुखपद्मोत्थराधाकृष्ण-वचो मधु ।
पायं पायं पुनः पातु मनोऽलिस्त्वरते मम ॥१३॥

गर्गः । (सहर्षम्) वत्स ! तदारूढोऽसि कल्याणनिःश्रेणिम् ।

अद्याध्यापनमर्थवन्मम यतो जाता रतिस्तेऽच्युते
सिद्धं ते तपसः फलं हरिकथा शुश्रूषिता यत्त्वया ।
मन्दानां कुमतिप्रपञ्चरचितस्तर्कोऽप्यभून्मे सखा
राधाकृष्णरहस्यवर्णनशुभं जातं यदामर्शनात् ॥१४॥

वत्स ! तदेहि प्रादुष्कृतपावकमिदमुपयमुनमाश्रममण्डलं प्रविश्य तत्र हूयमानाग्नौ—

वन्दामहे क्रन्दितदन्दशूकं मन्दाकिनीस्यन्दनसुन्दरान्तम् ।
आनन्दकन्दं जगदेकवन्द्यं श्रीमन्मुकुन्दस्य पदारविन्दम् ॥१५॥

(इति निष्क्रान्तौ) ।

(इति विष्कम्भकः)

---

# प्रथमोऽङ्कः

(ततः प्रविशति कुञ्जवनस्थः सुदाम्ना सहितः सोत्कण्ठः श्रीकृष्णः)

सुदामा । सखे ! परमरमणीयोऽयं माधवीप्रदोषः । पश्य—

अनु मलयसमीरं कम्पते वल्लिरेषा
हिमकरकरमृष्टाः कैरविण्यो हसन्ति ।
मधुकरपरिरम्भारम्भणानम्रकम्र-
क्षणरुचिकुसुमाली मल्लिका मोदमेति ॥

श्रीकृष्णः । सखे ! (सनिश्वासम्) अचेतना अपि कान्तसङ्गमेनैव प्रीतिमावहन्तीति पश्यामि ।

सुदामा । (स्वगतम्) अस्त्वेतद्विरहोद्दीपकम् । (प्रकाशम्) इदमपरमुत्प्रेक्षणीयम्—

वहति मलयवाते भाति ते श्वासगन्धः
कुसुमकुलविकाशे भासते ते स्मितश्रीः ।
अलिरयमसिताभस्त्वच्छिया स्पर्धमानो
मधुमथनविनोदी रौति वेणुं जिगीषुः ॥

श्रीकृष्णः । अनुचितमिदमभिहितम्, यतः—
अभिमतकुसुमावलीरसैस्तैर्मुदितमनाः सुभगो द्विरेफराजः ।
कथमिव दयितोत्सुकं सखेदं जितमपि जेतुमनाः सुदुर्भगं माम् ॥

सुदामा । ( स्वगतम् ) इदमपि तादृशमेव । तत् कथान्तरं पातयामि । ( प्रकाशम् ) सखे, इतो दृश्यतां यमुना—

आलम्बचञ्चलशशिप्रतिबिम्बदीप्रमध्या नवीनघनकान्तिरियं स्रवन्ती ।
आमुक्तनिर्मलसुवर्णसवर्णवासा नृत्यानुगा तवतनूरपरेव भाति ॥

श्रीकृष्णः । सखे, युक्तमिदं मदेकबद्धहृदयस्य भवतः । मया तु—

दृष्ट्वा सान्द्रघनोपमानयमुनापूरोदरे सुन्दरे
पूर्णेन्दुप्रतिबिम्बमस्थिरमिदं स्रोतोभिरामर्शनात् ।
आलोलालकराजिराजितमहो नीलाम्बराया मुखं
राधायाः प्रतिषिद्धचुम्बनचलद्वृत्तं मुहुः स्मर्यते ॥

( इति दीर्घं निश्वसिति )

सुदामा । ( सहास्यम् ) सखे, केवलमेकत्रैव मनस्ते भ्रमति ।

श्रीकृष्णः । सखे, महाभागधेयो भवान्, यन्न पतितोऽसि विषम-शरशरसम्पात-गोचरे ( इति दीर्घं निश्वसिति ) ।

सुदामा । तथापि पृच्छामि, चिरलब्धया तत्रभवत्या राधया कथमद्य-तावदौत्सुक्यम् ?

श्रीकृष्णः । श्रूयताम्, अद्य पुष्पदोलयात्रा श्रीराधायाः प्रियकाम्यया सखीभिरनुष्ठीयते ।

सुदामा । अत एव कुञ्जमण्डपद्वयं दीपिकाभिरलङ्कृतमिति युक्तम् ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| July, 1937. | १८५९-शकीये आषाढे<br>२०श-वर्षस्य ३य-संख्या | Vol. XX, No. 3 |
|---|---|---|


## राजा कालस्य कारणम्

### ( २ )

अन्ये तु मन्यन्ते—राजा कालस्य कारणमिति नीतेरयमाशयः—यद् धार्मिको राजा धर्मरक्षैकदीक्षितो भविता। तदुक्तं नीतिवाक्यामृते स्वामिसमुद्देशे—"राज्ञोऽन्यायकरणम्, समुद्रस्य मर्यादालङ्घनम्, आदित्यस्य तमःपोषणम्, मातुः स्वापत्यभक्षणमिति कलिकालविजृम्भितानि। राजा कालस्य कारणम्। न्यायतः परिपालके राज्ञि प्रजानां कामदुघा भवन्ति सर्वा दिशः"—इत्यादि। अतः सत्यं कर्तुमकर्तुमन्यथा वा कर्तुं राजा शक्नोति धर्मपरिस्थितिमधर्मपरिस्थितिं वा। इदमेवात्रालोचनीयम्—धार्मिकपरिस्थितेरधार्मिकपरिस्थितिरूपेण व्यवस्थापनं किं राज्ञां प्रजानां राज्यस्य च सुखोदर्कम्, उत धार्मिकपरिस्थितेः परिरक्षणमधार्मिकपरिस्थितेरिति। आलोचितमिदमस्माभिः—धर्माधर्मपरिस्थितेः परिवर्तनं फलपरिवर्तनं विना मृन्मयेन गजेनाश्वेन वा नदीतरणमेव। अतो-मन्यामहे—धर्माधर्मपरिवर्तने यदा न श्रुति-स्मृति-पुराणेतिहासादिमर्मज्ञा धर्मरक्षैकदीक्षिता धर्माचरणेनैवातिकृच्छ्रेणापि स्वजीवनयात्रां निर्वहन्तश्च महर्षयोऽपि भूत-वर्तमान-भावि-काल-देशपरिस्थित्यादिसूक्ष्मस्वरूपं स्वयोग-

महिम्ना साक्षात्कुर्वन्तो न प्रभवः, तदा कैव कथा विलासप्रियाणां राजमहाराजानाम्। आषाढवाते चलति द्विपेन्द्रे चक्रीवतो* वारधिरेव काष्ठा। आर्थिकपरिस्थितिरपि धर्माविरोधेनैव परिवर्त्यमानाऽमृतपरिणामा, धर्मविरोधेन तु मृतपरिणामैवेति हि नीतिविदो मन्यन्ते—अर्थशास्त्राद्धि बलवद् धर्मशास्त्रमिति स्थितिः—इति वदन्तः, इति कुतो वाऽर्धजरतीयन्यायाश्रयणं धर्माधर्मपरिवर्तनानधिकारवादिनामपि ? इति धर्मविरोधेनार्थिकपरिस्थितिपरिवर्तनेऽपि न प्रभू राजा, न तरां धर्माधर्मपरिवर्तने ॥

को वा धार्मिको मन्यतेऽशोकादिप्रवर्तितं बौद्धमतं भारतीयानां मतमिति ? कुमारिलभट्टो हि भगवान्—अहिंसावाक्यमपि सौगतानां श्वदृतिनिहितं दुग्धमिवानादरणीयं मन्यते। विदितमिदमस्मदीयसाम्यवादशीर्षकप्रथमप्रबन्धदर्शिनां ( कार्तिकसंख्यायां ) यद् धर्माधर्मपरिवर्तनेन कथं धर्मपरतन्त्रप्रजाहस्तगतमपि राज्यमधोगतिमेवागच्छत, धर्माधर्मपरिवर्तनेन चक्रवर्त्यपि वेनः कां वा दशां प्रापदिति च महाभारतादौ व्यक्तम्। धर्मान्तरदीक्षिता आङ्गलचक्रवर्तिनस्तु सत्यं धन्यवादमर्हन्ति, यतः सुगूढं स्वीयमतप्रचारप्रोत्साहने दत्तदृष्टयोऽपि प्रत्यक्षं न स्वशास्यभारतीयधर्मपरिवर्तनं स्वलक्ष्येष्वेकतमं प्रकाशयन्ति। सनातनधर्मावलम्बिनोऽपि तदा तदा धर्माधर्मकथाप्रसङ्गे भारतीयानामेव केषांचन प्रवृत्तिः, न तु राजकीयानामिति कृत्वैवव्यवस्थापकसभादिद्वाराऽऽक्रान्तयोरपि धर्माधर्मयो राजकीयानामनुवर्तनं स्वकर्तव्यं मन्यन्ते। सांप्रतं तु राजकीयानामपि धर्माधर्मकथायां कथंचन विशिष्टं न केवलमौदासीन्यम्, किन्तु धर्मविरोधिभिर्भारतीयैरेव सहैकमत्यमिति संन्दिह्यैव, विश्वसिमः, वर्णाश्रमस्वराज्यसंघस्य नवमेऽधिवेशने पुरीधामनि दैनन्दिनकृत्यमेव भगवदाराधनमिव वा प्रत्यधिवेशनमनुष्ठीयमानं राजभक्तिप्रकाशनं नवनवस्य चक्रवर्तिनो विषये सर्वानुमत्या निरुद्धमभवत्। संदिह्मः—कां वा परिस्थितिं नूतनशासनसंस्थानोपक्रमानन्तरं सनातनधर्मा-

---

* चक्रीवतः = गर्दभस्य।

वलम्बिनोऽपि कथंचनावतीर्णा राजनीतिक्षेत्रे समादरिष्यन्त इति। मन्यामहे —यथेच्छाचारो हि राज्ञामपि न धर्मो नाम भवति, पारणामोऽपि कंस-हिरण्य-कशिप्वादीनां प्रत्यक्ष एव सर्वेषाम्। को नाम विप्रतिपद्यते—राजा परिवर्तयति, परिवर्तयितुं शक्नोति वेति वा धर्ममधर्मं वेति। इदमेवात्र वयमालोचयामः —किमिदं राज्ञां परिवर्तनं साधु, उत न साधु इति। वयं तु पश्यामः —नैव धर्माधर्मपरिवर्तनं नाम राज्ञामपि सुखोदर्कम्, साधु वा भवति, धर्माधर्मयोः स्वतन्त्रता तु सर्वेषां न सांप्रतमपि प्रत्याहृताऽपहृता वा कैरपि॥

सति चैवमशोकपदेऽवस्थाय देवालयेष्वस्पृश्यानां प्रवेशाधिकारसमुद्घोषोऽयं 'राजा कालस्य कारणमि'ति नीतिमनुसृत्येति व्याख्यनपरम्परा स्वशिरस्येवाशनिपातनम्। अशोकादयोऽपि हि सौगतादिप्रवर्तितमेव धर्मं स्वराज्ये प्रचारयामासुः, न तु स्वप्रवर्तितम्। देवालये प्रवेशाभ्यनुज्ञासमुद्घोषोऽयं कस्य वा मतमनुसृत्य ? न मन्वादीनाम्, न वा तत्तदागमानुयायिनाम्, न वाऽऽर्यसमाजाद्यनुयायिनाम्, न वाऽराजकपरिस्थितिमेव सर्वत्र कांक्षतां जानपदसभासारागाम्, न वा स्वस्य, यः खलु पद्मनाभदासत्वमेवेदानीमपि लेखनेन प्रकाशयति। कथं वाऽयमशोकनामाप्यईति, कुतो वा तत्पदाधिकारः ? विश्वसिमः—पद्मनाभ एवाचिरेण —"श्रुति-स्मृती ममैवाज्ञे" इति स्वयं समुद्घोषितां स्वीयामाज्ञां प्रवर्तयिष्यति सुयोग्यं स्वदासं स्वयमुपस्थाप्य। अनन्तशयननिवासिनो हि सनातनधर्मानुयायिनो हठाद् बलात्कारेण वा पद्मनाभाज्ञोल्लंघनमपि कुर्वन्तो हृदयेन पद्मनाभं शरणं प्राप्य देवा इवासुरेभ्यो भीतभीता विनैव समयातिक्रमं सुरक्षिता भविष्यन्ति॥

"सर्वनाशे समुत्पन्नेऽर्धं त्यजति पण्डितः" इति सत्यं नीतिज्ञा मन्यन्ते। तमेव न्यायं यदि कोऽपि नीतिनदीष्णः स्वलक्ष्यमभिमन्यते, तर्हि मन्दिरेष्वन्त्यजानामपि प्रवेशनव्यवस्थापनमिदमुज्जीवनार्थं विषपानव्यवस्थापनमेव। अनेन हि व्यवस्थापनेन स्वपूर्वजानां महाराजा-

नामिव महाराजत्वस्यापि स्वस्य तिलाञ्जलिरेव दीयते। राज्याधिष्ठातुः पद्मनाभस्य स्वरूपरक्षां विना का वा रक्षा राज्यस्यानन्तशयनाख्यस्य तदीयेन महाराजेन सचिवोत्तमेन वा क्रियते ? न केवलमियं व्यवस्था स्वस्य पद्मनाभदासत्वविघाताय, किन्तु परमात्मनोऽपि सेन्द्राय तक्षकायानुग्रहीति नीत्या विनाशायैवेति को नाम न जानाति ॥

हिन्दुभावो हि स्वप्रजानां हिन्दुधर्मरक्षाप्रबन्धेनैव सुरक्षितो भवति, न तु तद्विरुद्धधर्मव्यवस्थापनेनापि। मन्दिराणां हि विशिष्टस्थितिरागमशास्त्राधीनापि, न तु श्रुत्यैव केवलम्। श्रुतिरपि तु—अन्त्यजानां ग्रामादिप्रवेशेनाशुद्धिं शुध्यर्थप्रायश्चित्तव्यवस्थां च प्रतिपादयति, इति न न श्रुतिविरोधोऽप्यशुद्धानां जातितः कर्मतो वा रजस्वलादीनामिव मन्दिरप्रवेशव्यवस्थायाम्। कथं वा रजस्वलानां स्नातानामपि दिवसत्रयमध्ये शुद्धवस्त्राद्याभरणानामन्यासामिव मन्दिरप्रवेशे प्रत्यवायोऽपरोक्षीक्रियते महाराजैस्तत्सचिवोत्तमैश्च ? यतस्तासां परं प्रवेशो मन्दिरेषु वार्यते। अयमेव न्यायः सुरापायिनां विषयेऽपि योजनीयः। किमिदं निषेधस्थानं सर्वं भवदीयं श्रुतितोऽपरोक्षीकृतं सचिवोत्तमेन। यः खलु श्रुतिषु साक्षादनाम्नानेनान्त्यजानामशुद्धिमप्रमाणं मन्यते ॥

इदमेवात्र दुःखनिदानम्—यत् वर्षत्रयात्पूर्वं स्वव्यवस्थापिताया अन्त्यजोद्धारविमर्शनसमितेः स्वकीयाया अपि मतं नालोचितम्, इति सम्यगालोच्य सनातनधर्मावलम्बिनामपि मतेनैवेयं व्यवस्था महाराजैस्सचिवोत्तमेन च व्यवस्थापितेति समुद्घुष्यते। पद्मनाभक्षेत्रं श्रीकन्याकुमारीस्थानादि च महर्षितुल्यभक्तप्रवरैर्गीतं सर्वदेशीयानामपि भक्तानां सममादरपात्रं पूजास्थानं च स्वेच्छामात्रेण महाराजः केवलमाक्रमत इति ॥

विपत्तिर्हि हिन्दुभावस्य माहम्मदैः क्रैस्तवैर्वा न तथा हठाद् बलात्कारेण वा संपाद्यते, यथा भारतीयैरेव राज-महाराजादिभिस्तत्सचिवोत्तमादिभिश्च। ब्राह्मणमहासम्मेलने काश्यां या किल व्यवस्था सर्वदेशीयैर्विशिष्टैः परःसहस्रैः पण्डितैः संपादिताऽनुमोदिता च प्रायेण सर्वैरेव धर्माचार्यैः, तस्या

अनुष्ठानपक्षे समानयनेन हिन्दुसंख्याया इदानींतन्या न्यूनता नियतं परिहरिष्यत इति सुदृढोऽयमस्माकं विश्वासः ॥

सनातनधर्मानुयायिनोऽपि लोकोन्नतिं देशोन्नतिं जात्युन्नतिं च यथासंभवं मुख्य-गौणापद्धर्मप्रचारादिभिर्व्यवस्थापनीयामेव मन्वते। न हि पतितानां मन्दिरप्रवेशव्यवस्थां कोऽपि सनातनधर्मानुयायी कर्तव्यां मन्यते। व्यक्तं हि तत्तज्जातिव्यवस्थानुसारं मन्दिरेषु प्रवेशयोग्यायोग्यस्थानव्यवस्थापनादिकं कामिकागमाद्यनुसारेण ब्राह्मणमहासम्मेलनावसरसंगृहीतप्रमाणसमुच्चयदर्शने सर्वैरपि विज्ञायेत ॥

केरलक्षेत्रेषु सत्यमस्पृश्यजातयो बहवो वर्तन्ते। इदमेवात्रालोचनीयमस्पृश्यत्वमेतेषां सर्वैरपि केरलीयैः स्पृश्यास्पृश्यवर्गपतितैरप्यद्ययावत्परिपाल्यमानं किमप्रमाणमिति मतम्? उत प्रामाणिकमिति। यद्यप्रमाणिकम्, तर्हि तेषामस्पृश्यानां कुत्र जातावन्तर्भावः सचिवोत्तमैर्महाराजैश्च मन्यते? किं ब्राह्मणेषु? उत क्षत्रियेषु वर्मपदाङ्कितेषु राजकुटुम्बेषु? आहो सच्छूद्रकोटौ? सर्वथा तु अन्त्यजानामन्त्यजत्वमेव यदि निराक्रियते, तर्हि स्पष्टमिदमुद्घुष्यतां महाराजैरद्ययावदस्पृश्या इतः परमेतज्जातीया मन्येरन्निति। अन्त्यजत्वमस्पृश्यत्वं च प्रामाणिकं गृहीत्वा मन्दिरप्रवेशमात्रेऽधिकारव्यवस्थापनेन महाराजैरपि कथं वा हिन्दुसंख्यान्यूनताया द्वारं पिधीयत इति त एव नाम वदन्तु। अतो यावदस्पृश्यजातिविशेषाणां विभागविशेषनियामकपरम्पराविशेषो न ज्ञायते, तावत्पर्यन्तमद्ययावत्परिपाल्यमानैव व्यवस्था तेषां जातौ स्वीकर्तव्या। न केवलं वर्णप्रतिलोममात्रेणान्त्यजा नाम, किन्तु वर्णान्त्यजानाम् अन्त्यजानां च मध्ये प्रतिलोमेनाप्यन्त्यजा भवितुमर्हन्ति। अनन्तरसंख्यायामेतदुपयोगितया तन्त्रशास्त्राद्यनुसारि जातितत्त्वं समालोचयिष्यते। एतादृशस्थलेऽनादिकालप्रवर्तितलोकाचारोऽपि नाप्रमाणं मन्तुं शक्यते। किं महाराजास्तदीयाः सचिवोत्तमा अन्ये वा प्रमाणमेकमपि प्रतिलोमानां श्रीपद्मनाभक्षेत्रप्रवेशादावनुकूलं प्रदर्शयितुं शक्नुवन्ति सर्वेषामपि तदीयानां पण्डितानां परस्सहस्राणां साहाय्येन? अप्रतिषिद्धमनुमतं भवतीति

न्यायेन पाञ्चरात्राद्यागमग्रन्था अपि कथं नाम केरलक्षेत्रेष्वप्यप्रमाणं भविष्यन्ति ? तत्र हि न केवलं पूजाकाले दर्शनमात्रेण, किन्तु प्राकारान्तः-प्रवेशमात्रेणापि प्रायश्चित्तीयतैव मन्दिरस्येति स्पष्टं प्रतिपादितम्। प्रायश्चित्तव्यवस्था हि कृते पापे तच्छोधनार्थमेव, न तु पापानुष्ठापनार्थमपि, इति "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेनास्पृश्यानां मन्दिरप्रवेशायोग्यताव्यवस्थापनमेव योग्यम्। राजा हि समीचीनमित्तु मेव कालमपेक्षते समीचीनां पद्धतिमधिकृत्य। न हि राजनीतिक्षेत्रे कुत्रापि यथेच्छं विना चक्रवर्तिनं वेनम्, अधर्मे प्रजा निर्बन्धेन प्रावर्त्यन्त, कंस-हिरण्य-कशिप्वादीन् वाऽन्तरेण। अतो 'राजा कालस्य कारणमि'त्यपि सचिवोत्तमा अस्थाने एवोपयुञ्जते, इत्यन्येषां मतमनुसृत्यैवोक्तां नीतिमनुसरणीयां मन्महे ॥

---

( ६ )

अधीताः सश्रद्धं भवभयहरा गोतमकथा
निपीतं तर्काम्भोनिधितटलसत् किञ्चिदमृतम् ।
अनन्यस्वान्तेन श्रुतमथ गुरोः शङ्करवचो
न च स्पर्शस्तृप्तेः क्षणमपि मया प्रापि मनसि ॥

( ७ )

त्वया मुग्धे मुग्धो न कृत इति को वाऽस्ति जगता-
मथाश्मानः केचित् कचिदनुचलन्त्यन्यसरणौ ।
अशान्ता वेदान्ते वचसि नितरां श्रद्दधति ते
जगन्मिथ्या मिथ्येत्यसकृदभिलापैकनिपुणाः ॥

( ८ )

वयं वक्रैस्तर्कैरसरलधियो भावविधुराः
कुतश्छन्दोबुद्धिः कुटिलतरमार्गे प्रसरताम् ।
दरिद्रा वा नालं वितरितुमलङ्कारममले
तथाप्येतज्जाने यदसि मम कैशोरदयिता ॥

( ९ )

अहो चित्रं तर्कानुगतमतिभाजामतिशयं
समासक्तिः काव्ये रसिकपरिभाव्ये रसमये ।
समाघ्रातुं गन्धं कुसुमपरिरम्भाकुलमनाः
करालः कालोऽयं सरभसमरण्यं प्रसरति ॥

( १० )

उदेतीयं चिन्ता मनसि यदि केषां कचिदपि
तदाऽवज्ञातास्ते कुटिलतरचित्ताः कवितया ।
अनाप्तत्वादेषामिति हि विरतिः सुन्दरतरा-
दनुग्राह्यास्तेऽतो वचसि विरतः साम्प्रतमहम् ॥

---

# किमिदमाकूतम् ?

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

कष्टं पत्तनवासः, कष्टतरं परगृहवासः, कष्टतमश्च अल्पधनस्य स इत्यापाततो जानन्नप्यनायत्त्या महान्तमनेहसमायस्य कस्यापि प्रसादेनासादितमनतिस्पृहणीयमुद्योगमेकमवलम्ब्यात्मने पत्तनवासमरोचयम्। व्ययरचं चतुर्थमंशं वेतनस्य भाटकमुपकल्प्यागारे कस्मिन्नप्यावासयोग्यमात्मानम्। प्रतिमासं प्रत्ययनं प्रतिहायनं च नवं नवं निकेतनमधिवसन्नधुनातनो नागरिको न विरज्यत इति नायं मामकीनो दोषः। चिरस्याध्युषितमगारमिदमामूषकादाशृगालम् आवृश्चिकादामशकं च क्षुद्रसत्त्वानामनारतं विहारभूमिरासीत्। आवासपरिवर्तनं हि न दुर्दैवमपि परिवर्तयति। कस्मिन् देशे पुनरनडुहां कर्षणक्लेशहानिरिति चाप्तभाषितम्।

गण्डस्योपरि पिटकान्यायेन नैतावताप्यतुष्यद्दैवं यावन्म्लेच्छागारपरीतेऽस्मिन् वेश्मनि सदागतिरपि पार्श्वघातपीडित इव मन्दं मन्दं स्पन्दितुमपि प्रागल्भ्यं नाविन्दत। अथ यदा प्राभवत्स्पन्दितुं म्लेच्छकुटीरेभ्यः कुपूयं गन्धमावहन्नात्मनो गन्धवहत्वं कथं कथमप्यन्वर्थयामास। मदीयं च मन्दिरमनतिविपुलेनारामेणाविनाभूतमासीदिति ननु पूर्वमेव वक्तव्यमासीत्। पौरैरप्रतिपालितः अन्तरा कृत्यान्तरमलभमान आरामदोहदेनान्येन वा स्वाधीनेन विनोदेनौत्सुक्यमपोहयतीत्यतिरोहितम्।

अथ कदाचिन्मूषकोत्करोपहतस्योदवसितस्य पश्चिमे निष्कुटे तिष्ठन्नहं कृकवाकुविकिरमवकरप्रायमसमीकृतमारामदेशं विकिरन्नासम्। सहसा पदाहतिध्वनिमिव किमप्याकर्ण्य परावृत्याद्राक्षम्। न किञ्चित्पार्श्वतोऽदृश्यत। किमपरत्र पक्षे भवेदसाविति ततोऽपि समचारयमीक्षणयुगलम्। तथापि जिज्ञासा मे नापोह्यत। परमवर्धत। पुरतः पुनर्न हि किञ्चिद-

लक्ष्यमिति ननु न वक्तव्यम्। भवेत्पृष्ठतो योऽसावन्तिमः पक्ष इति सर्वं-लक्ष्यमैक्षिषि। हन्त सत्यमेव। नितान्तमकान्तदर्शना त्वगस्थिमात्रावशेषा शोचनीयवेषा योषा काचित्। अनतिक्रान्तजानु वसनं वसाना आवृतवक्षस्थ-लाऽप्यपर्याप्त्या चेलखण्डस्य सुलभदर्शनलम्बिपयोधरा कफोण्यग्रलघुविधृत-वैणवपिटका प्रकृत्या असंस्कारेण वा रूक्षालका श्यावदती मलिनवर्णा च सा नियतं निध्यायतः कस्याप्युद्वेगं जनयेद्यदि नैतन्नागरिकस्य विस्मय-मुत्पादयेत्। अनया सल्लापमपि यदि कोऽपि परिजिहीर्षति, नतरामभिजातेन खेत्तव्यम्। तदहमपि न केवलमौन्मुख्यमौत्सुक्यं च न प्रादर्शयम्, अपि तर्हि पर्यायेण छायाभेदेन वदने विक्रीडन्तं वैमुख्यमुद्वेगं च नापारयमतिगूहितुम्। किमियता तस्याः, या प्रयत्याप्यानक्तं याचित्वा चातिकृपणेषु प्रतिक्षणमेध-मानां जाठरबाधामपोहितुं न प्रभवति। न हि तस्या इतोऽप्यसह्यमन्यत्। कियदिदमौदासीन्यं न्यक्कारो वा। आर्यमिश्रेति मामामन्त्रयत।

न हि स्त्रीमात्रं पुरो मेऽवस्थातुमालपितुं वा धृष्णोति या पुनर्न जात्यापि तुलामारोहति, तिष्ठत्वभिजनो विद्या धनं च, कथमेषा वराकी पुरो मेऽव-स्थायाभाषते। अहो अभिनवः परिभवः,। इत्युद्वेलमुज्जृम्भमाणो मन्युस्तस्याः सकृपणमवलोकितं नैकन्यक्कारसहिष्णुतारूपमकातरभावं चाल-क्ष्योच्चैराविर्भवन्त्यनुकम्पा च परस्परविजिगीषया मामकीनेऽन्तःकरणे समराङ्गणे चिरमयुध्येताम्। कष्टं हि दारिद्र्यम्, कष्टतरं देहीति वचनम्, कष्टतमं च नास्तीति भाषणम्। नियतमेषा याचिष्यते। नाहं प्रभुः प्रार्थित-विश्राणनेनैनां कृतार्थयितुम्। किं क्रियताम्। बाधिर्यं हि महदुपकारकं विशेषतोऽर्थ्यमानस्य कदर्यस्येति मनसिकृत्य साध्वभ्यनैषमेनामपवाहयितुम्। नेयता सा परावृत्ते। प्रववृते परमुच्चैस्तरां पुनः पुनरामन्त्रयितुम्। अदत्त्वोत्तरं नास्ति निर्गमोपाय इति शनैः शिर उन्नमय्य का त्वं किमर्थ-मत्रागत्योपरुणत्सि मामिति साटोपमवादिषम्।

आर्यमिश्राः, किमु सन्त्यस्थीनि श्वभिः काकैर्वानीय विप्रकीर्णानि यदर्थमित्थं पिटकमादायेतस्ततः पर्यटामि।

अज्ञानान्धोरपि मे महान्तं मन्युं मन्दाक्षं चोदपादयदद्सीयः पर्यनुयोगः। हताशे किमात्मानुमानेनामृताशान्पलाशान् मन्यसे यन्मामप्रजन्मानमनर्हमेव-मनुयुङ्क्षे। ब्राह्मणानामगारेष्वस्थ्नां कः प्रसङ्गः ? दुराशापिशाचिकायास्ते कीनाशः प्रतिवक्ता। अपयाहि इति परुषैरक्षरैरवाधीरयमेनाम्।

कदाचित्परिसरवर्तिनां ब्राह्मणेतराणां कुटीरादानीय पातितानि भवे-युरार्ये इति किलान्वयुङ्क्त। मा कुप्य महाभाग, उदरमित्थं रिक्तं मुखरय-तीत्युदीरयामास। किमर्थमेतान्यन्विष्यन्ते। किमेभिर्वृत्तिमुपकल्पयसि। अलं प्राक्तनैरेव पापपुञ्जैः, येषां परीपाकमधुनाऽनुभवसि। नेतः परमपि पापमाचर। पापिनि, पलायस्वेत्यहमुपादिक्षम्।

महाभाग, नाहमेभिर्वृत्तिं कल्पयामि। शिरोहार्यस्यास्थिभारस्यापर्याप्तं मूल्यं चतस्रः कला लभे। ताभिश्चार्धमुदरस्य पूरयामि। नाहं साक्षादस्थिभि-र्जीवनं धारयामि। मिश्राः पुनः साक्षादेवैतानि भुञ्जते। यन्महाभागै-रास्वाद्यन्ते सिताः शर्करास्तासां किलेदं शौक्ल्यमस्थिसम्प्रयोगजन्यम्। किन्तु महाभागा न जानन्ति ( Parry ) सार्थवाहसंघम्, येनेमा निर्मीयन्ते। इक्षुरसनैर्मल्यसम्पादने कथं पुनरस्थ्नां प्रयोग इत्यत्र विशेषज्ञा भवन्तः प्रमाणम्। अहं पुनः कर्मकरी। भवन्तस्तु भोक्तारः। विमृशन्तु महाभागाः को वा पापीति।

सर्वमेतदतर्कितं प्रतिवचनमभिनवां म उत्कण्ठामुन्मीलयामास, यतोऽहम-प्राक्षं पुनरप्येनां 'अयि किं मनुजानामप्यस्थीनि संगृह्यन्ते आहोस्वित्तिरश्चा-मेवेति। बाढं चीयन्ते यदि तावदुपलभ्यन्ते। अननुकूलं हि दैवमस्माकं यद् बहूनां दग्धानि भस्मप्रायाण्यप्यस्थिशकलानि सादरं संगृह्य कुम्भे निधाय साधु संरक्ष्यन्ते। विशेषेण च भूसुरैः। तिरश्चां पुनस्संस्कर्तुरभावा-ल्लभेमहि विनैव महान्तमायासं समीहितमस्थिकूटम्। महाभाग, त्वरते कार्यकालः। मिश्राणां हि गेहे स्थाल्यधिश्रिता। अचिराद्रोक्ष्यन्ते मम पुनश्चिरान्न वा भवेदभ्यवहार इति व्याहरन्ती सत्वरं निर्जगाम।

किन्नामेदमप्याकूतमकृतकानां वचनानां यानि "लक्षणे कुम्भे पुमांसं,

उपसर्पमातरं भूमिमेतां, पांसूनवकीर्य कपालेनापिधायाथानवेक्ष्य प्रत्याव्रजन्ति, पृथिव्यास्त्वा अक्षित्या अपामोषधीनीं," इत्यादिनाऽस्थ्नां सञ्चयनं विदधति, यदायत्यां ( parry, ) नामा सार्थवाहसंघो भविष्यति। तेन चेक्षुरस-विमलीकरणे नाराण्यस्थीन्युपयोक्ष्यन्ते। तथा नाम निर्मिताः शर्करा-श्चत्वारोऽपि वर्णा वर्णलोभाद्भोक्ष्यन्ते। महदिदमनर्थावहं पुमर्थार्थिनाम्। कथञ्चिन्मानुष्यकाण्यपि वास्थीनि दौर्लभ्यापादनेनापोह्यन्ताम्। तदपाकरणं न दाहमात्रेण सूपपादम्। ऊरुद्वयसे गर्ते निपात्य पांसुभिर्लोष्टशकलैश्च यदि नामाव्रियन्ते कदाचिच्छक्यनिवारणो भवेल्लोक इति ?

यथा यथाऽहमिदमाकूतं तत्स्मारकं बोधकं वा सल्लापं च स्मरामि, तथा तथात्मन्यवज्ञा तस्यामादरो महनीयतामतिश्रातितरामुज्जिहीते, इति नाह-मकृतज्ञेतराणां खिलीकारभाजनम्, यतः एकाक्षरप्रदातृत्वं गुरुत्वमिति नाश्रुतम् ॥

---

# आयुर्वेदस्य पूर्णावयवत्वम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—आयुर्वेदमहोपाध्याय-पञ्चकर्मविशारद-
श्रीकुञ्जकिशोरभट्टाचार्यः ]

## पञ्चकर्मचिकित्सा

यस्मिंश्चिकित्सिते कायशोधनस्य पञ्चोपाया निर्णीतास्तामेतां पञ्च-कर्मचिकितसामाचक्षते। ते चोपायाः—वमनम्, विरेचनम्, अनुवासनम्, निरूहणम्, नावनञ्चेति। चिकित्सावसरे यथाक्रममिम आदातव्य इत्याहुः शास्त्रकाराः।

"प्रथमं वमनं पश्चाद्विरेकश्चानुवासनम्।
एतानि पञ्चकर्माणि निरूहो नावनं तथा ॥" इति।

रोगोत्पत्तेः प्रधानं हेतुर्वायुपित्तश्लेष्मणां वैषम्यम्, यद्दोष इत्याचक्षते चिकित्सकाः। तान् दोषान् समूलकाषं कषितुं वमनं विरेचनं वस्तिश्चेति त्रय उपायाः प्राधान्येनावलम्बनीयाः। तत्र वमनं श्लेष्माणं हरति, विरेचनं पित्तम्, वस्तिर्वायुम्। सर्वासु चिकित्सासु वस्तिचिकित्सैव ज्यायसी। सा पुनरनुवासन-निरूहणोत्तरवस्तिभेदेन त्रिधा भिद्यते। उत्पत्तिस्थान-भेदेन रोगो द्विविधः—आमाशयसमुत्थः पक्वाशयसमुत्थश्च। आमाशयः पक्वाशयश्च पृथक् समुदायेन वा दूषितौ रुजं जनयतः। पक्वाशयसमुत्थे व्याधिसङ्घे वस्तिरेव केवलं चिकित्सा। तेन केचिद् वस्तिं चिकित्सार्द्धं वदन्ति। पक्वाशयशुद्ध्या च गौणत आमाशयोऽपि शुध्यतीति केचनेमां सर्वां चिकित्सां वदन्ति। "तस्माच्चिकित्सार्द्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके" इति (चरके)। सेयं चिकित्सा व्याधितस्य व्याधिनिवृत्त्यर्थं स्वस्थस्य स्वास्थ्यपालनार्थञ्च प्रयुज्यते। नावनं (नस्यं) पञ्चकर्मचिकित्सायां पञ्चमम्। इदमूर्ध्वजत्रुगतेषु रोगेषु विशेषेण हित-मादधाति। एतच्च त्रिविधम्—शिरोविरेचन-बृंहण-शमनभेदात्। लङ्घन-पाचनैरुपशमिता दोषाः कदाचित् कुप्येयुरपि, पञ्चकर्मभिर्न्यक्कृतास्तु दोषा नैव पुनरात्मानं लभन्त इत्याह चरकः—

"दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः।
जिताः संशोधनैर्ये तु न तेषां पुनरुद्भवः॥" इति।

शोणितावसेको रक्तमोक्षणं वा

कायचिकित्सायां वस्तिरिव शल्यचिकित्सायां शिराव्याधोऽप्यर्द्धाङ्गतां भजते। यथाह भगवान् धन्वन्तरिः—

"शिराव्याधश्चिकित्सार्द्धं शल्यतन्त्रे प्रकीर्तितः।
यथा वस्तिः प्रणिहितः सम्यक् कायचिकित्सिते॥" इति।

अनन्तवाते सूर्यावर्ते अर्द्धावभेदके अभिष्यन्दे तिमिरे च रोगे शिराव्याध एक एवान्वर्था चिकित्सेत्यस्माकम् अपरोक्षो वैयक्तिकः प्रत्ययः। वातरक्ते शोधितेन जलौकसा शोणितमोक्षो विस्मयावहमेव फलमुपदर्शयतीत्येतदपि

बहुशः प्रत्यक्षीकृतमस्माभिः। सन्यासमूर्च्छादौ चासृङ्मोक्षमधिकृत्य सुश्रुतः—

"एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।

रक्तो हि व्यम्लुतां याति तच्चेन्नास्ति न चास्ति रुक्॥" इति।

इदानीं पुनः काश्चनाशिक्षिता रमण्यः "वातं प्रतिकुर्मः" "वातव्यथां प्रशमयामः" इत्याद्युच्चै रारट्यमानाः सर्वत्र भ्रमन्ति, शृङ्गद्वारा मुखेन शोणितमाकृष्य वातं जयन्ति चेति दृश्यते। तदिदमायुर्वेदोदितं शोणितावसेकमनुकुरुत इति जानीमः। प्रसिद्धश्च रामायणे कैकेय्या मुखतो रक्तमाकृष्य महाराजदशरथस्य व्रणशोथाद्विमोचनम्। परमेतत् पश्चात्तापपदम्, यदाधुनिका आयुर्वेदमहाविद्यालयास्तासु तासु विशेषचिकित्सासु सदैवोदासते। तेषु चायं सनिर्बन्धोऽस्माकमनुनयः—साम्प्रतमचर्चितास्तास्ता विशेषचिकित्साः प्रवर्त्य ते लुप्तप्रायमायुर्वेदगौरवमुद्धर्त्तुं बद्धपरिकराः सन्त्विति।

## स्वास्थ्यविज्ञानम्

कायः कौमारभृत्या भूतविद्या शालाक्यं शल्यम् अगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमित्यायुर्वेदस्याष्टावङ्गानि। ऋषयः प्रत्येकमङ्गमवलम्ब्य पृथक् शास्त्राणि निर्ममुः। विना शल्यशालाक्ये अन्यानि षडङ्गानि नवीनया सरण्या विस्तरश ऋषिभिर्यथा समालोचितानि, मन्ये तादृगालोचनमद्य यावदन्यत्र चिकित्साविज्ञाने दुर्लभतामेव धत्ते। रोगप्रतिषेधकमौषधमाविष्कुर्वाणाः साम्प्रतिकाश्चिकित्सकाः परःसहस्राणां धन्यवादानां पात्रीभवन्त आत्मानं बहु मन्यन्ते। आयुर्वेदे त्वयं प्रतिषेधविधिः समूलमालोचितस्तेषां दूरदर्शिन्या बुद्धेर्निदर्शनमभूत्। आयुर्वेदीया दिनचर्यातिथिचर्यर्तुचर्यादयः, भोज्यविचारे विरुद्धभोज्यानां प्रतिषेधविधयश्च विज्ञानसम्मता इत्याधुनिका अपि स्वीकुर्वन्ति। दिवा निद्रा रात्रौ दधिजग्धिः त्रयोदश्यां वार्ताकीभोजनम्, ग्रीष्मे आर्द्रकाभ्यवहारः, क्षीर-

मत्स्ययोः सहोपयोगः, मधुसर्पिषोः समांशयोरशनम् इत्यादयः क्रियमाणा निषेधास्तेषां सूक्ष्मेक्षिकायाः परमं निदर्शनमस्माखाविष्कुर्वते ।

परिचर्याविद्या

रुग्णानां शुश्रूषव आयुर्वेदे परिचारकनाम्ना पप्रथिरे । चरकसुश्रुतयोर्मतेन स्नेह एकाग्रता धैर्यं शुचिता चेति चतुर्णां गुणानामाश्रयो नरो नारी वा परिचर्यायामधिक्रियते । कुमारी आपाला रुग्णमिन्द्रं पर्यचरदिति ऋग्वेदे । अश्विनाविन्द्रस्य शुश्रूषायां सरस्वतीं नियुयुजतुरिति वाजसनेये । सेयं वाग्देवीतो भिन्ना तन्नामा काचन रमणीति ज्ञेयम् । सम्प्रति च काले आयुर्वेदचिकित्सोपयोगितया कतिचन परिचारकाः परिचारिण्यश्च शिक्षयित्वा व्यवस्थापयितव्याः । अत्र चायुर्वेदप्रतिष्ठानान्यवधास्यन्तीति भृशमाशास्महे ।

आवन्त-मैथिलादिविद्यायतनानां प्रागितिहास आयुर्वेदस्य प्रभूतं गौरवमस्मासूपस्थापयति । राजानुग्रहेणोत्कृष्टशिक्षाया व्यवस्थया तत्तद्विद्यालयत आयुर्वेदधुरन्धरा आविर्बभूवुः । सेयमुन्नतिरायुर्वेदस्य विश्वविद्यालयकरावलम्बं विना न सम्भवतीति प्रथमतो विश्वविद्यालय एवायुर्वेदीयः प्रतिष्ठाप्यः । सा च विश्वविद्यालयप्रतिष्ठायुर्वेदमनुशीलयतां संहतिमपेक्षते । तन्मिलन्तु आयुर्वेदरसिकाः, परिशीलयन्तु सङ्घशक्तिम्, बध्नन्तु च परिकरमायुर्वेदस्योन्नतये । अत्रैव निबन्धमिममुपसंजिहीर्षन भगवन्तं धन्वन्तरिमस्माकमात्मोन्नतिचेष्टायाः साफल्यं कामयामहे । सोऽयं भगवान् भारते वर्षे पुनरप्याविर्भूय लुप्तप्रायमायुर्वेदमुज्जीवयतु । तत्प्रसादाच्च—

वल्ली पादपपत्रमूलनिचयाः शक्तिं लभन्तां परां
वायुस्तोयमथो जहातु परितो दोषाननिष्टाकरान् ।
आयुर्वेदविभूतिरस्तु जयिनी लोकोपकारक्षमा
क्षेमं लोकचया वहन्तु बहुलं शान्तिश्चिरं राजतात् ॥*

* निबन्धोऽयं तत्रभवता निबन्धकेन "गोविन्दसुन्दरी" आयुर्वेदमहाविद्यालयस्य छात्राणां वार्षिकेऽधिवेशने वाचितः ।

## दशमः परिच्छेदः

'वडदिना'वकाशः समीपतरवर्त्ती बभूव। ततश्च जगदीशभवनस्य बृहत्तरः प्रकोष्ठो मन्दिरार्थम् अन्ये च प्रकोष्ठाः कलिकातातः समागमिष्यतां मान्यानामतिथीनां वासार्थं सज्जिता अभूवन्। स्वयं विलासविहारी तस्य व्यवस्थां निरवर्त्तयत्। साधारणानां निमन्त्रितानां संख्यापि नाल्पीयसी। ये तावद् विलासस्य बन्धवस्ते रासविहारिणो गृहे, तदितरे च विजयाया गृहे स्थास्यन्तीति निर्णीतमभूत्। याश्च महिला आगमिष्यन्ति ता अप्यत्रैवाश्रयं लप्स्यन्ते। व्यवस्थापि तथैव जाता।

कदाचिद् विजया प्रातःस्नानं समाप्य निम्न उपवेशगृहे प्रवेशं कुर्वती व्यलोकयत्, प्राङ्गणस्यैकतो दण्डायमानः परेशमातुः परेश एकेन हस्तेन कच्छवस्त्रतो भृष्टांस्तण्डुलान् आदाय चर्वयन्नासीत्, हस्तान्तरेण च रज्जुबद्धाया एकस्या गोर्गलम् आमृशन् अनिर्वचनीयां तृप्तिमन्वभवत्। तृप्तिनिमीलिताक्षी सा गौरपि ग्रीवामुन्नमय्य बालस्य सेवां स्वीकुर्वत्यभूत्।

विजातीययोरनयोर्जीवयोः सौहृद्येन सह तस्या मनसि पुञ्जीभूताया वेदनायाः को नाम सम्बन्ध आसीदिति यद्यपि दुर्वचम्, तथापि दर्शं दर्शं चक्षुर्द्वितयम् अजानत्या एव तस्या अश्रुप्लावितमभूत्। बालोऽयं तस्याः सर्वथाऽनुगत आसीत्। सा नेत्रे परिमृज्य तमन्तिकमाहूय सस्नेहकौतुकमवोचत्, हंहो परेश, इदं किल वस्त्रं ते माता त्वदर्थमक्रीणान्नु? धिक्—इदमपि प्रान्तम्?

परेशो ग्रीवां तिरश्चीनां विधाय कूणितनेत्रेणावलोकयन् स्वया वस्त्रदशया विजयाया वस्त्रस्य विचित्रायतां दशां मनसा संवादयन् अतितरामक्षुभ्यत्। तस्याशयमाकलय्य विजया स्वं वस्त्रप्रान्तं दर्शयन्ती प्राह, ईदृशादन्यत् किं त्वयि शोभते? किमुच्यते? परेशस्तदात्व एव सम्मतिमुपदर्शयन्नवदत्,

माता किल मात्रयापि क्रेतुं न जानाति। विजया प्राह, मया पुनः श्रीमते एवमेवैकं वस्त्रमुपक्रीय दातुं शक्यते, यदि त्वम्—परं 'यदि'ना परेशस्य प्रयोजनं नासीत्। स सलज्जस्मितेन वदनमाकर्णं प्रसार्यापृच्छत्, कदा दास्यसि ?

दास्यामि, यदि त्वं मम किञ्चन वचनमनुरुणत्सि।

किं वचनम् ?

विजया किञ्चिद् विचिन्त्यावदत्, परं तव मातर्यपरेषु वा केषुचिच् श्रुतवत्सु परिदधानं त्वां प्रतिरोत्स्यन्ति।

एतत्सम्बन्धिन्याः कस्या अपि प्रतिरोधकतायाः स्थानदाने समुचिता मनोऽवस्था परेशस्य नासीत्। स ग्रीवां कम्पयन्नाह, जनन्या कथमिव ज्ञायताम् ? त्वं ब्रूहि, मया क्षणात् प्रतिपालयिष्यते। विजयया पृष्टम्, त्वया 'दिघडा' ग्रामो ज्ञायते ?

परेशो हस्तमुत्रमय्याह, सोऽयममुत्र। कोपकीटमन्वेष्टुं बहूनि दिनानि दिघडायां गच्छामि। विजयाऽपृच्छत्, अमुत्र केषां भवनं सर्वतो बृहदिति त्वया ज्ञायते ?

परेशः प्राह, बाढम्, विप्राणां भोः। व्यतीतेऽब्दे तेन [ विप्रेण ] रसं पीतवता छदित उत्क्षेपनेनापत्यत। यथाऽत्र गोविन्दस्य गुडधाना-शर्करा-खण्डस्य विपणिरथामुत्र तेषां सौधम्। गोविन्दः किमाहेति जानासि मातृके ? स वदति, सर्वं दुर्मूल्यम्, नातः परम् अर्धताम्रखण्डेन दश शर्करा-खण्डानि लभ्येरन्। अथ यदि त्वमेकदा अखण्डेन ताम्रखण्डेन क्रयमादि-शसि मातृके, मया तर्हि द्वाविंशतिः शर्कराखण्डानामानेतुं शक्येत।

विजया प्राह, त्वया द्वयोस्ताम्रमुद्रयोः खण्डानि क्रेतुं शक्यन्ते ?

परेशः प्राह, हुम् अस्मिन् करे एकमुद्राया द्वाविंशतिं खण्डानि गणनेन गृहीत्वा वक्ष्यामि, आपणिक, अत्र करे भूयो द्वाविंशतिं खण्डानि गणयन् अर्पय। अर्पितेषु च वक्ष्यामि मातृदेव्या सन्दिष्टम्, द्वे विना मूल्यम्, नैतदेवम् ? एवं तर्हि करे मुद्रे दास्यामि—नैतदेवम् ?

विजया हसन्ती प्राह, बाढम्, एवं मुद्रे देये। अथचापणिकं पृच्छेः "योऽयममुष्मिन् विशाले सौधे नरेन्द्रमहोदय आसीत, स क गतवान् ?" वक्ष्यसि "यस्मिन् भवने स वर्तते तन्मां दर्शयितुमर्हस्यापणिक ? किमरे शक्ष्यसि ?"

परेशः शिरः कम्पयन्नाह, हुम ;—भवतु, मुद्रां देहि अहं तूर्णमानयामि।

अथ यद्जिज्ञासार्थमादिष्टोऽभूः ?

परेशः प्राह, हुम्, तदपि।

करप्राप्ते शर्कराखण्डे न तावत् प्रस्मरिष्यसि ?

परेशः करं प्रसार्याह, त्वमादौ मुद्रामर्पय, अहं द्रुतं गच्छामि।

अथ यदि ते जननी पृच्छेत् 'परेश, क गतोऽसि ?' किं प्रतिवक्ष्यसि।

परेशो बुद्धिमत्तर इव हसन्नाह,—तदहं यथायोग्यं वक्तुं शक्ष्यामि। खण्डाधारं पर्णसमुद्गकमेवं वस्त्रप्रान्तेनापह्नुवानो वक्ष्यामि, मातृदेवी मामादिशत्—अमुत्र विप्राणां नरेन्द्रमहोदयस्य सन्देशमभिज्ञातुं प्रस्थितवानस्मि। त्वं तावत्तूर्णमर्पय मुद्राम्।

विजया हास्यं प्रवर्तयन्ती प्राह, किमिव निर्बोधो बालस्त्वं रे परेश, किं रे मातुरप्ययथा वक्तव्यम् ? खण्डान् क्रेतुं प्रतिष्ठसे, पृष्टश्च तदेव वक्ष्यसि। परं मा तावदापणिकात् सन्देशमिमं ज्ञातुं प्रास्मार्षीः, अन्यथा वसनं नैव लप्स्यसे, तदेतद् विशेषतः कथितोऽसि।

बाढम्, इत्युक्त्वा परेशे मुद्रामादाय द्रुतं प्रस्थिते विजया शून्यया दृष्ट्या तां दिशमवलोकयन्ती तूष्णीमतिष्ठत्। यस्याः प्रवृत्तेर्विज्ञानकौतूहलितायां स्वल्पमप्यप्राकृतत्वं नास्ति, यां सा यं कञ्चनापि जनमादिश्य बहोर्दिनात् पूर्वमनायासेन ज्ञातुमलं भवेत् सैवेदानीं तस्याः सकाशे कथमेतावतोऽप्रतिभातिभारस्य विषयोऽभूदिति यदि सकृदामूलमालोचयिष्यत्तदाऽस्या गोपनक्रियाया लज्जयाऽद्य सा स्वयमेवामरिष्यत्। परं सेयं लज्जा तस्याश्चिन्ताधारया सहाविज्ञातं सम्मिलिता तदाकाराकारितेव किल

जातेति तस्या लज्जायाः पृथगदृष्टिस्तस्याश्चक्षुषोः कदाचिदासीदित्यपि न मनस्यापतत् ।

कियत्यो लिपयो लेखनीया आसन्, विजया कालमतिवर्तयितुम् आसन्दिकायामागत्य लेखनी-पत्रादिकमादायोपाविशन् । परं वृत्तान्तास्तथा विशृङ्खलमसंबद्धञ्च मनसि न्यपतन् यथा कतिपयानि पत्राणि छित्त्वाऽन्ततस्तस्या लेखनीन्यास आवश्यकोऽभूत् । परेशस्यापि दर्शनं नास्ति । मनश्चाञ्चल्यं दमयितुमक्षमा विजया गृहशिखरमारुह्य तस्यागमनमार्गमालोकयन्त्यतिष्ठत् । महता कालेन दृष्टमभूद् यत् स नदीपथमनुसृत्य सवेगमागच्छति । कम्पितपदायां विजयायां शङ्काकुलितेन वक्षसा निम्नभूमिमासाद्य बहिःप्रकोष्ठं प्रविशन्त्यामेव बालकः खण्डसम्पुटं वसनान्तेन प्रच्छादयन् चौर इव धीरपदसञ्चारेण समीपमुपसृत्य पर्णपुटं वितत्यावदत्, मुद्राद्वयेन द्वादश चतुष्काण्यानीतानि मातः ।

विजया सभयं प्राह अथापणिकः किमाह ?

परेशः फिस् फिसुत्कारेणावदत्, प्रतिमुद्रं षट् चतुष्काणीति वार्तायाः कस्मैचिदाख्यापनां प्रत्यषेधत् । अपि नाम जानासि, स किं ब्रूत इति—

विजया प्रतिबध्नती प्राह, अथ तस्य विप्राणां नरेन्द्रमहोदयस्य वार्ता—

परेशः प्राह, स तत्र नास्ति, क्वापि प्रातिष्ठत् । गोविन्दः किं ब्रवीतीति जानासि मातः ? द्वादशसु चतुष्केषु—

अत्यर्थं विरज्यन्ती विजया परुषस्वरेणावदत्, अपनीयन्तां ते द्वादश चतुष्काणि खण्डस्य मदग्रतः—इत्युक्त्वाऽपसृत्य गवाक्षकीलमवलम्बमाना बहिर्दर्शमवातिष्ठत ।

अचिन्तितोपनतेनानेन पारुष्येणार्भकोऽसावियन्मात्रः समपद्यत । स तथा द्रुतमगच्छत् प्रत्यागच्छच्च, एकादशानां चतुष्काणां स्थाने कियता कौशलेन द्वादश चतुष्काणि खण्डानामक्रीणाच्च, तथापि हन्त मातरं प्रसादयितुं नाशक्नोदिति भावयतस्तस्य नासीदवधिः क्षोभस्य । समुद्रकद्वयं करे कुर्वाणः स मलिनाननः प्राह, नातोऽभ्यधिकं पुनर्दीयते मातः !

नात्र विजया प्रत्युत्तरमरचयत्, परमस्यां दिशि दृष्टिमनिक्षिपत्यपि स वत्सकस्यावस्थामन्वभवत्। अतश्च कियत्कालानन्तरं सकृपमाह, गच्छ परेश ; अमूनि त्वया भक्ष्यन्ताम्, याहि ।

परेशः सभयमपृच्छत्, सर्वाणि ?

विवृत्तमुखैव विजया प्राह, सर्वाणि, अलमेतैर्मम ।

क्रोधस्यैतद् विलसितमित्यवैत् परेशः। कियत्कालं तूष्णीमवस्थाय वत्सस्य प्रवृत्तिं स्मरत एव तस्यान्यापि काचन कथा मनस्युदभूत् । शनैः शनैरवादीत्, भट्टाचार्यचरणादुपलभ्यागच्छेयं मातृके ?

को भट्टाचार्यचरणः ? किमुपलभ्य—इत्यौत्सुक्येन पृष्ट्वा विजया मुखं परावर्त्यैव व्यरमत्। मुखस्यावशेषिता भाषा वदनान्तरेवास्थात्, न पुन र्बहिरगात्, अलिन्दे सर्वथा सम्मुख एवाकस्मान्नरेन्द्रोऽदृश्यत,—क्षणान्तरे च स गृहान्तश्चरणं कृत्वा हस्तमुत्तोल्य विजयायै नमस्कारं व्यज्ञापयत् ।

परेशः प्राह, क्व गतो नरेन्द्रमहोदयः—

विजया प्रत्यभिवादस्याप्यवसरं नालभत, महत्या त्रपया सर्वं वदनमण्डल-मरुणीकृत्य त्वरितत्वरिता प्राह, भवतु, गच्छ, गच्छ, न पुनर्जिज्ञासायाः प्रयोजनम् अस्ति ।

परेशोऽबुध्यत, इदमपि सक्रोधवचनम्। खिन्नकण्ठेनावदत्, काण-भट्टाचार्यमहोदयस्तु तेषां पार्श्ववर्तिनि भवन एव तिष्ठति मातः। यदाह्वा-पणिको गोविन्दः—

विजया शुष्कं हसित्वावोचत्, स्वागतमुपविश्यताम् ।

परेशं प्रत्यालोक्याह, त्वमिदानीमपसर तावत् परेश। महती किल वार्ता ; तस्याः पुनः—तामन्ततो दिनान्तरेऽपि ज्ञातुं शक्ष्यसि। इदानीं गच्छ ।

परेशे प्रतिनिवृत्ते नरेन्द्रो जिज्ञासते, भवती नरेन्द्रमहोदयस्य वार्तां ज्ञातुमिच्छति ? स क्वास्ते, तत ?

विजयाऽस्वीकर्तुं प्राभविष्यच्चेदजीविष्यत । परमनृतेन तस्याः परिचयो

नासीत्। सा कथमप्यन्तर्लज्जां दमयमाना प्राह, बाढम्, तत् पुनरन्य-दापि ज्ञातुं शक्नुयाम्।

नरेन्द्रः प्राह, किमर्थम्? अस्ति किञ्चन प्रयोजनम्?

प्रश्नस्तस्याः कर्णयोरौपहासिक इवाश्रूयत। अकथयच्च, प्रयोजनमन्तरेण किं कोऽपि कस्यापि प्रवृत्तिं ज्ञातुं नाभिलषति?

कोऽपि किं करोति न करोति वा, छिद्यतां सा कथा। परं तेन सह तु भवत्याः सर्वोऽपि सम्बन्धश्छिन्नः, तथापि कथं सोऽन्विष्यते भवत्या? किं नाम सर्वथा नोपशुद्धम् ऋणम्?

विजयाया वदने क्लेशचिह्नमदृश्यत, परं सा नोत्तरयत्। नरेन्द्रः स्वय-मपि तस्यान्तरिक उद्वेगः सर्वथा गोपयितुं नाशृणोत्। पुनः प्राह, यद्यन्यदपि किञ्चनर्णं प्रकाशतां गतं स्यात्, तथापि, यथाहं जानामि, तस्यैवं किञ्चन नावशिष्यते येन तदनिर्यातितमृणं शुध्येत्। इदानीं पुनस्तस्या-न्वेषणम्—

क एवं भवन्तमाह, यन्मया ऋणार्थमेव स मृग्यते?

तदपहाय किमन्यद् भवितुमर्हतीति तु नाहं चिन्तयितुमलम्। सोऽपि भवतीं नाभिजानाति, भवत्यपि तं न जानाति।

तेनाप्यहमभिज्ञाये, मयापि सोऽभिज्ञायते।

नरेन्द्रः प्राहसत्; अकथयच्च, भवतीं सोऽभिजानातीति सत्यम्, भवती पुनस्तं नाभिजानाति। अवधीयतां तावत्, अहमेव यदि ब्रवीमि, मम नाम नरेन्द्रः, एवमपि भवती—

विजया सशिरःकम्पमुक्तवती, एवमप्यहं विश्वसिमि, ब्रवीमि च, सेयं सूनृता वाग् बहोर्दिनात् पूर्वमेव भवद्वदनान्निरगमिष्यच्चेत् सम्यग-भविष्यत्।

फुत्कारेण निर्वापिते प्रदीपे गृहस्याकृतिर्यथा परिवर्तते, विजयायाः प्रत्युत्तरमाकर्ण्य निमेषेण नरेन्द्रस्य मुखं तथा मलिनमभूत्।

तदालक्ष्यैव विजया पुनराह, अन्यपरिचयेनात्मालोचनश्रवणम्, तथा

प्रच्छन्नीभूय साभिसन्धानं श्रवणमितीदं द्वयं किं तुल्यतया भवता न मन्यते ? मया तु मन्यते। परन्तु वयं पुनर्ब्राह्मधर्मावलम्बिन इति यदुच्येत।

मलिनं नरेन्द्रस्य वदनमिदानीं लज्जया मसीकृष्णमभूत्। कञ्चन कालं मौनेनावस्थाय प्राह, भवत्या सह नानाविधेष्वालापेषु स्वीयाप्यालोचनासीदेव, परं तत्र दुरभिप्रायः कोऽपि नासीत्। अन्तिमे दिवसे परिचयमपि प्रकाशयिष्यामीति मनसि कृतवान्। न च सम्पन्नम्। एतेन भवत्याः कापि क्षतिरजनिष्ट वा ?

सोऽयं प्रश्न आदावेवाकरिष्यत चेन्नूनमुत्तरवादिनाऽप्युत्तरं दुष्प्रदमभविष्यत्। परं या किल समालोचना सकृत् समारब्धा, आत्ममाहात्म्येन सा कठिनकठिनमपि स्थानं स्वयमुत्तरेत्। अतो विजयाऽनायासेनैवोत्तराय प्राभवत्। प्राह, कस्यापि क्षतिः पुनरनेकधापि भवितुमर्हति। अथ सा सञ्जाता चेत् सञ्जातैव, न पुनर्भवतेदानीं सा प्रतिविधातुं शक्येन। तद् गच्छतु। भवतः स्वगतं किञ्चन जिज्ञासितं चेत् किं—

कोपिष्यामि ? नहि। इत्युक्तवत एव तस्य समग्रं वदनं प्रशान्तनिर्मलेन हास्येन प्रोज्ज्वलमभूत्। इयता कालेन, इयद्भिर्वाग्व्यवहारैरस्य जनस्य यः खलु परिचयो विजयया नाधिगतः, एतन्मौहूर्त्तिकोऽयं हासस्तं तामबोधयत्। अभूच्च तस्या मनसि, अस्यान्तर्बहिः सर्वमेकान्ततः स्फटिकवत् स्वच्छम्। यो जनः सर्वस्वमगृह्णात्, तस्यापि समीपेऽस्य 'ने'ति नास्ति। मन्ये अनेनैव हेतुना सा तस्याभिमुखं नेत्रे समुत्तोल्य प्रष्टुमपि नाशक्नोत्, स्कन्धमवनमय्यापृच्छत, भवानिदानीं क्वास्ते ?

नरेन्द्रः प्राह, मम परम्परासम्बन्धतः काचन पितृस्वसा साम्प्रतमपि जीवति, तस्या एव गृहे वर्ते।

भवन्तमधिकृत्य या किल समाजिकी दुष्परिस्थितिरास्ते तद्ग्रामीणास्तां न जानते किमु ?

अथ किम्, जानत एव।

एवं तर्हि ?

नरेन्द्रः क्षणं चिन्तयन्नाह, यस्मिन् प्रकोष्ठे वत, स सर्वथा भवनान्तर्निविष्ट इति वक्तुं न शक्यते, अपि च मदीयावस्थाकर्णनेन मन्ये कियद्भ्यो दिवसेभ्यः कृते तत्तनया न प्रतिरुन्धते। परमेतत्तु निश्चितं यदधिकदिनं तत्रावस्थाय ते पर्याकुलयितुं न शक्या इति। उक्त्वा स क्षणं विरम्य प्राह, अस्तु तावत्, सत्यं ब्रवीतु, कथमेतत् सर्वं मृग्यते ? तातपादानामन्यान्यपि ऋणानि प्रकाशितानि ? इदमित्थं नवा ?

उत्तरं प्रतिपादयितुकामेव विजया तस्य वदने दृष्टिं न्यबध्नात्। परं हठात् अस्ति वा नास्ति वेति किमपि तस्या गलतो न बहिरगात्।

नरेन्द्रः प्राह, पितृर्णं के वा निर्यातयितुं नेच्छन्ति,। परं सत्यं ब्रवीमि भवतीम्, स्वनाम्ना नामान्तरेण वा मदीयं नेवं किमप्यस्ति यद् विक्रीय दातुमर्हामि। अणुवीक्षणं यन्त्रमात्रमवशिष्यते। तदपि विक्रीय ब्रह्मदेशे प्रत्यावर्त्तनस्य व्ययः संग्रहीतव्यः। पितृस्वसुरप्यार्थिकी परिस्थितिः कष्टैव। किमधिकम्, तत्र भोजनादिप्रबन्धोऽपि—उक्त्वैव स हठाद् व्यरमत्।

विजयाया नयनयोर्बाष्प उद्गच्छत्, सा ग्रीवां परावर्तयत्।

नरेन्द्रः प्राह, अथ यदि दयते भवती, तर्हि तातपादानामृणं मया स्वनामाङ्कितं कर्त्तुं शक्यते। भविष्यति काले निर्यातयितुं प्राणैः पणैर्यतिष्ये। भवत्यां रासविहारिमहोदयं किञ्चनाभिदधत्यामेव स नैतदर्थमिदानीं पुनर्निर्बन्धं करिष्यति।

परेशः परेत्य द्वाराद् बहिरवोचत्, मातः, माता ब्रवीति, महती किल वेला सञ्जाता—सूदमन्नोपस्थापनायादेक्ष्यति किम् ?

सम्मुखस्थं घटिकायन्त्रमालोक्य चकितो नरेन्द्र उदतिष्ठत्; सलज्जः प्राह, हन्त, द्वादश घटिकास्ताड्यन्ते। भवत्या भृशं क्लेशोऽभवत्।

विजया बाष्पं समवृणोत्, प्राह, भवता कथमागतमिति तु नोक्तम् ?

नरेन्द्रः क्षिप्रमाह, तिष्ठतु तत्। इत्युक्त्वा प्रस्थातुमुपक्रामति नरेन्द्रे

विजया प्राह, भवतः पितृस्वसुर्भवनमितः कियति दूरे ? इदानीं तत्रैव गन्तव्यं खलु ?

नरेन्द्रः कथयति, बाढम्। कामं किञ्चिद् दूरम्। प्रायेण क्रोशद्वयम्।

विजया विस्मिताऽवोचत्, अस्मिन्नातपे भवानिदानीं क्रोशयुगं परिक्रमिष्यति ? गच्छत एव तिस्रो नाडिकाश्छेत्स्यन्ति—

अस्तु नाम तत्, अस्तु नाम तत्, नमस्कारः !

इत्युक्त्वा पादं प्रसारयत्येव नरेन्द्रे विजया द्रुतं द्वारसम्मुखमुपेत्यातिष्ठत्, अवदच्च, ममैकः प्रणयोऽद्य भवतानुरोद्धव्य एव। एतावत्यां वेलायामनाभुञ्जानेन भवता कथमपि गन्तुं न शक्यम्।

विस्मयस्य परां काष्ठामधिरूढो नरेन्द्र आह, भुक्त्वा गमिष्यामि ? अत्र ? किमिव ? किं नामैतेन भवतोऽपि जातिर्विपत्स्यते ?

प्रत्युत्तरयतस्तस्य मुखं पुनस्तथैव प्रशान्तेन हास्येनोद्भासितमभूत्। प्रावोचच्च, नहि, तद्भयन्तु म इह जगति नास्ति। अन्यच्च, मयि तावदद्य नितरामेव प्रसन्नो भगवान्। अन्यथा, एतावत्यां वेलायां तत्र किं लप्स्येतेत्यहं जानामि।

एवं तर्हि क्षणमास्ताम्, अहमागच्छामि,—इत्युक्त्वा विजया तमपश्यन्त्येव गृहात् प्रातिष्ठत।

---

# उपदेशपरम्परा*

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटि-पीठाधीशानाम् ]

अस्मन्मतस्य साधारणोऽवष्टम्भः।

( १ )

अस्मद्देशे बहूनि मतानि वर्तन्ते—शैवसिद्धान्त एकः, वैष्णवानां पाञ्चरात्रसिद्धान्त एकः, मध्वानां सिद्धान्त एकः। एतादृशा बहवः सिद्धान्ताः परस्परं विरुद्धा दृश्यन्ते। सर्वे हिन्दुमतस्यैव सम्बन्धिनः। एतेषु कोऽधमः को वोत्तम इति नेदमिदानीमालोच्यते, परन्तु किं नाम हिन्दुमतम्? सर्वेषु मतेषु साधारणतया किमुच्यत इति वयं ज्ञातुमर्हामः। इदं पृच्छ्यते चेत् कोऽपि विशदं न प्रतिवदति। सम्यगधीतिनोऽपि सिद्धान्तानां भेदानेवाधिकं वदन्ति। अस्मत्पाठ्यग्रन्थेष्वपि तथैव दृश्यते। सर्वेषां साधारणमेकमवष्टम्भं विना हिन्दुमतमेकं मतमिति वक्तुं न शक्यते। इदमधिकृत्याहं वारं वारमनुचिन्तयमासम्। साधारणस्य विषयः को वेति विचारयामः।

प्रत्यहं सर्वेऽपि हिन्दवः श्रीरामायणपारायणारम्भसमये तदवसानसमये च कांश्चन श्लोकान् पठन्तीति संप्रदायोऽस्ति। तेषु—

स्वस्ति प्रजाभ्यः परिपालयन्ताम् न्यायेन मार्गेण महीं महीशाः।
गो-ब्राह्मणेभ्यः शुभमस्तु नित्यम् लोकाः समस्ताः सुखिनो भवन्तु॥

इत्येकः श्लोकः। अस्यार्थः—जनाः सुखिनो भूयासुः, पृथिवीं राजानो न्यायेन रक्षन्तु। गावो ब्राह्मणा इतीमे मङ्गलेन जीवन्तु। सर्वोऽपि लोकः सुखी भवतु इति।

---

* इयमुपदेशपरम्परा द्राविडभाषामयात् मद्रास-नगरे प्रकाशितात् पुस्तकात् भाषान्तरी-ऽनुवादरूपा। ( सं० )

अस्मिन् श्लोके सामान्येन जनांल्लोकांश्चोल्लिख्य पृथग् गा ब्राह्मणांश्च निष्कृष्य ते सुखिनो भवन्तु, इति किमर्थं वक्तव्यम् ? ब्राह्मणाः किं लोके नान्तर्भूताः ? कुत एवं वक्तव्यम् ? सर्वानधिकृत्य वर्णनानन्तरं पृथग् ब्राह्मण-जातेः सुखं भूयादिति कथनं विषमं प्रतीयते न वा ? सति चैवमिदं बहूनां न सङ्गतमिति प्रतीयात्। तथा ब्राह्मणेषु पक्षपातस्वीकारेऽपि गा अधिकृत्य किमिति पृथग् वक्तव्यम् ? गावः सर्वेषां साधारण्यः खलु। अत एत-त्कारणं सम्यग् न विशदम्। कुत एवं वक्तव्यम् ? इत्येतदधिकृत्य सूक्ष्म-दृष्ट्या गवेषणीयम्। स्यादेतत्।

मधुरायां 'कून् पाण्ड्यः' इति कश्चन राजासीत्। स श्रमणानामुप-देशाच्च श्रमणीभूतः। राज्ये कोऽपि भस्म नोद्धूलयेत्, रुद्राक्षं न धारयेत् इत्याज्ञापयामास। तस्य पत्नी मन्त्री च महान्तौ शिवभक्तावास्ताम्। एव-मपि राज्ञ आज्ञामतिक्रमितुं न प्राभवताम्। रहसि शिवं पूजयन्ता-वास्ताम्। कदा वा राजाऽस्माच्च् श्रमणसिद्धान्तात् परावृत्य शिवमाराध-यिष्यति ? इति चिन्ताव्यग्रावास्ताम्। अस्यामवस्थायां शैवसिद्धान्त-स्थापकेषु चतुर्षु प्रधानाः श्रीकार्तिकेयावताराश्च सम्बन्धमूर्तिस्वामिनो बहुभिर्भक्तैः प्रतिशिवक्षेत्रं यात्रां कुर्वाणा आसन्। तस्येतिवृत्तस्य विज्ञौ पाण्ड्यमन्त्री, पाण्ड्यपत्नी च गुप्तं स्वामिनः प्राप्य 'मधुरां समागत्य राज्ञः सद्बुद्धिरुद्बोधनीये'ति प्रार्थयामासतुः। मधुरां प्राप्य तैरुष्यमाणे मठे श्रमणा अग्निं प्राक्षिपन्। तद् दृष्ट्वा ते 'सोऽग्निः पाण्ड्याय भवेत्' इतीश्वरं प्रार्थयन्त। तदेश्वरसंकल्पेन राज्ञः कठिनो ज्वरस्समागतः। श्रमणा अति-परिश्रम्यापि ज्वरं शमयितुं नापारयन्। तस्मिन् समये मन्त्री सम्बन्ध-मूर्तीनां माहात्म्यमुपवर्ण्य 'ते यदि समागत्य पश्येयुः, ज्वरः शमिष्यती'त्यवदत्।

लोकेऽतिसाहसिकोऽपि व्याधेरुपद्रवे सोढुमशक्ये स्वीयं साहसं किञ्चित् परिवर्तयतीति स्वभावः। तद्वद् राजापि शिवभक्तानां भस्म रुद्राक्षं वा धारयतां च दर्शनमपि नेति दृढव्रतोऽपि व्याधेरुपद्रवं सोढुं नाशकत्, इति मन्त्रिप्रार्थनामन्वमन्यत। मन्त्रिणोऽतीव सन्तोषो जातः। अतीवा-

डम्बरेण सम्बन्धमूर्तीन् आनयत्। आगतेष्वेव सम्बन्धमूर्तिषु तेषां श्रमणानां च वाकोवाक्यमभवत्। सहसैव सम्बन्धमूर्तयस्तान् दृष्ट्वा—भवन्तो राज्ञः शरीरे दक्षिणभागस्थं ज्वरं भवतां मन्त्रशक्त्या शमयन्तु, अहं वामपार्श्वस्थं ज्वरं मम मन्त्रशक्त्या शमयामि, भवन्तो न शमयेयुश्चेत्, भवन्तः पराजिताः, अहं न शमयेयं चेद्, अहं पराजित इत्यवदन्। झटित्येव सम्बन्धस्वामिनः 'मन्त्रो हि भस्म' देवानण्यति भस्मेत्यारभ्य दश गीतानि संकीर्त्य, भस्म गृहीत्वा, पाण्ड्यस्य वामपार्श्वे तद्धूलयामासुः। तत्क्षणादेव ज्वरो निवृत्तः। श्रमणा अत्यन्तं परिश्रम्यापि दक्षिणपार्श्वस्थं ज्वरं न शमयितुमपारयन्। तदानीमेव ते—"वयं वामपार्श्वं गृह्णीमः, भवन्तो दक्षिणभागं गृह्णन्तु, इत्यवदन्। तदर्थमपि सम्बन्धस्वामिनः 'ओम्' इत्युक्त्वा दक्षिणभागस्थं ज्वरं शमयितुं तान्येव गीतानि संकीर्त्य दक्षिणपार्श्वे भस्मोद्धूलयन्। राज्ञस्तु ज्वरो न साधारणो ज्वरः। स ह्यीश्वरसंकल्पादागतो ज्वरः। ततो दक्षिणपार्श्वस्थो ज्वरो झटित्येव वामपार्श्वमाक्रमत। अनन्तरं सम्बन्धस्वामिनो राज्ञोऽनुभूयमानामवस्थां निरीक्ष्य कृपयाविष्टास्तमपि ज्वरमेकेन प्रकारेणाशमयन्।

एतावद्दूरं प्रत्यक्षेऽपि संभवे श्रमणाः स्वयं पराजिता इति नाङ्गयकुर्वन्। राज्ञोऽपि संपूर्णो विश्वासो नाजनि। पक्षद्वयावलम्बिनोऽपि वादं करिष्यामः, इति वादं प्रारभन्त। ततः पूर्वं सम्बन्धस्वामिनो देवालयं प्राप्य भगवन्तं संप्रार्थ्यागमन्। श्रमणाः वेदं यज्ञं च निन्दन्तो वर्तन्ते, अतस्तान् निगृह्य तवैव महिमा यथा प्रसरेत्, तथा कुरु त्वमिति भगवन्तं ( सम्बन्धस्वामिनः ) प्रार्थयन्त, ततः श्रमणसविधं ते प्रापुः। तदानीं सम्बन्धस्वामिनः श्रमणान् दृष्ट्वा—"भवतां सिद्धान्तान् एकस्मिन् तालपत्रे विलिख्यास्मिन् *"वैकै"नदीप्रवाहे प्रक्षिपन्तु, अहमपि मदीयान् सिद्धान्तान् विलिख्य प्रक्षिपामि। यत्पत्रं प्रवाहेण साकमगच्छत् तमभिगच्छति, तत्रत्यः सिद्धान्त एव सत्य इत्यवदन्। तत् श्रमणाः सममन्यन्त। तैस्तथा प्रक्षिप्ते श्रमणानां पत्रं

* श्रीमीनाक्षीमधुरायां 'वैकै'नाम्नी नदी प्रसिद्धा।

प्रवाहेण साकमगमत्। सम्बन्धस्वामिनां तु प्रवाहमभ्यगच्छत्। पुनरपि श्रमणास्ते पराजिता इति न स्वीचक्रुः। ततः सम्बन्धस्वामिनः—त्रय-मुभयेऽपि पूर्ववदेव विलिख्याग्नौ प्रक्षिपामः, येषां पत्रं दह्यते, ते पराजिता इत्यवदन्। तदपि स्वीकृत्य तथैवोभयेष्वपि कृतवत्सु श्रमणानां पत्रं दग्धमभवत्। सम्बन्धमूर्तिस्वामिनां तालपत्रं तथैवावातिष्ठत। सम्बन्ध-मूर्तयस्तस्मिन् पत्रेऽधोनिर्दिष्टप्रकारमलिखन्—

ब्राह्मणाः सुखेन जीवन्तु, देवाः सुखिनो भवन्तु, गावः सुखिन्यो भवन्तु। शीतला वृष्टिर्वृष्यताम्, राजा नीतिमविरुद्ध्य रक्षतु, दोषाः सर्वेऽपि दूरीभवन्तु। सर्वोऽपि लोकः—हर, हर, महादेवेति शब्दपरिपूर्णो भवतु, लोके कुत्रापि दुःखमिति नामापि मा भवतु—इति।

शैवानां सिद्धान्तो यथा कथमपि भवतु, तेषां मुख्यसिद्धान्तेऽस्मिन्नपि गीते ब्राह्मणान् गाश्च पृथग् गृहीत्वैव वदन्ति। अस्मिन् गीते देवा अपि पृथक् उक्ताः। पूर्वोक्ते ( स्वस्ति प्रजाभ्यः इति ) श्लोके देवा नोक्ताः। एव-मेवास्मासु साधारण्येनैकः श्लोकः संप्रदाये वर्तते—

"नमो ब्रह्मण्यदेवाय गो-ब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥"

अस्यार्थः—ब्राह्मणानां गवां च हितकारिणे कृष्णाय नम इति। अत्रापि ब्राह्मणा गावश्च पृथग् वर्ण्यन्ते, एवं वर्णने निमित्तं किमिति विचारयामः।

लोके यः कोऽपि यत्किमपि पृच्छति, तस्य सर्वस्य समुचितमुत्तरं गीताशास्त्रे वर्ण्यते।

"सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥"

इति गीतामङ्गलाचरणे चतुर्थः श्लोकः। अस्यार्थः—सर्वा उपनिषदः गावः, तासां दोग्धा गोपालो भगवान् श्रीकृष्णः। तासां गवां वत्सोऽर्जुनः। ताभ्यो गोभ्यो दुग्धं पयो गीता नाम। दुग्धस्य पातारो विद्वांसः इति।

लोके कश्चन गोपालः दुग्धं दोहनीयं चेत्, गवा साकं वत्समपि नेतु-

मर्हति। दुग्धं यथा वत्सस्यान्येषां चोपकरोति, तथा गीताशास्त्रं यस्य कस्यापि यः कोऽपि संशय उद्भिन्नश्चेदपि, तं निरस्येत्। यः कोऽपि यं कमपि प्रश्नं करोति चेदपि, तस्योत्तरं तस्मिन स्यात्। अनेकेषु ग्रन्थेषु विद्यमानेष्वपि अहं कुत इममगृह्णाम्, इति चेत्, तस्यैकं कारणं वर्तते। सांप्रतं सर्वेऽपि गीता उत्तमं तत्त्वरत्नमिति स्वीकुर्वन्ति किल। तस्मिन्नुक्तानि तत्त्वानि कानि? इत्यत्र विवादे सत्यपि गीतोत्तमो ग्रन्थ इत्यत्र नाक्षेपोऽस्ति। एवं महद्भिः स्वीकृताद् ग्रन्थाद् मया पूर्वोपक्षिप्तानां संशयानां समुचितमुत्तरं लभ्यते चेत्, सर्वेऽपि यूयं नियतं विश्वासं प्राप्नुयातेति मत्वा तां विवरीतुमगृह्णाम्।

अस्मिन लोके मानवानामस्माकं जीवनप्रणालीमालोचयामः। एकस्मिन ग्रामे एकं वस्तु अधिकमुद्भवति चेत्, तत् तस्य वस्तुनोऽनुत्पत्तिस्थानं ग्रामं प्रेषयित्वाऽस्मद्ग्रामेऽनुद्भूतं तद्ग्रामे समुद्भूतं चापरं वस्तु गृहीत्वा समागच्छामः। तक्षा, अयस्कारः इत्यादयोऽस्मदर्थं कानिचन कार्याणि कुर्वन्ति। वयं तेषां जीवनयात्रोचितानि दद्महे। गवां तृणं दद्महे, ता अस्मभ्यं दुग्धं ददते, वयं राज्ञां करं दद्मः, तेऽस्माकमापद् यथा नावसरेत् तथास्मान् परिपालयन्ति। एवं सर्वोऽपि लोकः परिवर्तनक्रमेण प्रचलति। एवमेव वयं लोकान्तरैः साकं कानिचन परिवर्तनानि कुर्वन्तो वर्तामहे। सेतुबन्धनादिदक्षाः कारुकप्रवरा अन्ये च वृष्टं वर्षजलं सम्यग् विभज्य नद्यादिषु यथा प्रवहेत्, तथा कर्तुमेव शक्नुवन्ति, न तु ते वर्षयितुमपि शक्नुवन्ति। वृष्टिर्यदि वर्षणीया, तर्हि वयं कानिचन वस्तूनि देवलोकं प्रेषयितुमर्हामः। इदमेव गीतायामुक्तम्—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥
देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ इति

अस्यार्थः—

सर्वप्रथमं ब्रह्मा जनैस्साकं यज्ञमप्यसृजत्। तदा तान् दृष्ट्वा—"इमं याग-

मनुष्ठाय यूयं सुखं प्राप्स्यथ। अयं यज्ञो युष्माकमभीष्टानि पूरयतु। अनेन यागेन यूयं देवान् तर्पयत। ते देवा वृष्टिप्रभृतिभिर्युष्माकं कुशलं कुर्वन्तु। एवमेव यूयमन्योन्यमुपकुर्वाणा उन्नतं सुखं प्राप्स्यथ—इति अवोचत्।

यागो नाम मन्त्रैर्देवताभिर्हविर्भिश्चात्मानं लभते। तत्र मन्त्रा ब्राह्मणैरुच्चरणीयाः, देवता मनसाऽनुसन्धातव्याः, होमं कर्तुं मुख्यं द्रव्यं गवां घृतम्। अस्मिन् काले ब्राह्मणाः प्रायेणाङ्ग्लभाषां पठन्ति। ते वेदं नाधीयते। आङ्ग्लभाषाध्यायिनः कालान्तरे वेदाध्ययने प्रवृत्ता अपि न सम्यगुच्चरितुं प्रभवन्ति। अतोऽस्मिन् काले मन्त्रशुद्धिर्नास्ति। कर्माणि यथाक्रमं कोऽपि न करोति, इति देवताध्यानमपि न सम्यग् वर्तते। गोदुग्धं सांप्रतं प्रायेण काफी, चह प्रभृतीनां कृत उपयुज्यते, अतः शुद्धं घृतमपि न लभ्यते। यागार्थं मुख्यो मन्त्रोऽधीयत इति ब्राह्मणाः, होमद्रव्यं घृतं प्रदीयते इति गावश्च सर्वेषु स्थानेषु पूर्वोक्तेषु श्लोकेषु श्रीसम्बन्धमूर्तिगीतेषु च पृथग् विशिष्योक्ता इति विज्ञातव्यं भवति। यागेनोत्पतत् फलं न केवलं ब्राह्मणानां पशूनां च, सर्वेषामेव कुशलं ददाति यज्ञः। यागः क्रियते चेदेव, लोकः सुखी स्यात्। यागः सम्यक् संपादनीयश्चेत्, ब्राह्मणा गावश्च सुखिनो भवेयुः।

सांप्रतं तु अकृतवेदाध्ययना ब्राह्मणाः स्वयं वेदाध्ययनं न कृतमिति प्रथमं पश्चात्तपन्तु, अनन्तरं कृतवेदाध्ययनान् ब्राह्मणान् अनादरभावं विना सादरभावेन पुरस्कुर्वन्तु, तान् नमस्कुर्वन्तु। यथासंभवं काफी चह पानं परित्यजन्तु, किञ्चिद्वापि वेदमधीयताम्। यथाशक्ति पञ्च महायज्ञाननुतिष्ठन्तु।

हिन्दुमतविभागेषु केषांचन सिद्धान्तानां भेदेन विभिन्नेष्वपि सर्वेषां साधारणोऽवष्टम्भ एक एव स्यात्।

साधारण्येन लोकक्षेमाय ब्राह्मणा गावश्च मुख्यकारणानि भवन्ति, इति हेतोरेव सर्वेऽपि हिन्दुमतविभागीया ब्राह्मणान् गाश्च विशिष्य वर्णयन्ति, इति मन्तव्यं भवति। *

---

* गोब्राह्मणसेवा हिन्दुमतस्य साधारणोऽवष्टम्भ इति फलितार्थः। ( सं० )

# धर्ममीमांसा

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिस्कृतः ॥
क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥

इति । एषां द्वादशसंख्यकानां सङ्कराणां ये षडनुलोमजातास्तेऽपसद इति संज्ञां लभन्ते । तथाच मनुः—"विप्रस्य त्रिषु वर्णेषु" इत्यादि ।

अत्र सदः सत्त्वं प्रजारूपम् अपकृष्टाः प्रजा अपसदा इति नारायणः । अपरे तु षट् प्रतिलोमजा रथकारवर्जं सङ्कीर्णसङ्कराश्चापध्वंसज इत्याख्यां प्राप्नुवन्ति । तथाचाह मनुः—

शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥

इति । अपध्वंसजा व्यभिचारजाः, अत एव तेषां शूद्रसमानधर्मत्वम् । एतेषां सूत-वैदेहक-चाण्डाल-मागध-क्षत्तायोगवानां षण्णां प्रतिलोमजातत्वादेव शूद्रसमानधर्मत्वम् । तेनोपनयनार्हकुलजातात् क्षत्रियात् तादृशकुलजातायां ब्राह्मण्यामुत्पादितोऽपि सूतः शूद्रधर्मं भजते । तथाच पद्मपुराणे सूत उवाच—

न हि वेदेष्वधिकारः कश्चित् सूतस्य विद्यते ।
पुराणेष्वधिकारो मे दर्शितो ब्राह्मणैरिह ॥

इति । चाण्डालस्य त्रैविध्यमाह व्यासो यथा—

कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ।
ब्राह्मण्यां शूद्रजनितश्चाण्डालस्त्रिविधः स्मृतः ॥

इति। नन्वनुलोमजातानां मूर्द्धाभिषिक्तादीनां षण्णां कथमपसदसंज्ञा, यतो मनुनैवासवर्णविवाहो विहितः। तथाच—

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः॥

इति। अस्यायमर्थः शूद्रस्य शूद्रैव भार्या भवति। विशः शूद्रा वैश्यापि भार्ये स्याताम्। क्षत्रियस्य शूद्रा वैश्या क्षत्रियाऽपि भार्याः स्युः, ब्राह्मणस्य पुनः शूद्रा वैश्या क्षत्रिया ब्राह्मण्यपि भार्या भवन्तीति। ततश्चैतादृश-विधानानुसरणेन यदि कश्चिदसवर्णां कन्यामुद्वहेत् तदा कथं तज्जा-तस्यापकृष्टत्वमिति चेदत्रोच्यते, नेदमसवर्णाविवाहविधायकं वाक्यम् परन्तु व्यवस्थामात्रम्। विधिवाक्यन्तु प्रागेव—

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥

इत्यनेनैवाभिहितम्। असवर्णाविवाहस्याप्राशस्त्यमप्याह स एव यथा

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि।
कामतस्तु प्रवृत्तानाम् इमाः स्युः क्रमशोऽवराः॥ इति।

ब्रह्मपुराणेऽपि।

क्षत्रविट्शूद्रकन्यास्तु न विवाह्या द्विजातिभिः।
विवाह्य ब्राह्मणीं पश्चाद् विवाह्या क्वचिदेव तु॥

( क्रमशः )

———

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| August, 1937. | १८५९-शकीये श्रावणे<br>२०श-वर्षस्य ४र्थ-संख्या | Vol. XX, No. 4 |
| --- | --- | --- |

## जातितत्त्वम्

### ( १ )

तत्रेमे श्रीवैखानसगृह्यसूत्रे दशमप्रश्न एकादश-द्वादश-त्रयोदश-चतुर्दश-पञ्चदशखण्डाः संगृह्यन्ते :—

“चातुर्वर्ण्यस्य संकरेणोत्पन्नानामनुलोमप्रतिलोमान्तराल-व्रात्यानामुत्पत्तिर्नाम वृत्तिश्च । ऊर्ध्वजातानामधोजातायां जातोऽनुलोमः, अधरोत्पन्नादूर्ध्वजातायां जातः प्रतिलोमः । ततोऽनुलोमादनुलोम्यां जातोऽन्तरालः, प्रतिलोमात्प्रतिलोम्यां जातो व्रात्यो भवति । ब्रह्मणो मुखादुद्भूता ब्राह्मणाः, ब्राह्मण्यश्च, ब्रह्मर्षयः पत्न्यो बभूवुः । तेषां गोत्रोत्पन्नाद् ब्राह्मणाद् ब्राह्मण्यां समानगोत्रायां विधिना समन्त्रकं गृहीतायां जातो ब्राह्मणः शुद्धो भवेत् । विधिहीनमन्यपूर्वायां मृतभर्तृकायां गोलकः, जीवद्भर्तृकायां कुण्डश्च विप्रौ द्वौ निन्दितौ स्याताम् । तस्मादथो बाहुभ्यामुत्पन्नात् क्षत्रियात् क्षत्रियायां विधिवद् जातः क्षत्रियः शुद्धः, तयोरविधिकं गूढोत्पन्नोऽशुद्धो भोजाख्यो नैवाभिषेच्यः, पट्टबद्धो राज्ञः सैनापत्यं करोति । शुद्धाभावे पट्टबद्धोऽन्यान् पायात् । तद्वृत्तं राजवत् स्यात्, अधस्तादूरुभ्यामुत्पन्नाद्वैश्याद्वैश्यायां तथा शुद्धः, विधिवर्जं मणिकारोऽशुद्धो मणि-मुक्तादि-

भेद-शङ्खवलयकारी स्यात्। अथ पद्भ्यामुत्पन्नाच्छूद्राच्छूद्रायां न्यायेन शूद्रः शुद्धः, जाराद् मालवको निन्दितः शूद्रोऽश्वपालकोऽश्वतृणहारी चेत्येके चातुर्वर्णिकाः।

तेषामेव सङ्करेणोत्पन्नास्सर्वेऽनुलोमाद्याः। ब्राह्मणात् क्षत्रियकन्यायां जातो मातृसवर्णोऽनुलोमेषु मुख्यः, अस्य वृत्तिराथर्वणं कर्म, अश्व-हस्ति-रथ-संवाहनमारोहणं राज्ञः सैनापत्यं चायुर्वेदकृत्यं वा। गूढोत्पन्नोऽभि-षिक्ताख्योऽभिषिक्तश्चेद् नृपो भूयात्, अष्टाङ्गमायुर्वेदं भूततन्त्रं वा संपठेत्। तदुक्ताचारो दयायुक्तः सत्यवादी तद्विधाने सर्वप्राणिहितं कुर्यात्, ज्योति-र्गणनादिकाधिकवृत्तिर्वा। विप्राद्वैश्यायामम्बष्ठः कथाजीव्याग्नेयनर्तको ध्वजविश्रावकः शल्यचिकित्सी वा, जारात् कुम्भकारः कुलालवृत्ति-र्नापितो नाभेरूर्ध्ववप्ता च। क्षत्रियाद्वैश्यायां मद्गुः श्रेष्ठित्वं प्राप्तो महा-नर्माख्यश्च वैश्यवृत्तिः क्षात्रं कर्म नाचरति, गूढादाश्विकोऽश्वक्रयविक्रयी स्यात्।......विप्राच्छूद्रायां पारशवो भद्रकालीपूजन-चित्रकर्माङ्गविद्या-तूर्यघोषण-मर्दनवृत्तिः, जारोत्पन्नो निषादो व्यालादिमृगहिंसाकारी। राजन्यतः शूद्रायामुग्रस्सुदण्ड्यदण्डनकृत्यः, जारात् शूलिकः शूलारोहणादि-यातनाकृत्यः। वैश्यतः शूद्रायां चूचुकः क्रमुक-ताम्बूल-शाक-काष्ठादिक्रय-विक्रयी, गूढात् कटकारः, कटकारी चेति। ततोऽनुलोमादनुलोमायां जात-श्चानुलोमः, पितुर्मातुश्च वा जातिवृत्तिं भजेत्।

क्षत्रियाद् विप्रकन्यायां मन्त्रवद् जातः सूतः, प्रतिलोमेषु मुख्योऽयम्। मन्त्रहीनोपनीतो द्विजधर्महीनः। अस्य वृत्तिर्धर्मानुबोधनं राज्ञः, अन्न-संस्कारश्च। जारेण मन्त्रहीनजो रथकारो द्विजत्वहीनः शूद्रकृत्यो-ऽश्वानां पोषण-दमनादिपरिचर्याजीवी। वैश्याद् ब्राह्मण्यां मागधः शूद्रै-रप्यभोज्यान्नोऽस्पृश्यः सर्ववन्दीप्रशंसा-कीर्तन-गान-प्रेषणवृत्तिः, गूढाच्चक्री लवणविक्रेता स्यात्, वैश्यात् क्षत्रियायामयोगवस्तन्तुवायः पटकर्ता वस्त्र-कांस्योपजीवी, गूढात् चारात् पुलिन्दोऽरण्यवृत्तिर्दुष्टमृगसत्त्वघाती। शूद्रात् क्षत्रियायां पुल्कसः, कृतकां वार्क्षीं वा सुरां हृत्वा पाचको विक्रीणाति, चोर-

वृत्ताद् जाराद्वा ईलवः। शूद्राद्वैश्यायां वैदेहकः शूद्रास्पृश्यः शूद्रैरप्यभोज्यान्नो वन्यवृत्तिरज-महिष-गोपालः, तद्रसानां विक्रयी, चौर्यात्त चक्रिको लवण-तैल-पिण्याकजीवी। शूद्राद् ब्राह्मण्यां चण्डालः सीस-कालायसाभरणा वध्राबद्धकण्ठकक्ष्यो झल्लरीयुक्तो यतस्ततः संचरन् सर्वकर्मबहिष्कृतः पूर्वाह्णे ग्रामादौ वीथ्यामन्यत्रापि मलान्यपकृष्य बहिरपोहयति। ग्रामाद् बहिर्दूरे स्वजातीयैर्निवसेत्। मध्याह्नात्परं ग्रामे न विशति, अयं प्रविशेच्चेद् राज्ञा वध्यः, अन्यथा भ्रूणहत्यामवाप्नोति।

अन्तराला व्रात्याश्च—चूचुकाद्विप्रायां तक्षकोऽस्पृश्यो झल्लरीहस्तो दारुकारः सुवर्णकारोऽयस्कारः कांस्यकारो वा। क्षत्रियायां मत्स्यबन्धी, वश्यायां सामुद्री समुद्रपण्यजीवी च मत्स्यघाती च स्यात्। अम्बष्ठाद् विप्रायां नाविकः समुद्रपण्यमत्स्यजीवी समुद्रलङ्घनाद् नावमाप्लावयति, क्षत्रियायां मयो नाभेरधो रोमवप्ता, मद्गोर्विप्रायां वेणुको वेणु-वीणावादी, क्षत्रियायां कर्मकारः कर्मारकारी, नृपायां सूचिकः सूचीवेधनकृत्यवान्। आयोगवाद् विप्रायां ताम्रस्ताम्रजीवी, नृपायां जातः खनकः खननजीवी। खनकाद् नृपायाम् उद्बन्धः शूद्रैरप्यस्पृश्यो वस्त्रनिर्णेजनकः। पुल्कसाद्विप्रायां रजको वस्त्राणां रजोनिर्णेजनकः। चण्डालाद्विप्रायां श्वपचश्चण्डालवच्चिह्नयुक्तो निन्द्यः सर्वकर्मबहिष्कार्यो नगर्यादौ मलानामपोहकः श्मशाने वसन् हेयपात्रग्राही प्रेतबन्धनं विसृजेत्, वध्यान् हत्वा तद्वस्त्रादीन् गृह्णीयात्, पराधीनाहारो भिन्नपात्रभोजी श्वमांसभक्षी"—इति।

जातितत्त्वमिदं शैवाद्यागमग्रन्थेषु देवालयसंरक्षणप्रकारनिरूपणपरेषु अस्या अस्या जातेः इयदवधि प्रवेशाधिकार इति व्यवस्थापनार्थमेव प्रतिपाद्यते, इति प्रथममस्मिन् विषये कामिकागमवचनानि संगृह्यन्ते। तानि यथा—

सर्वासां चैव जातीनामादिशैवो वरिष्ठकः।
सर्वेषां चैव जगतां गुरुरित्यभिधीयते॥

तस्माद् लोकगुरुश्चेति आदिशैवस्य कीर्तितम् ।
शिवद्विजकराद् भस्म न गृहीतं कदाचन ॥
ग्राहयेद् यदि मोहेन ह्याहुः श्री-पुत्रनाशनम् ।
यदि योगी तपस्वी च संन्यासी च तथैव च ॥
स्वकरेण गृहीतं चेद् राज-राष्ट्रविनाशनम् ।
तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् ॥
आचार्यादि समारभ्य परिचारसमावधि ।
गर्भगेहः प्रवेशार्हः किञ्चिद् भेदः प्रकीर्तितः ॥
आचार्यस्यार्चकस्यैव लिङ्गस्पर्शनयोग्यता ।
स्थानिकः पाचकश्चैव परिचारत्रयं तथा ॥
न स्पृशेद् लिङ्गकं चैव स्पृशेद् दुर्भिक्षसंभवः ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
दीक्षायुक्तो महाशैवो वेदागमविशारदः ।
सोऽर्धमण्डपके तिष्ठन् महादेवं प्रदर्शयेत् ॥
गर्भगेहप्रवेशश्चेद् ग्रामनाशो भविष्यति ।
तद्दोषशमनार्थाय कुर्याद् राज्याभिषेचनम् ॥
लिङ्गस्पर्शनकं कृत्वा राजा दुर्जयमाप्नुयात् ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
केवलं परिचारश्च महाशैवः स्थितस्तु चेत् ।
गर्भगेहस्य बाह्ये तु स्थित्वा कर्माणि कारयेत् ॥
गर्भावरणकान्ते च मण्टपं पञ्चधा भवेत् ।
सार्ध[1]मण्टपकं चैव महा[2]मण्टपमेव च ॥
स्नपन[3]मण्टपं चैव नृत्त[4]मण्टपमेव च ।
वृष[5]मण्डपकं चैव पञ्चधा परिकीर्तितम् ॥
गर्भगेहस्य बाह्ये तु सान्तरालं तु मण्टपम् ।
स्तम्भद्वयसमायुक्तमथवा स्तम्भहीनकम् ॥

सार्धमण्टपकम्, पश्चाद् महामण्टपकं परम् ।
स्नपनं च ततः प्रोक्तं तद्बाह्ये मुखमण्टपम् ॥
चतुस्तम्भसमायुक्तमथवा स्तम्भहीनकम् ।
सार्धमण्टपकं कल्प्यं महामण्टपकेऽपि च ॥
रसस्तम्भसमायुक्तं स्नपने च ततः शृणु ।
वसुस्तम्भसमायुक्तं नृत्ये च रविसंख्यकम् ॥
अथवा विंशतिस्तम्भान वृषे च षोडशं भवेत् ।
द्वात्रिंशदथ कल्प्यं च गर्भावरणके तथा ॥
गर्भगेहं शिरःस्थानं सार्धं चापि ललाटकम् ।
महामण्टपकं चैव नेत्रवत् परिकीर्तितम् ॥
स्नपनं नासिकाकारं नृत्तमास्यं प्रकीर्तितम् ॥
वृषं कण्ठप्रदेशं च स्थानपञ्चकसंयुतम् ।
मण्टपादीनि सर्वाणि गर्भस्यावरणानि च ॥
गर्भस्योच्चं न कर्तव्यं कृतं चेद् राष्ट्रनाशनम् ।
तद्दोषशमनार्थाय पुनर्बालालयं चरेत् ॥
उत्सवमण्टपं कल्प्यं महाकुम्भाभिषेचनम् ।
जीर्णोद्धृतिं च काले तु मण्टपं पूर्ववत् कुरु ॥
महाव्रताः पाशुपताः शाक्ताश्च शांभवास्तथा ।
ब्राह्मणानां च सर्वेषामर्धमण्टपसेवितम् ॥
वेदाध्ययनविप्राणां स्नपने च प्रदर्शयेत् ।
महाव्रतश्च सार्धे चेत् प्रविशेद् रोगसंभवः ॥
तद्दोषशमनार्थाय कुर्याद् गव्याभिषेचनम् ।
गर्भगेहे प्रवेशश्चेद् जलसंप्रोक्षणं कुरु ॥
लिङ्गं चापि स्पृशेच्चैव परराष्ट्रभयं भवेत् ।
तद्दोषशमनार्थाय महाकुम्भाभिषेचनम् ।
वेदाध्ययनविप्राश्च महामण्टपके तथा ॥

प्रविशेद् राष्ट्रनाशश्च तद्दोषशमनार्थकम् ।
पञ्चगव्याभिषेकश्च तदन्ते च प्रवेशनम् ॥
जलसंप्रोक्षणं कृत्वा गर्भे चैव प्रवेशितम् ।
मोहेनापि प्रवेशश्चेद् महाकुम्भाभिषेचनम् ॥
यतियोंगी तपस्वी च नृत्तमण्टपसेवितम् ।
स्नपने च प्रवेशश्चेद् दुर्भिक्षं भवति ध्रुवम् ॥
तद्दोषशमनार्थाय कुर्याद् गव्याभिषेचनम् ।
महामण्टपकं चैव प्रविशेद् रोगपीडितम् ॥
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ।
तदन्ते च प्रवेशस्तु महाकुम्भाभिषेचनम् ॥
वृषाग्रे क्षत्रियश्चैव वैश्यश्चापि तथा भवेत् ।
नृत्ते चाप्यनुशैवश्च गन्तुं चेद् वर्षनाशनम् ॥
तद्दोषशमनार्थाय पुण्याहेन विशुद्ध्यति ।
तस्यान्ते च प्रवेशश्चेद् राजा दुर्जयमाप्नुयात् ॥
तद्दोषशमनार्थाय कुर्यात् कुम्भाभिषेचनम् ।
तदन्ते च प्रवेशश्चेद् जलसंप्रोक्षणं कुरु ॥
तस्यान्ते च प्रवेशश्चेद् महाकुम्भाभिषेचनम् ।
सच्छूद्रो वृषपृष्ठे च स्थित्वा दर्शनमाचरेत् ॥
वृषाग्रे तु प्रवेशश्चेत् पुण्याहेन विशुद्ध्यति ।
तस्यान्ते च प्रवेशश्चेत् पञ्चगव्येन शुद्धिदम् ॥
तदन्ते च प्रवेशश्चेद् राज-राष्ट्रविनाशनम् ।
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥
तस्यान्ते च प्रवेशश्चेद् महाकुम्भाभिषेचनम् ।
वृषमण्डपहीनं चेत् क्षत्रियाश्च विशस्तथा ॥
सच्छूद्रो नृत्तके स्थित्वा तत्तद्वर्णानुसारतः ।
नृत्तं चापि विहीनं चेद् यति-योगि-तपस्विना ॥

स्नपने मण्डपे स्थित्वा महादेवप्रदर्शनम् ।
क्षत्रियादि समारभ्य सच्छूद्रान्तं विशेषतः ॥
स्नपने चापि तिष्ठन्तं दर्शयेच्च यथाविधि ॥
स्नपनं च विहीनं चेद् विप्रादिशूद्रकावधि ।
महामण्डपके तिष्ठन ( ? ) दर्शयेयुर्विशेषतः ॥
तत्तद्वर्णानुसारेण स्थित्वा दर्शनमाचरेत् ।
महामण्टपहीनं चेद् गर्भावरणके स्थितम् ॥
सवर्णमक्षजीवी च कुलालोऽम्बष्ठकस्तथा ॥
पारशवो निषादश्च परिचर्याविशेषतः ।
अम्बष्ठः क्षौमजीवी च गोमुष्टिः शङ्खकस्तथा ॥
आविकः शूलकश्चैव मणिकारो गुहस्तथा ।
कटकारो नटश्चैव तथा मालवकादयः ॥
गर्भावरणके स्थित्वा दर्शयेत्तान् यथाविधि ।
तक्षा सूतः कर्मकारः सान्तर्द्वारे प्रवेशितम् ॥
चक्री च भैरवश्चैव गुहश्चापि तथोष्ट्रकः ॥
वेणुकः करणश्चैव मध्यहारे प्रवेशितम् ।
भगलब्धो नापितश्च समूची नम्रकस्तथा ॥
रजकः श्वपचश्चैव गुहो गोमुष्टिरेव च ।
ध्वजबाह्ये स्थितं चेत्तु दर्शनं च समाचरेत् ॥
म्लेच्छः पाषण्डकश्चैव वेदबाह्यश्च नास्तिकः ।
एतानपि च सर्वान् वै मर्यादौ च प्रवेशयेत् ॥
अन्त्यचण्डालकादीनां महामर्या प्रदर्शयेत् ।
तत्तज्जात्युचितस्थानाद् अनुक्तस्थानकेष्वपि ॥
ध्वजान्तं तु न दोषः स्यात् तस्यान्ते न प्रवेशनम् ।
मोहेनापि प्रवेशश्चेद् राजा राष्ट्रं विनश्यति ॥
तद्दोषशमनार्थाय जलसंप्रोक्षणं चरेत् ।

अन्तर्द्वारे प्रवेशश्चेद् महाकुम्भाभिषेचनम् ।
चतुःप्राकारके चैव त्रिप्राकारे ह्यथापि वा ।
एवमेव प्रकारेण महादेवं प्रदर्शयेत् ।
प्राकारद्वयसंयुक्ते ध्वजान्ते न स्थितो जनः ।
ध्वजबाह्ये च तिष्ठेत दर्शनं च समाचरेत् ।
म्लेच्छादपि च सर्वे च प्राकारस्य तु बाह्यके ।
दर्शनं च प्रकर्तव्यमथवा स्थूपिदर्शनम् ॥
एकप्राकारके चैवाप्येवमेव प्रकारतः ।
मोहेन ह्यन्यथा कृत्वा राष्ट्रक्षोभो न संशयः ॥
तद्दोषशमनार्थाय जलसंप्रोक्षणं कुरु ॥—इति ॥

तदेवमनुलोम-प्रतिलोमादिजातीनां विशेषतः सामान्यतश्च देवदर्शन-योग्यस्थानविशेषव्यवस्थापकानि प्रमाणानि शैवागमान्तर्गतकामिकागमगतानि वचनानि संगृहीतानि । सुप्रभेदागमोऽपि शैवानां सामान्यतोऽस्पृश्यप्रवेशने प्रायश्चित्तनिरूपणपरः कामिकागमवचनैकवाक्यतया विशेषतस्तत्तज्जाति-विशेषाणां तत्तत्स्थानविशेषप्रवेशनिमित्तकप्रायश्चित्तव्यवस्थायां प्रमाणमेव ।

———

# उपदेशपरम्परा

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटि-पीठाधीशानाम् ]

( २ )

## जीवन्मुक्तिदशा

अस्माकमाचार्याः सर्वेषां प्राणिनां यथा बन्धोन्मोचनम्, तथाऽद्वैतमुपादिशन्। तत्परम्परायामागता वयं सर्वेषु देशेषु पर्यटामः। एवं पर्यटनं तान्, तैः संस्थापितं मतं चासकृद् स्मारयति। वयं सर्वेऽप्यत्र समवेताः स्मः। अस्मिन् समये सर्वेषां श्रीभगवत्पादानां स्मरणमेव वर्तते। अस्मान् एवं प्रकारेण यत् पर्यटितुं व्यवास्थापयन्, तस्येदं मुख्यं प्रयोजनम्। न केवलमियत्। अपरं प्रयोजनमपि वर्तते। आसेतोराहिमाचलं मतं धर्ममार्गं च प्रतिष्ठापितवन्त आचार्या अस्माकमप्येकामाज्ञामदिशन्। श्रीचन्द्रमौलीश्वरं पूजयन्त एव तत्र तत्र पर्यटन्तो मतसम्बन्धिनो बहून् विषयानपि निष्कृष्योपदेष्टुमर्हाम इत्यस्माकमाज्ञापयन्। तदर्थं तेषां नामापि वोढुमन्वज्ञापयन्। अतः संन्यासाश्रमेऽवस्थाय श्रीभगवत्पादानां सिद्धान्तानामुपदेशेनावस्थानमेवास्माकं मुख्यं कृत्यम्। मतस्य प्रतिष्ठापकान् आचार्या इति वदामः। मतप्रतिष्ठापकान् अस्मदाचार्यान् भगवत्पादा इति वदामः। महतां नाम्नः कथनं न संप्रदायः।

वयं सर्वदा न म्रियेमहीति पिपीलिकामारभ्य सर्वेषां प्राणिनां भावो वर्तते। परं तु सर्वे जीवा मारंमारं जायन्ते, जानंजानं च म्रियन्ते। मृत्युं जितवन्तो महान्तो बहव आसन्निती तिहासेभ्यः शृणुमः। निकषा तादृशाः सदाशिवब्रह्मेन्द्रा इति महान्तः केचनासन्नित्यपि जानीमः। सांप्रतमपि केचन स्युः, तथाऽपि मरणं नाम व्याधिं चिकित्सितुमौषधमिदमित्यस्मत्सविधे समागत्य न ते वदन्ति। एतदुत्तममौषधमेव भगवत्पादा अस्माक-

मुपादिशन। जीवन्त एवेदं वयमार्जयितुमर्हामः। मरणानन्तरमार्ज-यितुं नास्ति पर्याप्ता शक्तिरस्माकम्। पूर्वं मृताः पुनरपि जाताः स्मः, न हि? तत एवेदं स्फुटति। यस्माद् मृताः, ततः पूर्वं नूनं जाता भवितुमर्हामः। एवमिव पुनरपि विचारयितुं गम्यते चेत, शिरो भ्रमितुमारभेत। स्याद् नाम तत्।

मरणानन्तरं मरणौषधमार्जयितुं न शक्यत इति पुनरपि जननेनैव ज्ञायत इत्याख्यम्। तद्वदेव पूर्वतनजन्मसु जीवन्त एव वयमिमं मार्गं नागवेषयामेत्यपि जानीमः। कुत इति चेत्, मृत्वैव खलु पुनरपि वयं जाता वर्तामहे। अतो जननं मरणमिति च व्याधिरस्माकं बुद्धेरनोतात् कालादस्मान समन्वारभेते।

"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च" इति भगवद्गीताया-मर्जुनाय भगवानुपदिदेश। यदि मारंमारं जानंजानं चावस्थानमेवास्माकं सुखम्, अमरणावस्थार्थं न भेषजं गवेषयितुमर्हामः। न तु तथा पश्यामः।

मनुजस्य शरीरमिति यः कोऽपि यदा कदा वाऽकारयत्। यावत् तत्, अशनाया-पिपासेत्यादय एनं बाधमाना एव वर्तन्ते। तान परिहर्तुं प्रतिजीवमनेकानि वस्तूनि नियतमन्वेषितुमर्हति। अस्माकं कार्यं उपयुञ्जन्ति, इति तेष्वस्माकमभिलाषः समुदेति, तस्य विरुन्धन्ति चेत, द्वेषः समुदेति। एनम्—अशनाया-पिपासेति व्याधिं परिहर्तुमेव वयं सर्वेऽप्येतावत् खिद्यामः। अन्यो व्याधिश्चेत्, औषधं सेव्यते चेद्, दूरीभवेत्। अयं तु व्याधिस्तथा न दूरीभवति। प्रत्यवसर-माविर्भूय बाधमान एव वर्तते। क्षुधां विनाऽवस्थातुं यदि कोऽपि सिद्धो भेषजं दद्यात्, तर्हि एवं खेदनं नावश्यकं भवति।

अचिरात् चित्तूरजनपदे वर्तमानं "बुक्कै" नाम तीर्थस्थानमध्यवसम्। तद् निकषा 'कैलासकोनै' 'सदाशिवकोनै' इति द्वे तीर्थे वर्तेते। 'कोनै' नाम निर्झर इत्यान्ध्रभाषायामर्थः। तत्र शिवक्षेत्राणि वर्तन्ते। अहं तत्रागच्छम्।

पुण्येन पावनेन च जलेन पूर्णं मनोरमं तद् निर्झरति। विविक्तता शान्तिश्च तत् परितः परिपूर्णा वर्तते। तत्र स्नानस्य जपस्य चावसरे 'अत्रैवावतिष्ठेमहि, इतः परं मा कुत्रापि गच्छेम। इदं विहायापरः सन्तोषो नास्ती'ति प्रतिभायात्। तथापि वयं ततः कुतः परावृत्यागच्छामः ? अस्या अशनाया वेदनया खलु। तादृशा रम्या मनोविश्रामस्थानानि च प्रदेशास्तत्र अकृत्रिमाः सन्ति। स्मरणमागतमित्यवादिषम्। मनुष्यस्य देहसम्बन्ध एव जन्मेति कथ्यते, देहवियोग एव नाम मरणम्।

इदं शरीरं यावत् तिष्ठति, तावत् क्षुधा नाम बाधाऽस्मान् न परित्यजनीत्यबोधम्। शरीरं यदि परित्यजेम, तर्हि क्लेशो नश्येदिति फलति। तस्य सुलभ उपाय एकः प्रतिभायात्। अस्मिन् समये केचन यदि महद् असत्कार्यं कुर्वते, अथवाऽसह्यं दुःखं भवति, नालीकं गृहीत्वाऽऽत्मानं दहन्ति। शरीरसम्बन्धं परिहर्तुमयमप्येको मार्गो भवेद्वा ? न भवेत्। एतत् स्थूलशरीराद् वियुज्य गच्छति चेदपि, किमप्यनिर्देश्यमिदन्तयाऽपरं शरीरमनूत्क्रमत्येव, तेन साकं यत्र कुत्रापि बंभ्रम्यमाणा एव स्थातुमर्हन्ति। पुनरपि नीचमेव जन्म ग्रहीतुमर्हन्ति। आत्महननं न समीचीनः पन्थाः। आत्मवधो महापातकमिति धर्मशास्त्राणि वदन्ति। पूर्वमेवानेकानि पापानि कृत्वैतादृशान् क्लेशान् अनुभवन्ति। एतैः साकमात्मवधो नाम महापातकमपि यदि समवेयात्, जन्मानि क्लेशाश्च वर्धेरंस्तमाम्। अस्मिन्नपि समये आत्महत्या महानपराध इत्येव मन्यन्ते। एकोऽपरं हन्ति चेत्, न्यायालये तस्य मरणदण्डो विधीयते। तत् किमर्थम् ? मरणदण्डेन तस्य पापं सर्वं दूरीभवेद्वा ? न कदापि। स दण्डो न तस्य क्षेमाय। जीवति चेत्, पुनरपि बहूनपरान् हन्यात्, न वा ? तथाऽनेकेषां मरणमपेक्ष्यैकस्य मरणमेव वरमिति दण्डं विदधते। स्यादेतत्।

शरीरं नाम महान् व्याधिः। आत्मवधो महापातकम्। अमरणावस्था नाम समुन्नता स्थितिरित्याचक्षिषि। तां स्थितिं प्राप्तुं को मार्गः ? अमुमेव भगवत्पादा उपदिशन्ति। प्रतिमतं तत्तदाचार्यैरस्योपाय उच्यते। शैवा

एकमुपायं वदन्ति। अपरमेकं वैष्णवा वदन्ति। पुनरपि बहव उपाया उच्यन्ते। भगवत्पादाः कमप्युपायं 'माऽस्तु' इति न वारयन्ति। तेऽपि हि ग्राह्या एव। परं तु तेषां साहाय्येनास्य व्याधेस्तात्कालिकीं शान्तिं संपादयेम। व्याधेर्मूलकारणं परं संलग्नमेव स्यात्। एकस्य "मलेरिया" ज्वर आगच्छति। "कोयना" प्रभृतीनि भेषजानि दद्महे। दीयन्ते चेत्, ज्वरः शाम्यति। इदं पर्याप्तं वा? पुनरप्ययं ज्वरो यथा न स्यात्, तथा कर्तुं ज्वरस्योन्मूलनक्षममपरमौषधं लभ्यते चेत्, स विशेषो न वा? मतान्तरस्था यमुपायं वदन्ति, तेन शरीराख्यव्याधेश्चिकित्सनं 'कोयना' भेषजसेवनमिव स्यात्। तदपि तत्कालशान्त्यर्थमुपयोक्तुमेवार्हामः। एवमेव भगवत्पादास्सर्वानपि मार्गानभ्युपगम्य सर्वेषामुत्तममपरं मार्गमुपादिशन्। मरणानन्तरमेतदौषधं न सेवितुमर्हाम इत्यभाणिषम्। तदानीं चक्षुः पादौ इत्यादीनि करणानि सर्वाणि कार्याक्षमाणि शेरते। प्रत्यहं पूजाकाले पठ्यमानाः पुरुषसूक्तमन्त्रा नाम। तत्रायं मन्त्र आगच्छति—

"तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" इति।

पूर्वोक्तप्रकारेणैतदात्मस्वरूपं सम्यग् विविच्य अस्मिन्नेव जन्मन्यमरणावस्थां प्राप्तो भवति। एतां स्थितिं प्राप्तुमपरः पन्था नास्ति इत्यर्थः। अमृतं नाम मोक्षः। मोक्षं प्राप्तवतां मरणं जन्मेत्येते न स्तः, इति हेतोरमृतमिति कथ्यते। शरीरं नाम व्याधिर्मनुष्याणां न नवसमुत्पन्नो रोगः, अस्माकमज्ञातमसंख्येयं कालमनुवर्तते। समुचितमौषधं संसेव्यैनं व्याधिं परिहृतवतामनुभव एवास्माकमपेक्ष्यते। अयं व्याधिरिव तस्य सिद्धमौषधमप्यनादौ वेद उक्तं वर्तते। वयमेकं पुस्तकं विलिखामः। तत् पुस्तकं ततः पूर्वं नास्ति। तद्वद् वेद एकेन न लिखितो वर्तते। सदातनोऽयमुपदेश इति सिद्धान्तः। एतमधिकृत्य यथावकाशं युष्माकं वदिष्यामि। पूर्वोक्ते मन्त्रे—'इह' इति पदमस्ति, इति हेतोरेतस्य शरीरस्यावस्थानदशायामेवामरणावस्थां प्राप्तुमर्हाम इति लभ्यते। अयमेव मार्ग उत्तमः।

समये त एवास्माकं विरोधिनो भवन्तीति कृत्वा चिन्तयामः, तदानीं तेषां सुखदुःखानामस्माकं च सम्बन्धो न भवति। वारं वारं तेषां दुःखमागच्छेत् इत्येतदाशंसायां परं किञ्चित् सम्बन्धः स्याच्चेदपि स्यात्। तत् कुतः? अहंममेत्यभिमानो विनष्टः। एवमेव वयमस्माकं शरीरमपि कर्तुमर्हामः। दृश्यताम्—अभिमुखमेकः कदलीस्तम्भो बद्धो लम्बते। अयं यदि ग्लानो-जीर्यति, तर्हि किं वयं ग्लाना जीर्यामः? तं कदलीस्तम्भमपेक्ष्य किञ्चित् समीपे बद्धो मांसस्तम्भ इत्येवेदं शरीरमसकृत् चिन्तनीयम्। वयं वयमिति चिन्तनात् अयमभिमानोऽस्मासु दृढमूलो वर्तते। कामः, क्रोधः, द्वेषः, भीः, इत्येते सर्वे मनस एव, न तु मम, अशनाया-पिपासाप्रभृतयः शरीरस्यैव, न तु ममेत्येवंप्रकारेण यदि सर्वदाऽनुसन्धीयते, दृढमूलोऽय-मभिमानः किञ्चित् किञ्चिद् अपसरेत्। अस्माकमात्माऽत्यन्तं शुद्धस्वभाव इत्युपनिषत्सूपदिश्यते। सर्वव्यापि नित्यशुद्धम्, आनन्दस्वरूपं च किंचि-द्वस्त्वेवेश्वरः। स ईश्वर एव वयमिति वस्तुतत्त्वं सर्वेऽपि ज्ञातुमर्हन्ति। अस्माभिर्दृश्यमानानि शरीरादीनि वस्तूनि पृथक्, वयं पृथक् इति विविच्य ज्ञातुमर्हामः।

"तं स्वाच्छरीरात् प्रवृहेत्, मुञ्जादिवेषीकां
धैर्येण तं विद्याच्छुक्रममृतम्।" इति। (कठोपनिषत्)

सस्यस्तम्भाद् इषीकापदवाच्यसस्यगुच्छो यथा प्रवृह्यते, एवमात्मस्वरूपं शरीराद् धैर्येण पृथक् कर्तव्यम्, तदानीमतिशुद्धममरणधर्मं च दृश्येते-त्यर्थः। एकं वस्तु वयं पश्यामः। तत्र दृश्यमानं कर्मेति, द्रष्टा कर्तेति द्वितयं प्रतीयते। दृश्यमानमन्यत्, द्रष्टा चान्यः। शरीरं दृश्यते, अत-स्तस्मात् द्रष्टाऽऽत्माऽन्यो भवति। आत्मानं दृश्य इति मन्वानोऽज्ञानी। इदमेव—

"अविज्ञातं विजानतां विज्ञातमविजानताम्।" (केनोपनिषत्)

इत्युपनिषत् कथयति। ज्ञायत इति जानतां न ज्ञातम्, न ज्ञायत इति जानतां ज्ञातमिति तस्यार्थः। स्यादेतत्।

यदि वयं विना मरणमवतिष्ठेमहि, तर्हि शरीरादिव्याधयो विनश्येयुः। शरीररहित ईश्वरः, इत्यतः सोऽहं-भावना सर्वदाऽभ्यसनीया। उपवेशावसर उत्थानावसरे च केचन सोऽहं सोऽहमिति शब्दमात्रमुच्चरन्ति, तथाऽकरणेन तस्यार्थमपि विज्ञायोच्चरणं विशेषः। अस्माकं शरीरं नास्मदीयमिति चिन्तनीयमिति कथनं सुलभम्, तथा करणं परं कठिनमेव। यः कोऽप्यस्मान् ताडयति चेत्, नाताडयदिति वा, न वेदनाऽऽसीदिति वा कृत्वा चिन्तयितुमपि शक्यते वा ? तथा कर्तुं क उपायः। शरीरं नास्तीति ज्ञातुं न शक्यते चेत्, लोके विद्यमानानि सर्वाणि शरीराण्यस्मदीयान्येवेति भावनैवारम्भणीया। स एवैतस्य योग्य उपायः। तथा भावनेनेतरे यदा क्लिश्यन्ति, तदा तस्य परिहारं कर्तुमस्माकं बुद्धिरुदेति। इतरेषां सुखदुःखान्यस्मदीयान्येव समापतन्ति। अस्माभिः क्रियमाणं सर्वं कर्म नास्माकमिति भावोऽपि स्वयमेवोपनिपतेत्। इदमेव लक्ष्यम्—सर्वमीश्वरायार्पणबुध्याऽनुष्ठेयमिति भगवान् गीतायामर्जुनायोपादिशत्। ततः सर्वदाऽन्येषामेव किङ्कर्तव्यम्। अस्माभिः क्रियमाणं सर्वं कर्मेश्वरायार्पणीयम्। सर्वदा 'सोऽहं' भावना कर्तव्या। पूर्वंदुर्मदुक्तप्रकारेण 'नमः पार्वतीपतये' इति नामकीर्तनेनैव स्थातव्यम्। इदमेव जीवत एव सतोऽशरीरत्वम्। इदमेव शास्त्रे "जीवन्मुक्तिः" इति वदन्ति।

"अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" ( बृहदारण्यकम् ) इति वचनमप्येवमेव वदति, विना शरीरं जीवन्तं न कदापि सुखदुःखे निकषापि प्रसरत इत्यर्थः। भगवत्पादैरस्माकममरणार्थमुपदिष्टमौषधमपीदमेव। महान्तः इमं विषयं श्लोकरूपेणावदन्। स तु श्लोको भगवत्पादैर्ब्रह्मसूत्रभाष्ये उदाहियत—

गौण-मिथ्यात्मनोऽसत्त्वे पुत्र-देहादिबाधनात्।
सद्ब्रह्मात्माऽहमित्येवं बोधे कार्यं कथं भवेत्॥

[ सूत्रभाष्यम्। ]

गौणात्मा, मिथ्यात्मा, मुख्यात्मेत्यात्मनः त्रेधा विभज्य कथनं संप्रदायः। पुत्र-मित्राणि वयमेवेति, तेषां सुखदुःखे अस्माकमेवेति चाभिमानः सर्वेषु नित्यं वसतीत्यवोचं खलु। स एव गौणात्मा। गौणो नामोपचारेण कथन-मित्यर्थः। वयमन्ये, पुत्र-मित्राणि पृथक् इत्यस्माकं ज्ञानदशायामेव वयं वय-मित्यभिमानोऽस्माकं भवति, ततः पुत्रादिगौणात्मेति कथ्यते। शरीरा-दिष्वहमित्यभिमानात् ते मिथ्यात्मानः। पूर्वोक्तप्रकारेण शुद्धमात्मस्वरूपं विविच्य शुद्धं ब्रह्मैवाहमित्यनुभवावस्थायां ब्रह्मात्मा भवति। तदेव मुख्यात्मेत्य-वोचम्। यदि पूर्वोक्तौ गौणात्म-मिथ्यात्मानावपसार्येते, पुत्रः, मित्राणि, शरीरे-न्द्रियाणि इत्येषां सम्बन्धोऽपसरेत्। तदानीं "सत्यं ब्रह्मैवाहमस्मि" इति ज्ञानं समुदेति। तदनन्तरं कर्तव्यमेकमपि नावशिष्यते, इति पूर्वोदाहृतस्य श्लोकस्य तात्पर्यम्। तस्माद् वयं सर्वेऽपि परमाचार्यैर्भगवत्पादैः कृपयोपदिष्टं तत्त्वज्ञानरूपमिदं भेषजं प्राप्तुं प्रयतेमहि, सदा शुद्धमशरीरं निरवद्यं चानन्दं लभेमहि। एतस्य निदानमीश्वरभावनामभ्यसितुं सदा सत्कार्येष्वेव प्रवर्तितुं च श्रीचन्द्रमौलीश्वरोऽनुगृह्णात्विति प्रार्थना।

---

# महावारिधिः*

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

असीमरससम्भृतं विविधभूतिविभ्राजितं
तरङ्गशतमण्डितं सततशब्दसम्भावितम् ।
सदा पवनवीजितं शुभपुरीपदान्तं गतं
नमामि जलधीश्वरं जगति तीर्थराजं परम् ॥१॥

निरन्तरविचञ्चलं धवलफेनमालाकुलं
सुनीलरुचिसञ्चयं किमपि नीरमायामयम् ।
विकीर्णशतशुक्तिकं शुभपुरीपदान्तस्पृशं
नमामि जलधीश्वरं जगति तीर्थराजं परम् ॥२॥

गभीरसलिलोदरे प्रतिवसन्ति यस्याभया
विचित्रतमजन्तवः सुचिरमश्विवाह्याः खलाः ।
यदम्बुपरिचुम्बितं न परिभाति भिन्नं नभो
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥३॥

सुदूरमपि लोचनं व्रजति यावदाकाङ्क्षया
न भाति सलिलं विना किमपि यस्य नीरात्मनः ।
अशेषमहिमाश्रयं शुभपुरीपदान्तस्पृशं
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥४॥

तटान्तलहरावली प्रतिपदं विभग्ना सती
यदीयसलिलान्तरे विलयमेति चित्रा क्षणात् ।
विदाहिलवणाशयं शुभपुरीपदान्ताश्रयं
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥५॥

---

* श्रीपुरुषोत्तमक्षेत्र-सन्निहितसमुद्रदर्शनानन्तरं निबद्धोऽयं निबन्धः ।

पुरीपुरभवाः शुभाः सपदि झावुकाः पादपाः
स्वनं सनसनायिता विदधतो मुहुश्चालिताः ।
यदीयनियतस्वनैः सुघटयन्ति साम्यं सदा
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥६॥
यदन्तरवगाहनं निखिलजीवसन्तर्पणं
तमस्ततिनिषूदनं विविधरोगविद्रावणम् ।
विलोचनमनोहरं गिरिशदत्तनृत्योद्धतं
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥७॥
परेशचरणाशया सततमूर्द्ध्वबाहुर्भवन्
पुरीचरणसङ्गतः पुलिनभूमिसंवारितः ।
विषादविवशो भृशं विलपतीव यः शब्दभाङ्-
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥८॥
यदीयसिकताकणाः पवनवेगसञ्चालिता
धराधरसमुन्नताः क्वचन दृष्टिसन्तोषकाः ।
यदीयलहरस्रजा पुलिनमेति निर्दोषतां
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥९॥
यदीयसलिलोरसि प्रकटबालभङ्गावली
सुधाकरकरोज्ज्वला रजतसारशुभ्राकृतिः ।
अनन्तफणचक्रवन्मनसि भाति चक्षुष्मतां
नमामि जलधीश्वरं तमिह तीर्थराजं परम् ॥१०॥
क्वचिच्छायापत्त्या जलदनिकरस्योद्गतवतः
सुनीलं यस्याम्बु क्वचिदपि तरङ्गेण विशदम् ।
क्वचित् सायं रक्तच्छुरितमिव रक्तेन रविणा
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥११॥
स्वरत्नानां गर्भे सुविमलरुचां संस्थितवतां
परेभ्यो गुप्त्यर्थं सितलहरवेशेन परितः ।

विधाय प्राकारं नवनवमहो यः स्थिरमना
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१२॥
गभीरे यत्तोये जनिमुपगता बाललहरी
चिरं स्थातुं नालं तलदिशि लयं याति सहसा।
विपत्तिं तां ज्ञात्वा तटमुपगता प्रौढलहरी
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१३॥
यतः सृष्टाऽभीष्टा धरणिरियमिष्टेन वपुषा
प्रकीर्णा शस्याद्यैः परिचरति लोकान् स्थितिमती।
यतो हृत्वा नीरं क्षितिहितकृते वर्षति घनो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१४॥
पुरी शङ्खाकारा विलसति परा यस्य पुलिने
मठैः संख्यातीतैर्गगनविलसत् सौम्यशिखरैः।
जगन्नाथो यस्यां वसतिमभजत् पार्षदगणै-
र्नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१५॥
जगन्नाथो देवस्तपनतनुजावर्णरुचिरे
महावीचौ यस्मिन् न खलु जलकेलिं वितनुते।
नरेन्द्राख्यं तीर्थं तदिह कृतवान् केलिकृतये
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१६॥
यदुत्कर्षाकृष्टा सुरपुरनदी मुक्तिपदवी
स्थिता पुर्यां दृप्यत्-कलुषकुलविद्रावणपटुः।
चिरं गङ्गा भूत्वा सुविपुलजला चारुसरसी
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१७॥
समीपे श्रीमत्स्यं प्रियतमगुणं माधवमपि
प्रपश्यन्ती सेयं न खलु पयसा यस्य मिलिता।
महाब्धौ पातश्चेत् कथमपि न दृश्यं द्वयमिदं
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१८॥

दिवा सूरोत्तापात्तृषितमिव यत्सैकततलं
तरङ्गेण स्निग्धं पिबति सलिलं कालकलया।
न चेद्भङ्गोच्छ्वासक्षणविगमतः शुष्यति कथं
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥१९॥

सुविस्तीर्णे यस्य प्रचितसिकते सैकतपदे
जनाः सायं शान्तं पवनमुपभोक्तुं व्यवसिताः।
स्थिताः केचित् केचिद् विचरणपरा दूरगतयो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२०॥

अदूरे यत्तीरे निशि निलयभाजः प्रतिपलं
रवेणोत्प्रेक्षन्ते विपुलतमवात्याजनिभयम्।
क्वचिद् घोरारावः क्वचिदपि शमं याति परितो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२१॥

मठाध्यक्षाः प्रेक्षाविमलमनसो यस्य सलिले
कृतस्नाना नित्यं विदधति परं पुण्यनिचयम्।
विधौतं यन्नीरैरपसरति दूरं मलशतं
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२२॥

प्लवन्ते यस्योरःस्थलजलमुपाश्रित्य समये
बृहत् पोताः पत्रप्रतिमलघुरूपा विचलिताः।
सुदूरं गन्तारो भयचकितचित्ता इव पुरो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२३॥

विदित्वा कालिन्दीं कलकलमयीं नीलसलिलां
प्रविष्टो यं मोहादलभत लयं शैशवयतिः।
महात्मा गौराङ्गो भगवदवतारः सुविदितो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२४॥

अधृष्यत्वे सत्यप्यतिनिपुणका धीवरवरा-

कृपायोगाद् यस्य प्रतिहतभया यान्ति पुलिनं
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२५॥
अनन्ते कल्पान्ते यदुरसि महाविष्णुरसमः
श्रिया दीव्यत्सेवाप्रवणकरया लालितपदः ।
परिश्रान्तः शेते सकलजगतां पालनपटु-
र्नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२६॥
तमःस्तोमाक्रान्ता धरणिरतिकृष्णाभवसना
यदा लुप्ताकारा घनजलधरच्छन्नगगना ।
तदाप्युद्यद्भङ्गा नयनविषया यस्य धवला
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२७॥
तदा नीलाद्वैते विलसति धरावक्षसि पुरो
महाकाशेनैक्यं व्रजति जलधौ नीलसलिले ।
रुचिर्भीमाकारा जनयति भयं यस्य नदतो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२८॥
घनानां घोराणां रवमवनिभृद्गह्वरभिदं
पृथक्त्वेन ज्ञातुं यदतिसविधे नार्हति नरः ।
यदारम्भः शम्भोरिव निरवधिस्ताण्डवमयो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥२९॥
उदात्तं सङ्गीतं पवनपथसञ्चारसुभगं
सुदूरे कस्यार्थे रचयति महावारिधिरयम् ।
न यः श्रान्तो गीताद् विरमति विदीर्णाम्बरतलो
नमाम्यद्धा श्रद्धाविशदहृदयस्तं जलनिधिम् ॥३०॥
गम्भीराभवनात् परैरविदितो गौराङ्गदेवः पुरा
यस्यानन्तमहोदधेरधितटं प्राप्तो निशायां रहः ।
कालिन्दीकलगीतलोभवशतो भावेन मुग्धोऽभवत्
तं लोकोत्तरतीर्थराजमनघं वन्दे पुरीनीरधिम् ॥३१॥

शुक्लं पक्षमुपेत्य बालशशिनं शून्ये चरन्तं प्रियं
वात्सल्यादिव वीक्ष्य यो लहरिकाहस्तैर्जिघृक्षन्नहो !
दूराद्दूरतरं तनोति लहरीमालामसीमोद्यम-
स्तं लोकोत्तरतीर्थराजमनघं वन्दे पुरीनीरधिम् ॥३२॥

यन्नीरेण समेधितेन सरितो गच्छन्ति वृद्धिं पराम्
उच्छ्वासापगमे च निर्झरसमा यस्मिन् विशन्ति द्रुतम् ।
आकारेण गुणेन वा निरुपमं दीव्यत्तरङ्गाकुलं
तं लोकोत्तरतीर्थराजमजयं वन्दे महानीरधिम् ॥३३॥

या सृष्टिः प्रथमा विधेर्जलमयी रिङ्गत्तरङ्गा परा
यस्यां वीजमपासृजत् स तदहो हैमं बभूवाण्डकम् ।
तस्मिन् सर्वजगत्पिता जनिमगाद् भूतं तदाद्यं महद्
विभ्राणं भुवि तीर्थराजमजयं वन्दे महावारिधिम् ॥३४॥

यद्भङ्गप्रतिघातमर्दिततनुः स्थैर्यं न धत्ते करी
का वार्त्ता लघुशक्तिकस्य मनुजस्याल्पेन दैन्यं यतः ।
दूरादुद्गतिभाक् तरङ्गनिकरस्तीरं गतो भिद्यते
तं लोकोत्तरतीर्थराजमसमं वन्दे महावारिधिम् ॥३५॥

यस्यानन्तपयोनिधेः स्थितिमतो भीष्मस्य तोयात्मन
ऊर्द्ध्वं शून्यमनन्यसंश्रयपदं भिन्नं न सन्दृश्यते ।
नो सर्पन्ति विहङ्गमा भयभृतो यस्योपरिष्टाच्चिरं
तं लोकोत्तरतीर्थराजमसमं वन्दे महावारिधिम् ॥३६॥

यस्यान्तः कति भूधराः स्थिरतरा गूढाः स्थितिं बिभ्रतो
मैनाकेन समानतामुपगताः स्रोतः सहन्ते परम् ।
येषां दीर्घगुहासु वारिधिचरा जीवा ध्रियन्ते सुखं
तं लोकोत्तरतीर्थराजमसमं वन्दे महावारिधिम् ॥३७॥

( क्रमशः )

# धर्ममीमांसा

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

( पूर्वानुवृत्तिः )

द्विजातिभिः ब्राह्मणैः। सवर्णायाः पुत्रासद्भावे व्यवस्थामाह क्वचिदेव त्वित्यनेन। तथाहि विवाहस्त्रिविधः, धर्मार्थः प्रजार्थो रत्यर्थश्चेति। तत्र गृहस्थाश्रमविहितकर्मणि पत्नीसम्पाद्यकर्मानुष्ठानार्थं यो विवाहः स सवर्णाया एव। अयञ्च विवाहो धर्मार्थः। प्रजार्थस्तु सवर्णापुत्रासद्भावे, सवर्णामरणे वा सवर्णान्तरालाभे, ब्राह्मणेनाश्रमधर्मरक्षार्थं क्षत्रियवैश्यकन्ययोरपि विवाहः कार्यः। तादृशासवर्णाविवाहो धर्मार्थोऽपि भवति इतीयं व्यवस्था न तु विधिः। असवर्णयाऽपि पत्न्यापदि ब्राह्मणस्य धर्मानुष्ठानव्यवस्थापनात्। रत्यर्थस्तु विवाहः शूद्रकन्यया अपि, "रत्यर्थमेव सा तस्य कामार्त्तस्य प्रकीर्त्तिता" इत्यादि विष्णुपुराणात्। शूद्रकन्योपयमो ब्राह्मण-क्षत्रिययोः सर्वथा गर्हितत्वेन मनुनापि निर्दिष्टः, यथा—

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्याऽपदिश्यते॥

इति। अपरञ्च—

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते॥

इति। विष्णुरपि—

द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत् क्वचित्।
रत्यर्थमेव साऽत्यन्तं रागान्धस्य प्रकीर्त्तिता॥

इति। वशिष्ठोऽपि—"कृष्णवर्णा च रामा रमणायैव न धर्मार्थमि"ति। कृष्णवर्णा शूद्रेत्यर्थः। शङ्खश्चाह—

आपद्यपि न कर्त्तव्या शूद्रा भार्या द्विजेन तु ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥

इति । ब्राह्मणस्य सवर्णास्त्रीसत्त्वे तदुत्पन्नपुत्रसत्त्वे च पुनः क्षत्रिय-वैश्यकन्ययोर्विवाहोऽपि रत्यर्थ एव । अतस्तस्य शूद्रकन्याविवाहतुल्यत्व-मिति । अत एवासवर्णाविवाहस्य सङ्करकारकत्वात् सङ्करस्य च नरकोत्-पादकत्वात् सति सवर्णासम्भवेऽसवर्णाविवाहः सर्वथा परित्याज्यः । ईश्वरगीतास्वपि "सङ्करो नरकायैवे"त्युक्तम् । पुराणेष्वपि— 'द्विजाना-मसवर्णासु कन्यासूपयमस्तथे"त्यादिवाक्यैर्विशेषतः कलावसवर्णाविवाहो निषिद्धः । इति अलं प्रपञ्चितेन ।

अथ गौणवर्णसङ्करस्वरूपमाह मनुर्यथा—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणाञ्च त्यागेन जायते वर्णसङ्करः ॥

इति । वर्णानां व्यभिचारश्च परस्त्रीगमनम् । तच्च समानजातीयास्वसमान-जातीयासु वा परकीयास्वभिगमनमिति । अवेद्यावेदनमिति अवेद्या चाविवाह्या सपिण्डादिकन्या, तस्या विवाहः । तथा स्वकर्मणाम् उपनयनवेदग्रहणादीनां त्याग इत्यर्थः । उपनयनहीनानां व्रात्यसंज्ञामाह मनुः यथा—

द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्रीपरिभ्रष्टान् व्रात्या इति विनिर्दिशेत् ॥

इति । क्षत्रियाणां केषाञ्चिद् व्रात्यत्वमापन्नानां नाम निर्दिशति यथा—

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥ इत्यादि ।

अथ सङ्कीर्णसङ्करः ।

सङ्कीर्णसङ्कराश्चासंख्यास्तथापि ऋषिप्रदर्शितास्तेषां केचिन्नामतो निर्दि-श्यन्ते । तथाच याज्ञवल्क्यः--

माहिष्येण करण्यान्तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥

इति । क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः, वैश्येन शूद्रायामुत्पादिता करणी । तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवतीत्यर्थः । अस्य मातामहीद्वारकशूद्रत्वेऽपि उपनयनादिसंस्कारमाह शङ्खः यथा—"क्षत्रिय-वैश्यानुलोमान्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयन-संस्कारक्रिया-स्वप्रतिष्ठा रथसूत्रवास्तुविद्याध्ययनवृत्तिता चे"ति । अत एव शूद्राणामदुष्ट-कर्मणामुपनयनमिति यदापस्तम्बेन शूद्राणामुपनयनं विहितं तद्रथकारस्यैव विज्ञेयमिति केचिदाहुः । एतेन मूर्द्धाभिषिक्ताम्बष्ठमाहिष्यैरेतास्वेवानु-लोम्येनोत्पादिता ये सङ्कीर्णसङ्करास्तेऽप्युपनयनादिसंस्कारार्हा इति प्रतीयते । असंख्यत्वाच्च तेषां नामतो निर्देशनासम्भवाद्दाहासत्सन्तस्त्वित्यादि । सङ्करसङ्कराः प्रतिलोमजा असन्त उपनयनाद्यनर्हा अनुलोमजाश्च सन्तः सति सम्भवे उपनयनार्हा इत्यर्थः । मनुराह—

ब्राह्मणादुग्रकन्यायाम् आवृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायाम् आयोगव्यान्त्वधिग्वनः ॥

अपरमपि—

जातो निषादाच्छूद्रायां जात्या भवति पुक्कशः ।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः स्मृतः ॥
क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेन उच्यते ॥

व्रात्येभ्यो ब्राह्मणादिभ्यः स्वस्वजातीयस्त्रीषूत्पादितानां जातीनां नामा-न्याह मनुर्यथा—

व्रात्यात् तु जायते विप्रात् पापात्मा भुर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पधः शैख एव च ॥
झल्लो मल्लश्च राजन्याद् व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥

वैश्यात् तु जायते व्रात्यात् सुधन्वाचार्य एव च ।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥ इत्यादि ।

भुर्जकण्टकावन्त्यादयस्तथा भल्ल-मल्लादयश्च एकैकस्या एव जातेर्नाम देशभेदाद् भिन्नमिति मन्तव्यम् । जात्यन्तरनामान्याह स एव यथा—

प्रसाधनोपचारज्ञमदासं दासजीवनम् ।
सौरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥

अत्रादासमिति उच्छिष्टभक्षणादिदासकर्मरहितम् । दासजीवनमिति अङ्गसंवाहनादिदासकर्मजीवनम् । वागुरावृत्तिमिति पाशबन्धनेन मृगादि-वधरूपवृत्त्यन्तरजीवनम् । दस्युरिति । तत्स्वरूपमाह मनुरेव यथा—

मुख-बाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥

इति बहिर्बाह्याः, क्रियालोपादिनेत्यर्थः । तथा—

मैत्रेयकन्तु वैदेहो माधुकं सम्प्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥

माधुकं मधुरभाषिणम् ।

निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।
कैवर्त्तमिति यं प्राहुरार्यावर्त्तनिवासिनः ॥

अपरमप्याह—

कारावरो निषादात्तु चर्मकारः प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥
चण्डालात् पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥

सर्वत्र वैदेह्यामिति सम्बन्धः । त्वक्सारव्यवहारवानिति वंशक्रय-विक्रयादिना तदुत्पन्नकटादिकरणेन वा जीवतीत्यर्थः । समानमातापितृ-कत्वेऽपि कारावराहिण्डिकयोर्वृत्तिभेदात् संज्ञाभेदः । एवञ्च—

चाण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् ।
पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥

इति । मूलव्यसनवृत्तिमानिति—राजनिदेशाद् वध्यमारणं तद्वस्त्रादि-ग्रहणं प्रेतपिण्डभोजनादिकमित्येतद्वृत्तियुक्त इत्यर्थः ।

निषादस्त्री तु चण्डालात् पुत्रमन्त्यवसायिनम् ।
श्मशानगोचरं सूते वाह्यानामपि गर्हितम् ॥ इत्यादि ।

एषां प्रतिलोमसङ्कराणामानन्त्यात् सर्वेषां नामकरणासम्भवेनाह मनुः, यथा

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ इति ।

क्षत्रियादिवर्णानामनुलोमजातसङ्कराणाञ्च तपस्यायोनिसम्बन्धादिवशाद् युगमाहात्म्याच्चोत्कर्षापकर्षौ भवत इत्येतदाह मनुर्यथा—

तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः ॥ इति ।

अत्र विश्वामित्रर्ष्यशृङ्गादयो यथोदाहरणं ज्ञेयाः । एतदेव विशदयति यथा—

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम् ।
क्षत्रियाज्जातमेवन्तु विद्याद् वैश्यात् तथैव च ॥ इति ।

शूद्रस्य ब्राह्मणत्वप्राप्तिप्रकारमाह यथा—

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत् प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद् युगात् ॥ इति ।

अस्यायमर्थः—शूद्रा ब्राह्मणेनोढा यदि कन्यां सूते, सापि कन्या यदि ब्राह्मणेनोढा कन्यां सूते, सा चान्येन ब्राह्मणेनोढा दुहितरमेव जनयति' इत्येवं सप्तमे जन्मनि ब्राह्मणेनोढायां जातः पारशवोऽपि ब्राह्मणत्वं लभते, बीजप्राधान्यादिति । एवञ्च ब्राह्मणेनोढा शूद्रा पारशवं पुत्रं सूते । स यदि शूद्रकन्यायां पुत्रमुत्पादयति सोऽपि शूद्रकन्यायां पुत्रमित्येवं सप्तमे

जन्मन्युत्पन्नः शूद्र एव भवति, क्षेत्रदोषादिति। एतदेव स्पष्टत आह याज्ञवल्क्यो यथा—

जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥ इति।

अत्र मिताक्षरा यथा—जातयो मूर्द्धाभिषिक्ताद्याः तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिः जात्युत्कर्षः। युगे जन्मनि सप्तमे पञ्चमे अपिशब्दात् षष्ठेऽपि बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च ब्राह्मणेन शूद्रायामुत्पादिता निषादी। सा ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति साऽपि ब्राह्मणेनोढाऽन्यां जनयतीत्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा। साप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति। मूर्द्धाभिषिक्ताऽप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति। एवमुग्रा क्षत्रियेणोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं वा क्षत्रियं जनयति। यथा करणी वैश्येनोढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयमिति"।

स्वस्वजात्युक्तकर्मणां व्यत्ययेऽपि हीनजातिसाम्यं दर्शयति, तद् यथा—आपद्विमोक्षेऽपि ब्राह्मणः शूद्रवृत्त्या जीवन् तामपरित्यजन् यदि पुत्रमुत्पादयति, सोऽपि तयैव वृत्त्या जीवन् पुत्रान्तरमित्येवं परम्परया सप्तमे जन्मनि शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्, क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम्। क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्, वैश्यवृत्त्या जीवन् पञ्चमे वैश्यम्; वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन् पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयतीति। एतदेवाह पूर्ववच्चाधरोत्तरमिति। अधराः प्रतिलोमजाः, उत्तरे अनुलोमजाः। एतदधरोत्तरं पूर्ववत्

( क्रमशः )

# अर्भकविलसितम्

[ निबन्धकः—आर्-रङ्गाचार्यः शिरोमणिः ]

संमोदस्फुरिताः कचिद्गुरुकुले सख्या कचित्सोल्लसाः
संभ्रान्ताः कचिदद्भुताः कचिदतिस्निग्धा व्रजस्त्रीजने ।
क्रूरा दुष्टदनूद्भवस्य दमने स्मेराः शिशुक्रन्दने
सञ्चारीरुदिते भृशं तरलिताः काश्चिद्दृशः पान्तु नः ॥

विजया । अस्या वयः सप्त । चन्द्रः । अस्य तु पञ्च । विजया वर्षद्वयात्पूर्वमेव विद्यागृहं गन्तुमुपक्रान्ता । चन्द्रः सांप्रतमेव । विजया शणमयीं भस्त्रिकां स्थूलकागदनिर्मितां लघुवहां पेटिकां च प्रत्यहं विद्यागृहं नयति । भस्त्रिकायां पुस्तकानि शिलाफलकञ्च निदधाति । पेटिकायास्तु जयप्राणोपक्रमं ( Japanese ) सृष्टिः । तत्पिधानञ्च विविधैः स्पृहणीयै-श्चित्रैरलंकृतम् । चित्रं च विटपे गरुतौ वितत्य निषण्णस्य कस्यचिदल्पस्य पक्षिणो रूपं सम्यग् विडम्बयति । पेटिकायामसौ बालिकाजनसाधारणानि सर्वस्वानि निदधाति । कानि ? विविधवर्णयुताः संलापिप्रेक्षणकस्य प्रकटन-पत्रिकाखण्डाः ( Talkie notices ) कूर्चिकाशकलानि ( plete pencils ) अंगुलाष्टमांशप्रभृति सार्धाङ्गुलमितानि, घर्षकखण्डाः, ( Rubber pieces) अंगुलित्राणं, तान्तवानि अल्पानि शकलानि अन्यानि कन्थाशतानि च यानि तुन्नवायापणस्य पुरतः स्थण्डिले विकीर्णानि सायं विद्यागृहाद् निवर्तमानया स्वयमुद्धृतानि ।

चन्द्रस्तु बालकजनसाधारणान् निधीन् स्वकीयकञ्चुककोषे भद्रं निक्षिपति ।

एतावर्भकौ न जात्वपृथग्भूतौ । तथापि नैकमपि क्षणं विना कलहं स्तः । सदा यावज्जीवं मिथो नैव संभाषणं कुर्यावेति सशपथं प्रतिज्ञां कुरुतः ।

एतयोश्च बालजनलोके प्रातिस्विकाः स्वीयाः सामूहिकाः मनोरथाः अन्यानि अभिलषितशतानि कानिचन क्षणभङ्गुराणि अन्यानि मुहूर्तस्थायीनि, कानिचिद्विफलानि, कदाचित्सफलानि, इति कति कति विधाः संभवन्ति क्षणादपगच्छन्ति च। तयोर्मोदस्य वा खेदस्य वा अभिमानस्य वा अहङ्कारस्य वा न हि नाम नाल्पा हेतवः संभवन्ति। नियतं तदीया आशा आशयविशेषाश्च अस्मदीयेभ्यः शतगुणं गरीयांसः।

विजया तु पूर्वमेव किञ्चन तन्त्रं शिक्षितवती। तच्च एकाङ्गुलिपर्वणि स्थितस्य लाञ्छनस्य पर्वान्तरनयनमेव। "पश्य पश्य, मम प्रथमाङ्गुलि-पर्वणि लाञ्छनमिदमस्ति। इदमिदानीं द्वितीयाङ्गुलौ दृश्यते। किं न हि? किमहमिदानीमिदं प्रथमाङ्गुलिपर्व प्रापयाणि? एकम्। द्वे। त्रीणि। संप्रति पश्य। इदमधुना प्रथमं प्राप्नोत्"। एवं विजया आत्मानं चन्द्र-श्वासकृद्विनोदयन्ती नन्दति। चन्द्रस्तु विस्मयस्तिमिताक्षस्तं विनोदं पश्यतिस्म। असौ च बहुकृत्वस्तां विद्यां हस्तेकर्तु प्रययास। किन्तु न फलायाकल्पत। विजयामनुनिनाय। तां विद्यामात्मने बोधयितु बहुधा ययाचे। बहूनि चाटूनि प्रयुयुजे। नेम उपायाः फलेग्रहयो बभूवुः। तदा चन्द्रः "तिष्ठ तिष्ठ, श्वो भूते अम्बा बहूनि भक्ष्याणि करिष्यति। बहु मे दास्यति। अहं भक्षयिष्यामि। तदानीमागत्य मां तानि याचस्व। तदा पश्य। पश्य। किमीषदपि ते ददामी"ति भीषयति स्म। विजया तु नैवास्य वचांसि स्तोकमपि कर्णे चकार। निष्ठुरं निर्दयश्च तं प्रत्या-चख्यौ। न केवलं तावत्। किन्तु तस्य कोपासूयादिकं यथा समधिकं भवेत् तथा तस्य पुरतः स्वविद्याकौशलं मुहुर्मुहुरावर्तयन्ती ननर्त। अस्मा-कीनो दीनश्चन्द्रस्तु तद् नैष्ठुर्यं तादृशं निर्दयत्वं च सोढुं नेषदपि चक्षमे। किं क्रियताम्। महानिव कोपः समुदियाय। स सपदि उत्तस्थौ। किमपि कर्तुमनीशः सहसा मामुपाजगाम। "तात! तात! विजया काञ्चन लाञ्छनविद्यां जानाति। सा प्राग्वं प्रार्थितापि न मां तामुप-दिशति! तां ब्रूहि तात! तां विद्यां चन्द्रमुपदिशेति" इति मां प्रार्थयन्निर-

बध्नात् ।" अहमपि विजयामाहूयेनमुपदिशेत्यबोधम् । सा तु कपटं हसन्ती मामपि आश्चर्यमग्नमापादयितुकामा स्वविद्याकौशलं सकृत्प्रकाश्य नाहं कमप्युपदिशेयमिति वदन्ती अन्तर्गृहमधावत् । तत्रापि स्वविद्यामद-मप्रकाश्य स्थातुमक्षमा तत्र व्यापृतां मातामहीमाजुहाव । सा तु गृहमार्जन-कर्मणा प्रसितासीत् । तादृशीं तां सहसा निरुध्य "पाटि ! पाटि' ! अपि जानीषे श्वेतमेतल्लाञ्छनमस्माद् अंगुलिपर्वणः पर्वान्तरं नेतुम् ? नो । नैव जानासि । नापि शक्नोषि । पश्येदानीम् किमहं करोमि तथा न वेति" । इत्युक्त्वा झटिति, एकम्, द्वे, त्रीणि, "पश्येदानीं" तत् प्रथमपर्वणि वर्तते । एकम्, द्वे, त्रीणि, अधुना द्वितीयं प्राप्तमासीत् । किं न हि । एकम्, द्वे, त्रीणि, तत् पुनरपि यथापुर्वं प्रथममायातम् । "किं पाटि' ! अपि त्वं शक्नोषि तथा कर्तुम्" इति पृच्छन्ती नर्तनपरासीत् ।

पाटी । "वत्से ! कथमहं तत्कर्तुं शक्नुयाम् । किमहं त्वमिव बाल्ये विद्यागृहं गतवती विद्यां वा अभ्यस्तवती ।" इत्युक्त्वा स्वकर्मपरा बभूव । विजया दुर्वारविद्यागर्वेण न कुत्रापि क्षणमपि स्थातुमीष्टेस्म ।

चन्द्रो दिनद्वयमिव नैव सुमनायतेस्म । न केनापि समं समभाषत । महद्दिवास्वास्थ्यम् । नैकस्मिन्नपि विषये पाणिपादं प्रासरत् । न कस्मिन्नपि वस्तुनि अभिरुचिः, विना तां लाञ्छनविद्यां नान्यत् स्मर्तुमपि शशाक । तत्रैव मनो दृढलग्नमासीत् । न किमपि बुद्धौ प्रत्यभात् । तद्विद्यामर्म विज्ञातुं बहुधा प्रायतत । बालान् बालिका अन्यांश्च सवयस्थान् तां विद्यामात्मने बोधयितुमन्वनेष्ट । न कोऽपि तां बोधयितुमीशांबभूव । किं क्रियताम् । पुनरपि सकृदिव प्रायस्यत् । अहो ! द्वितीयस्मिन् दिने सायं हरिणप्लुतेन गृहान्तरमधावत् । महानुत्साहः । अन्यादृशः कोला-हलः । पुरतोऽधावत् । पश्चादधावत् । हा ! तदीयं तादात्विकं कुतू-हलातिरेकमधिकृत्य किं वयं ब्रूमहे । वैदेह्या प्रेषितस्य चूडामणेर्दर्शनेन श्रीभगवतो रामभद्रस्य यादृशः सन्तोषस्ततोऽपि शतगुणं गरीयानस्या-भासीत् । न क्षणमपि वृथा यापनीयो बभौ । महती त्वरा । शीर्षण्य-

माददे। फलकोपरि निदधौ। पुस्तकानि जग्राह। दूरतश्चिक्षेप। कञ्चुकं मोक्तुमपि नावकाशः। नेच्छा काफीपाने। कुत्र गता विजया। अम्ब! तस्याः प्रतिवचनं श्रोतुमपि त्वरातिशयो नैव तमनुमेने। अम्ब! पश्य! पश्य। तामहं जानामि लाञ्छनविद्याम्। कीदृशं मामवबुध्यसे। इतः पश्य। इति सकृत् तां विद्यां मात्रे प्रकाश्य तस्याः प्रशंसावचनमप्य-विगणयन् विजयामन्विष्यान्विष्येतस्ततो दधाव। पुरतो ददर्श। पश्चाद् ददर्श। ऊर्ध्वमवालुलोके। अधोभौममुपजगाम। न कुत्रापि सा ददृशे। किं कुर्मः। कुत्र गता सा भवेत् इति क्षणं निदध्यौ। पश्चादङ्गनं प्राविशत्। हा!! हा!! ततो दृश्यतेऽसौ! ततो वर्तते! प्रियम्। प्रियम्। हे! विजये! विजये! पश्य। पश्य। भवतु। भवतु। न त्वं मह्यं लाञ्छनविद्यामुपदिशेः। भवतु। विना तव दयां सा मम दुर्ज्ञेयेत्यमंस्थाः। संप्रति पश्य। अधुना सा मया ज्ञाता वा नेति। एवमभिधाय तस्याः पुरतो विंशतिकृत्वस्तां विद्यां प्रकाश्य प्रकाश्य यावत् सा लज्जिता भवेत् तां तावदावर्तयामास।

विजया। अङ्ग चन्द्र, नेदमाख्येयमन्यस्मै। भद्रं रक्ष तावत्। समये प्राप्ते अनया अन्यान् विनोदयामः। विस्मितान् तानारचयामः। माऽन्यो बुध्यतामिति समुपादिशत्। नियतमिदं विस्मयकरं यदिमौ झटिति कलहायेते। क्षणादिव महता सुहृद्भावेन स्पृहणीयगुणौ भवत इति यदस्य रहस्यं तत् स भगवानेव वेद।

रात्रिः। महताप्रणयेन विस्रब्धं संलपन्तौ शय्यां प्रविशतः। तदा कियानिव हर्षोन्मेषः। कियदिव मिथो वात्सल्यम्। कानि कानि मधुराणि मृदूनि च वचांसि। एवं केचन निमेषाः सुखं व्यतियन्ति। सपद्येव शय्यागतश्चन्द्रः समुत्थाय मातरमुपगत्य उच्चैः शब्दायते। मातः! पश्य। किमिति विजया मदीयमुपधानमपहरति।

(क्रमशः)

Reg. No. C. 1073

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

September, 1937. | १८५९-शकीये भाद्रे २०श-वर्षस्य ५म-संख्या | Vol. XX, No. 5

## अर्थशास्त्रस्य पुरातनी सांप्रतिकी च दशा

स्वाम्यमात्य-राष्ट्र-दुर्ग-कोश-बल-सुहृद्भिस्सप्तभिरङ्गैः परस्परोपकारिभी राज्यं नाम परिपूर्यते । तत्र स्वामी, अमात्यम्, राष्ट्रम्, दुर्गम्, कोशः, सेना च प्रसिद्धानि । सुहृदस्तु—

"नृपस्य ते हि सुहृदस्त एव गुरवो मताः ।
य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥
सज्जमानमपार्थेषु सुहृदो वारयन्ति ये ।
सत्यं तेनैव सुहृदो गुरवो गुरवो हि ते ॥"

इति वचनात् सन्मार्गोपदेष्टारः सर्व एव । तेषां संग्रहस्य प्रयोजनम्—

"धर्मार्थकामसंयोगो मित्राणां त्रिविधं फलम् ।
यस्मादेतत्त्रयं न स्याद् न तत्सेवेत पण्डितः ॥"

इति तु त्रिवर्गसंग्रह एव । सति चैवम् अर्थस्य, अर्थकामयोरेव वा संग्रहेण धर्मं विरुन्धाना न राज्ञः सुहृदो नाम । एषु सुहृत्सु—न केवलं पुरोहितादयो दण्डनीति-शान्तिक-पौष्टिककर्मादिकुशलाः, ज्योतिःशास्त्रार्थादि-कुशला वा, किन्तु—

"राग-मान-मदान्धस्य स्खलतः शत्रुसंकटे ।
हस्तावलम्बो भवति सुहृत्सचिवचेष्टितम् ॥"

इति वचनाद् अमात्योऽपि सुहृदेव । अमात्यस्यापि हि—

"निरुन्धानास्सतां मार्गं भक्षयन्ति महीपतिम् ।
दुष्टात्मानस्तु सचिवास्तस्मात्सुसचिवो भवेत् ॥"

इत्यसन्मार्गतो निरोधनमन्यतमं कृत्यम् । न केवलं मन्त्रि-पुरोहितादयः, किन्त्वनुजीविनाऽपि च राज्ञः—

"पानस्त्रीद्यूतगोष्ठीषु राजानमभितश्चराः ।
बोधयेयुः प्रमाद्यन्तमुपायैर्नाडिकादिभिः ॥
राजानं येऽप्युपेक्षन्ते सज्जमानं विकर्मसु ।
ते गच्छन्त्यकृतात्मानः सह तेन पराभवम् ॥"

इत्युक्तरीत्याऽसन्मार्गतो निरुन्धाना एव तत्तत्पदमर्हन्ति । स्वामिनः कृत्यानि तु—

"अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥
स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम् ।
तस्याभावे तु लोकोऽयं संकराद् नाशमाप्नुयात् ॥"
"सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः ।
तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥
वर्णाश्रमाचारयुक्तो वर्णाश्रमविभागवित् ।
पाता वर्णाश्रमाणां च पार्थिवः सर्वलोकभाक् ॥
लोकशास्त्रानुगो नेयो दण्डो नोद्वेजनः श्रिये ।
उद्वेजनादधर्मस्तु तस्माद् भ्रंशो महीपतेः"

इति वचनैस्तत्तद्वर्णाश्रमधर्मरक्षणादीनि, दुर्गकोशादिरक्षा च, इति मन्त्रिपुरोहितादीनामधर्ममार्गतो निरोधनमपि राज्यरक्षार्थमेव ।

"शस्याकरवती पण्य-खनिद्रव्य-समन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥
रम्या सकुञ्जरवना वारिस्थलपथानुगा ।
अदेवमातृका चेति शस्यते भूर्विभूतये ॥
सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः ।
नानादेश्यैस्समाकीर्णो धार्मिकः पशुमान् धनी ॥
ईदृग्जनपदः शस्तोऽमूर्ख्यव्यसनात्मकः ।
तं वर्धयेत् प्रयत्नेन तस्मात् सर्वं प्रवर्धते ॥"

इति राष्ट्रमपि गोरक्षादियोग्यं धार्मिकजनसमाकुलमेवापेक्षितमिति प्रतिपादयति। एतेन दुर्गमपि व्याख्यातम्। तदपि—

"प्रशस्तं शास्त्रमतिभिर्दुर्गं दुर्गोपचिन्तकैः।"

इति शास्त्रदृष्ट्यैव संग्रहीतव्यम्, न तु स्वेच्छया ।

कोशोऽपि—

"मुक्ता-कनक-रत्नादिः पितृ-पैतामहोचितः ।
धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः ॥
धर्महेतोस्तथाऽर्थाय भृत्यानां भरणाय च ।
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा ॥"

इति धर्मरक्षाप्रयोजन एव राज्याङ्गमिति प्रतीमः। अस्मिन् प्रसङ्गे :—

"आददीत धनं काले त्रिवर्गपरिशुद्धये ।
यथा गौः पाल्यते काले दुह्यते च तथा प्रजा ॥
सिच्यते चीयते चापि लता पुष्पफलार्थिना ।
संवर्धयेत् तथा कोशमाप्तैस्तज्ज्ञैरधिष्ठितम् ॥
काले चास्य व्ययं कुर्यात् त्रिवर्गपरिशुद्धये ।
धर्मार्थं क्षीणकोशस्य कृशत्वमपि शोभते ॥"

इत्यादि वचनान्यप्यनुसन्धेयानि। कोशकार्येषु—

"सेतुबन्ध-वणिक्कर्म-प्रजामित्रपरिग्रहः ।
धर्मार्थकामसिद्धिश्च कोशादेतत् प्रजायते ॥"

इत्युक्तेषु धर्मवृद्धिरप्येकेति विशदमेव ।

"पुरोहितामात्यकुमारकल्याः सेनाभिगोप्तार इमे प्रधानाः ॥"

इति सेनापतित्वस्य पुरोहितादिष्वेव व्यवस्थानात् सेनापि धर्माभिमुख्येव राज्ञा रक्षणीयेति गम्यते । सति चैवं सप्ताङ्गमपि राज्यं धर्माभिमुखमेव श्रेयसे स्यात्, न त्वधर्माभिमुखम् ।

राष्ट्रं हि बाह्याभ्यन्तरभेदेन द्विविधम्, तत्र बाह्यं सर्वमपि मण्डलम्, आन्तरं तु राज्ञः स्वशरीरमेव । तदुक्तम्—

"आभ्यन्तरं शरीरं स्वं बाह्यं राष्ट्रमुदाहृतम् ।
अन्योन्याधारसम्बन्धादेकमेवेदमिष्यते ॥
राष्ट्राङ्गानां तु सर्वेषां राष्ट्राद्भवति संभवः ।
तस्मात् सर्वप्रयत्नेन राजा राष्ट्रं प्रसाधयेत् ॥"

इति । सति चैवम्—

"लोकानुग्रहमन्विच्छन् शरीरमनुपालयेत् ।
राज्ञः संशरणं धाम शरीरं धर्मसाधनम् ॥
धर्म्यामारेभिरे हिंसामविकल्पा महीभुजः ।
तस्मादसाधून् पापिष्ठान् निघ्नन् पापैर्न लिप्यते ॥
धर्मसंरक्षणपरो धर्मेणार्थं विवर्धयन् ।
ये ये प्रजाः प्रबाधेरन् तांश्छिन्द्याच्च महीपतिः ॥
यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥
धर्माधर्मौ विजानन् हि शासनेऽभिरतः सताम् ।
प्रजां रक्षेन्नृपः साधु हन्याच्च परिपन्थिनः ॥"

इत्युक्तप्रकारेण धर्मेण राज्यपरिपालनेन स्वशरीरस्य परिपालनम्, स्वशरीरस्य तु स्थूलस्य धर्मतो रक्षणेन स्वान्तरलिङ्गशरीरमपि धार्मिक-

भावाक्रान्तं परस्वरूपानुसन्धानपरं सत् स्वात्मनोऽपि मुक्तये पर्यवसिष्यति, "राजा कालस्य कारणमि"ति वाक्यमर्थशास्त्रगतम्, स्वस्य राज्यस्य सुखोदर्काया विपदुदर्काया वा परिस्थितेः कारणं राजैव स्वयम्, न त्वमात्यादयोऽपि। सचिवादयस्तु राज्ञः सर्वार्थकारित्वात् स्वीयानां कर्मणां फलं राजेव नोपभुञ्जते ; ते हि स्वकर्मणः फलं वेतनमात्रमुपभुञ्जते ; कालपरिणामस्तु न तदधीनः। तथाच स्वयमुत्पथं गच्छन्, राजा न केवलं कर्तृतया, किन्तु प्रयोजकतयाऽनुमन्तृतया चाधर्मफलं प्राप्नोति परलोके, इह तु स्वकोशस्य राज्यस्य स्वपुत्रादेश्च दुष्परिणामेन महतीं विपत्तिम्। सति चैवं सचिवोत्तमा अपि केचन "राजा कालस्य कारणमि"ति वाक्यमर्थशास्त्रगतमवलम्ब्य राज्ञो धर्माधर्मपरिवर्तनेऽप्यधिकार इति यद् व्याचक्षते, तेन विश्वसिमः—ते राज्ञ एवेदं फलं सुखं विपत्तिर्वा भविष्यति, न तु स्वस्येति सूचनेन स्वात्मरक्षणप्रकारपथमपि विशदयन्ति। अर्थशास्त्राणि हि सर्वाण्युपलभ्यमानानि धर्माधर्मपरवशत्वमेव राज्ञः परमं कृत्यम्, न तु तद्विरोधेन राज्यकरणमित्यैकमत्येन गोचरयन्ति।

अशोकादयस्तु स्वयं बौद्धमतावलम्बिन आसन्, इति स्वसूक्ष्मस्थूलशरीररक्षणोपाया धर्मा एव राष्ट्ररक्षणस्याप्युपाया भवितुमर्हन्ति, भगवान् अवतारपुरुषो बौद्ध एव गुरुरिति भावनया गुरुवाक्यार्थविश्वासेन साध्वसाधु वा बौद्धमतमेव प्रचारयामासुः। माहम्मदा अपि बहवो राजानोऽनेनैव भावेन स्वमतस्यैव सर्वत्र प्रचारार्थं प्रायतन्त। ख्रीस्तवमतानुयायिनोऽपि यथाशक्ति स्वमतस्यैव सर्वत्र प्रचारार्थं बहु श्राम्यन्ति स्म, सुगूढं कथंचनौदासीन्यावलम्बनेनैवेदानीमपि तदर्थं प्रोत्साहयन्त्येव। जानपदसभास्तारास्तु सांप्रतिक्या राजनीतेरार्थिकपरिस्थितिमात्रेण प्रथममसन्तुष्टा धार्मिकपरिस्थितिं तत्तत्प्रजाधीनामेव स्वगूढलक्ष्यं मन्वानाः कथंचनोन्नतां दशां प्राप्नुवन् स्वपरिश्रमसाफल्यप्राप्त्या। भारतवर्षं हि बहोः कालाद् बहुभिरेव भिन्नमतैः परिपाल्यमानमप्यशोकादितः पूर्वमेकेनैव वैदिकमतेन प्रवर्धमानमासीत्, यत्तु मतं वर्णाश्रमधर्मानुसारीति सर्वेषामर्थशास्त्रनिबन्धानां दर्शने-

नावगम्यते। सति चैवमशोकादिभिरन्यथाऽन्यथा प्रवर्तितेऽपि, अद्य यावद् वर्णाश्रमधर्मानुसारिमतस्य भारतीयेषु बहुषु समन्वारम्भाद् न तेषां प्रयतनं कृतकृत्यमभवत्। एवमेव माहम्मदानां क्रैस्तवानां च प्रयतनमसफलं समापद्यत। सति चैवमर्थशास्त्रस्य धर्मशास्त्रस्य च सम्बन्धो बहुकालं यावत्, तदैवासीत्, यदा वर्णाश्रमधर्माभिमान्येव राजासीत्, वर्णाश्रमधर्मानुसारिण एव मतस्य सर्वत्र भारते प्रचारश्चासीत्। भिन्नभिन्ननूतनधर्माभिमानिनां राज्याधिकारप्राप्त्यनन्तरं तु प्रथमं तेषु कैश्चन वर्णाश्रमधर्मानुसारिमते हस्तो नाक्षेपि, केचन तु क्षिपन्तोऽपि हस्तं तत्र विफलमनोरथाः समपद्यन्त। ततश्चार्थशास्त्रस्य धर्मशास्त्रस्य चापृथक्सिद्धोऽपि सम्बन्धः सुदूरमेवागमत्। सांप्रतमपि भिन्नभिन्नमतावलम्बिनां बहूनां प्रधानानां भारतवर्षाभिजननेन भारतवर्षीयत्वाभिमानो दृढमूलो वर्तते, इति न वयं मनोरथयितुमप्यर्हामः—

यद् धर्मशास्त्रार्थशास्त्रयो राजकीयनीतौ सम्बन्धरक्षणेन वर्णाश्रमधर्ममात्रस्य सर्वत्र प्रचारव्यवस्थापनेन राज्यकार्यं निर्वोढुं शक्यत इति, यद्यपि कदाचन वर्णाश्रमस्वराज्यसंघाधिष्ठातारः, तत्प्रधानमन्त्रिणः, पृष्ठपोषकाः, तन्नेतारः, त्यागमूर्तयः, धर्मप्राणाः, महामहोपाध्यायाः, महामहोपदेशकाः, वणिक्प्रवराः, पण्डितराजाः, वर्णाश्रमधर्माचार्यपुरुषास्तत्सहकारिण एव वा राज्यकार्यनिर्वाहभारेऽभिषिच्येरन्। तेऽपि धर्मार्थशास्त्रयोरसम्बन्धव्यवस्थापनेन फलतो राजनीतिक्षेत्रे सांप्रतं धार्मिकविचाराणामवसराप्रदानेनैव राज्यकार्यं निर्वोढुमर्हन्ति। सुधारकास्तु केचन राजनीतिक्षेत्रे धर्मविचारस्य न स्थानलेशोऽपीत्येव मन्यन्ते। जानपदसभास्तारा अपि स्वलक्ष्यं किञ्चन मत्वाऽद्य यावद् वर्णाश्रमधर्मे हस्तक्षेपमिव यत् कुर्वाणा आसन, तत्र सांप्रतं राज्यशासनाधिकारं स्वाधीनं प्राप्य न तथा सोत्साहा इव दृश्यन्ते। युक्तप्रान्तीयप्रधानमन्त्रिणो हि श्रीमन्तः पन्तमहोदया जनपदसभाप्रतिनिधयो जानपदसभासभापतीनामिदानीन्तनानां जन्मभूमौ स्वीयशासनप्रणालीसमुद्घोषावसरे—"सर्वेषां स्वस्वाभि-

मतानुसारेण स्वस्वधर्मविषये स्वान्तःकरणसाक्ष्येणावस्थाने स्वातन्त्र्यं दास्यते" इति वदन्ति। कुत इदं द्रागित्येव जानपदसभाप्रतिनिधीनामपि परावर्तनम्, विश्वसिमः—राजनीतिक्षेत्रे महति क्षुद्रस्यास्य विषयस्य वैयक्तिकाधिकारस्यावकाशदानं नापेक्षितमिति सांप्रतं जानपदसभास्ताराणामेवात्र निगूढं रक्षितं भावं सांप्रतमाविरकुर्वन्—इदानीं वर्णाश्रमाभिमानिनामप्यसन्तोषो मा भवत्विति। वर्णाश्रमधर्माभिमानिनो हि जानपदसभास्ताराणां दृष्ट्या शते द्वित्रांशा एवेति सर्व एवेदं विजानन्ति। जानपदसभा तु स्वल्पसंख्यासंख्येयानां रक्षणम्, तेषां स्वातन्त्र्यरक्षणं च स्वकर्तव्येषु प्रधानतमं मन्यते, इति प्रतीमः—युक्तमिदमाचरन् श्रीमन्तो मन्त्रिप्रवराः पन्तमहोदया युक्तप्रान्तीयाः॥

अस्यां चावस्थायां धर्मशास्त्रं कथंचन रक्षितमिति सन्तोषो वर्णाश्रमस्वाराज्यसंघस्यान्यस्य वा समाजस्य कथंचन भवेदेवेति विश्वसिमः। श्रीमतां पन्तमहोदयानां शासनप्रणालीं प्रान्तान्तरप्रधानमन्त्रिणोऽपि नचिरादेव प्रकाशयिष्यन्ति। सत्यप्येवमेकां विपत्तिं परिहरतोऽन्या विपत्तिस्तु महती समापतिता कथं वा दूरं गमिष्यतीति न जानीमः। इयं हि अर्थशास्त्रस्यैव परमलक्ष्यस्य हृदयमाहन्ति, यद् राज्यशासनपदं जानपदसभास्ताराणामेव हस्ते, नान्येषाम्, अथवाऽन्येषामेव हस्ते न जानपदसभास्ताराणामिति द्वैविध्यप्रथा सर्वत्र प्रथते। इयं तु सर्वेषां जानपदसभाप्रवेशेन वा परिहर्तव्या, अथवा जानपदसभया मन्त्रिपदं राज्यशासनकार्यं वा सर्वेषामेव, न तु जानपदसभास्ताराणामेवेति भावेन मन्त्रिपदस्य, शासने स्वप्राधान्यस्य वा परित्यागेन। अन्यतरस्याप्यसंभवे तु—मार्जारापूपविवादे मर्कटमाध्यस्थ्यमेव समापतेत्। विश्वसिमः—भगवान् धर्मशास्त्रस्येवार्थशास्त्रस्यापि दुर्गतिं सांप्रतिकीमचिरेण सुदूरं नयेत, येन—

"पाल्यमानास्तथाऽन्योऽन्यं नरास्सर्वे च भारत।
लोभं परमुपाजग्मुस्ततस्तान् काम आविशत्॥

क्रोधो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ।
ते क्रोधवशमापन्ना वाच्यावाच्यं न मेनिरे ॥"

इति परिस्थितिर्नावकाशेत । साम्प्रतमपि जानपदसभास्तारा मन्त्रिपदं प्राप्नुवन् पारितोषिकरूपेण, पारिश्रमिकात्मना वेति भावः कल्पना वा केषांचन विषमिव सर्वत्र मनोवेगेन प्रसरति, नेतारस्तु प्रधानतमा उत्तरयन्ति पर्यनुयोगमिमम्, नायं भावः कल्पना वा सांप्रतमिति । स्वपक्षेण समाधानार्थं महात्मनां प्रयतनापेक्षया जनतापक्षेण, विशिष्य प्रष्टॄणामेव पक्षेण समाधानमेव वरम् । विश्वसिमः—पर्यनुयोक्तार इमे कार्यदर्शनेनैव स्वयं समाधास्यन्ति, न तु मधुरमधुरेण वचनमात्रेण । कार्यप्रणाली तु सांप्रतिकी जानपदसभापक्षः, पक्षान्तरश्चेति विभागेन परिपाल्यमाना, जानपदसभास्ताराणामेवाधिक्यम्, तदितरेषामेव वाधिक्यमित्यधिकपक्षप्राबल्येन न्यूनसंख्यदौर्बल्येन च प्रबलैर्दुर्बलानां नियन्त्रणेनैव संचिकीर्षिता जानपदसभास्ताराणां न्यूनसंख्यप्राबल्यरक्षणनीतिविरुद्धा, पक्षान्तरानुसारिणां मतान्तराक्रमणपर्यवसायिनी वा स्यादिति बिभिमः ।

इदमत्र प्रमोदस्थानम्—यद् जानपदसभास्तारास्तन्नेतारश्च कस्मिश्चन प्रान्तेऽन्तत एकत्र पक्षभेदमिमं परिहाय पक्षद्वयावलम्बिभिस्साकमेव, प्रबलतायामपि स्वपक्षस्य, मन्त्रिपदस्य शासनप्रणाल्याश्चोरीकरणेन कार्यक्षेत्रे प्रावर्तन्तेति । स्वमतप्रवेशो हि मतान्तरावलम्बिनां स्वेच्छाधीन एव कार्यकारी, न तु लोभवशेन बलात्कारेण वा, स तु प्रत्युत विपरीतकारी स्यादिति बहुशः सर्वत्र कार्यक्षेत्रेषु सर्व एवापरोक्षयन्ति । अत इदमाशास्यतेऽन्ततो गत्वा जानपदसभास्ताराः—ये खलु, स्वार्थत्यागः, दुःसहदुःखस्यापि सहनम्, अहिंसाप्रधानकार्यप्रणालीसमादरणम्, न्यूनसंख्यानामप्यान्तरदुःखप्रशमनम्, मतान्तरानाक्रमणम्, समभावेन जाति-कुल-देशभेदभावनां विना राज्यशासनप्रणालीव्यवस्थापनं च स्वलक्ष्यं मन्वते, ते—स्वकर्तव्येषु विशिष्य सांप्रतं स्वां दूरदर्शिताशक्तिं विनियोक्ष्यन्तीति ।

---

# उपदेशपरम्परा

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटि-पीठाधीशानाम् ]

( ३ )

## मनुष्यधर्मः

लोके विद्यमाना जीवाः प्राणिन इति कथ्यन्ते। प्राणवन्तः प्राणिनो नाम। प्राणो नाम निश्वासः। ततश्च निश्वसन्तः सर्व एव प्राणिन इति कथ्यन्ते। सर्वेऽपि प्राणिनः सर्वदा कर्माणि कानिचन कुर्वन्त एव वर्तन्ते। प्रतिप्राणि सदा यत्किमपि कर्म कुर्वदेव वर्तते। पिपीलिका सदा सर्पन्त्येव वर्तते। कुलीरो यत्किमपि कुर्वन्नेव वर्तते। पक्षिणो डयमाना वाऽऽहरन्तो वा वर्तन्ते। मनुष्यः कार्यालयं गत्वा कर्म करोति, अथवा लाङ्गलेन भूमिं कर्षं कर्षं बीजान्यावपति, एतादृशान्येवापराणि वा बहूनि कर्माणि कुर्वन्नेव वर्तते। नहि कश्चिदपि कर्माकुर्वाणस्तिष्ठति। इदमेव गीतायां भगवान अवदत्—"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।" नैकोऽपि मनुष्यः कस्मिन्नपि क्षणे किमपि कर्माकुर्वाणस्तिष्ठतीत्येवास्य तात्पर्यम्। एवं मनुष्यं सदा कर्माणि कुर्वाणमेव संसारे वयं पश्यामः। क्षुद्रग्रामे वसतः स्वल्पान्येव कर्माणि सन्ति। महति ग्रामे वसतो यावन्ति कियन्ति कर्माणि वर्तन्ते। कुत एवं सर्वेऽपि कर्माणि कुर्वाणा एव तिष्ठन्तु।

वयं यत्किमपि किञ्चित् कर्म कुर्वाणा एव यदि भवेम, तर्ह्येव विनैव दुःखं जीवेम। विना दुःखमवस्थानमुद्दिश्य बहूनि कर्माणि कर्तव्यानि। सुखं प्राप्तुमपि बहूनि कर्माणि कर्तव्यानि। विना कर्माचरणं तूष्णीमवस्थानेन समं किमपि दुःखं नास्ति। एवं कर्माणि कर्तुमस्माकमन्तरेव किमप्यस्मान् प्रेरयति। यः कोऽपि क्षुधां नाम किञ्चित् सर्वेषु निवेशयामास। सा क्षुधा मनुष्यम्—कर्म कुरु कर्म कुरु इति प्रेरयति। कर्म न

क्रियते चेत्, फक् फगिति क्षुध्यति। तस्य क्षुधाख्यस्य व्याधेरौषधमन्विष्य, ततो वयं कर्माणि कर्तुमर्हामः। शिरोवेदनाऽस्माकं भवति चेत्, तदानीमेवौषधप्रदानेनोपशाम्यति। सा कदाचन बहुकालानन्तरमाविर्भवति। अयं क्षुधा नाम व्याधिर्न तादृक्। औषधप्रदाने ततो बहुकालानन्तरमनाविर्भवतामन्येषां व्याधीनामस्य व्याधेश्च महदन्तरं वर्तते। अस्य व्याधेः प्रत्यहं भेषजं ददाना एव वर्तमहि। अस्य व्याधेरौषधमन्विच्छन्त एव सर्वेऽपि कर्म कुर्युः। इमं व्याधिं परिहर्तुमेव व्याधो मृगं हन्ति, गावं वा। मनुष्यो बहूनि नेपथ्यानि धृत्वा सर्वं कौशलं प्रदर्श्य यदार्जयति, तदप्येतदर्थमेव। यदि क्षुधा स्यात्, तण्डुलमन्विष्यौदनं पक्त्वा भुनक्ति। तण्डुलार्थं कर्म करोति। शरीरेण साकमवस्थेयं चेत्, कर्म कुर्वाणेनैव स्थातव्यम्। क्षणमपि विना कर्म न स्थातुं शक्यते।

विना कर्मावस्थीयते चेत्, निष्प्रयोजनमिदं शरीरम्। धनवान् खलु! किमर्थं कर्म कर्तव्यमिति न भावो भवति। तस्यैव बहूनि कर्माणि वर्तन्ते। धनव्यवसायस्थानेषु तत् सुरक्षितं स्यादिति तस्य सदैव चिन्ता। ततस्तदुपयुक्तानि कर्माणि विनैव विश्रामं कुर्वाण एव वर्तते। एकमुञ्छवृत्तिं भिक्षुकमपेक्ष्य दशलक्षाधिपतेरधिकं कर्म। तेन क्रियमाणानां कर्मणां मर्यादैव न भवति।

एवं मनुष्येण क्रियमाणानि कर्माणि बहुविधानि वर्तन्ते। स्वशरीरार्थं तेन क्रियमाणानि कर्माण्येकविधानि। स्वसम्बन्धिनां कृते क्रियमाणानि कर्माण्यपरविधानि। अपत्यम्, पत्नी, पिता, माता इत्यादयः केचन तस्मिन् निक्षिप्ता वर्तन्ते; तेषां कृते कर्तव्यानि कानिचन कर्माणि वर्तन्ते। तदनन्तरं स्वीया गावः, श्वानः, किञ्चित्किञ्चिदभिमानवृद्धावेको मार्जारः, तस्य कार्यदर्शी, कृषीवलः, किङ्कर इत्यादिसदृशानां कृते कानिचन कर्माणि। एतदनन्तरं ग्रामसमुदायसम्बन्धीनि कर्माणि वर्तन्ते। गृहं शुद्धं यथा स्यात्, तथा गोमयेनोपलिप्य सम्यग् रक्षणं नाम कर्म गृहे विद्यमानानां भारः। तद्वदेवैकस्य ग्रामस्य सम्यक् परिपालनं तद्ग्रामीणानां

भारः। दश जनास्समुदिताश्चेत्, एकं कुटुम्बम्, सहस्रं समुदिताश्चेत्, एको ग्रामः। कुटुम्बकार्याणि यथा मनुष्यस्याऽऽवश्यकानि, तथा ग्राम-समुदायकर्माण्यप्यावश्यकानि। ततो देशसमुदायस्य कृते क्रियमाणानि कर्माणि बहूनि।

एवं विभक्तेषु कर्मसु दन्तधावनम्, वस्त्रधावनम्, स्नानम्, भोजनम्, इत्यादिसदृक्षाणि कर्माणि स्वप्रयोजनमुद्दिश्य क्रियमाणानि। गृहनिर्माणम्, गृहोपलेपनम्, गृहोपयोगिसंभारसंभरणम्, इत्यादीनि गृहार्थं क्रियमाणानि। स्वीयानां कृते क्रियमाणानीति यावत्। उपनदखननम्, महातटाकसमी-करणम्, ग्रामेषु वैद्यशालानिर्माणम्, व्याधिनिवारणार्थं सुयोग्यव्यवस्था-करणम्, इत्यादिसदृशानि ग्रामसमुदायसम्बन्धीनि कर्माणि। देश-समुदायसम्बद्धानि तु कर्माणि सांप्रतं सर्वैरेव सम्यगेव विज्ञायन्ते। अस्माभिः क्रियमाणेषु कर्मसु स्वोदराणामेव कृते भोजनप्रदायकानि कार्याण्यतिरिच्यान्येषामपि संरक्षणानि कर्माण्यपि वर्तन्ते। शक्तिसंपन्ना अशक्तान् रक्षन्तीति लोकस्वभावः। अशक्ताः शक्तानां हस्ते निक्षिप्ता वर्तन्ते। अपत्यं शक्तो जनः पोषयन्नास्ते। स एव वृद्धावस्थां प्राप्तः शक्तिसंपन्नेन तेनापत्येन पोष्यते। एवं परिवर्तनेनावस्थानमेव लौकिकी प्रकृतिः। इयं प्रकृतिर्न केवलं मनुष्येषु; किन्तु पक्षिप्रभृतिषु सर्वेषु प्राणिषु दृश्यते। पक्षिणो मृगाश्च शिशून् बालमृगांश्च संरक्षन्ति। क्रिमिः, मार्जारः, वानरः, इत्यादिषु सर्वविधेषु स्वल्पेषु [प्राणिष्वप्ययं स्वभावो दृश्यते।

लोके सर्वत्र कर्माणि क्रियमाणान्येव वर्तन्ते। बहुविधानि कर्माणि मनुष्यः करोति। सर्वत्राभिनिविशते; धनमार्जयति; सहयोगमन्विष्यति। उपनदान् खनति; शरीरारोग्यशालां विन्यस्यति; राजनीतिमालोचयति; प्रजादुःखं निवारयितुं मार्गमन्विष्यति, स्वार्थत्यागेनैवं साधारणकार्याणीव स्वार्थान्यपि कर्माणि समीक्षते। क्षेत्रं गच्छति; कार्यालये कार्यं करोति, एवं धनमार्जितुं बहूनि कर्माणि करोति।

मनुष्याणामवश्यमपेक्षितानि त्रीण्येव वस्तूनि। क्षुधां निरसितुमाहारोऽपेक्ष्यते ; ततः आतपः, शैत्यम् इत्येते परिहर्तुम् मानं रक्षितुं च वस्त्रमपेक्ष्यते ; श्रमापनोदमवस्थातुमेकमावरणमपेक्ष्यते। इमानि त्रीण्यन्यानि सर्वाणि वस्तून्यपेक्ष्यात्यन्तमावश्यकानि। एतेषामावश्यकानां वस्तूनामुपरि तेन संभरणीयाः पदार्था अपत्यानां रक्षणार्थं तेषां विवाहप्रभृतीनां चोपयोगिनो बहवो वर्तन्ते ॥

मनुष्यस्यापेक्षितान्यावश्यकानि वस्तूनि प्राप्तुं तेन क्रियमाणानि कर्माण्यतिरिच्यापराणि कानिचन कर्माणि कर्तव्यानि समापतन्ति। प्रत्यहमाहारस्याहरणम्, गृहे जीर्णे तदुद्धरणम्, वस्त्रे छिन्ने वयनेन समीकरणं चावश्यकानि। परं तु स्वात्मनि निक्षिप्तानामपरेषां केषांचन जीवानामावश्यकानि वस्तून्यपि स समार्जयन्नेवास्ते। तस्य नित्यव्याधेः क्षुधायाः कृते आहारमाहृत्य स्वयं भुक्त्वाऽन्येषामपि ददाति। क्षुधा व्याधिरिति, आहारो भेषजमिति च कथन एको विशेषो वर्तते।

"क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौदनं सेव्यताम्
स्वाद्वन्नं न तु याच्यतां विधिवशात् प्राप्तेन संतुष्यताम्।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यताम्
औदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥"

इति साधनपञ्चके—चतुर्थः श्लोकः। क्षुधानाम्नो व्याधेश्चिकित्सां कुरु, इति आचार्या अस्मिन् श्लोके वदन्ति। व्याधिनिवृत्तेः पर्याप्तमेवौषधं रोगी सेवेत। रसनाया रुचिकरं भेषजमन्विष्य सेवमान एव न स्याद्। किञ्चाधिकं मूल्यमदत्त्वा यदि न्यूनेन मूल्येन क्रय्यमौषधं लभ्येत, तदा तदेव गृहीत्वा सेवेत। तद्वत् क्षुधाया यावदपेक्षितं तावदेव भोक्तव्यम्। साधारणेनापि भोजनेन पर्याप्तमित्येव पूर्वोक्तश्लोकस्यान्तर्गतो भावः।

एवं मनुष्यः स्वार्थं कर्तव्यानि कानिचन कर्माणि, स्वसम्बन्धिनां कृते कर्तव्यानि कानिचन कर्माणि चान्तरेणापराणि कानिचन विचित्राणि कर्माणि करोति। तेष्वतिरिक्तेषु कर्मसु कानिचन वदामि। एकः

चिलुवे इत्येकं ( खूीस्तानां चिह्नम् ) धारयति ; 'चर्च' इति नामैकं स्थानमपि निर्माति। तत्र न तस्य क्षुधां परिहर्तुं समर्थः कोऽपि पदार्थोऽस्ति। अपरो रुद्राक्षं धारयन् भस्मोद्धूलयति। एताभ्यां तस्य क्षुधा किमपसरेत् ? वस्त्रस्य तेन किमपि प्रयोजनं वर्तते वा ? अन्यः श्वेतमृत्तिकां श्रीचूर्णं च तिलकयति। पूर्वोक्तेष्वावश्यकेषु कर्मस्विमानि नान्तर्भवन्ति। एतैरुदरस्यापि न प्रयोजनम्, वस्त्रस्यापि न प्रयोजनम् ; गृहस्यापि न प्रयोजनम् ; स्वसम्बन्धिनामपि न किमपि प्रयोजनम्। इमान्यतिरिक्तानि कर्माणि। यत्किमपि किञ्चित् पञ्चपात्रं ( लोटा ) उद्धरणीं ( आचमनीं ) च गृहीत्वा कश्चन 'लोटलोटे'ति शब्दापयन् किमपि करोति। श्राद्धं नाम किञ्चित् करोति। ब्राह्मणान् निमन्त्र्य भोजयति। एतैस्तस्य क्षुधा किमपसरेत् ? क्षेत्राणां किं वृष्टिरागच्छति ? न किमप्यस्ति। पर्वतेभ्यः शिलामानीय देवालयं निर्माति। सोऽस्य वस्तुमुपयुक्तो न भवति। रात्रौ 'तालया' तं बध्नन्ति। वृष्टौ सत्यां संकुच्य स्थातुमपि नावकाशोऽस्ति। एतेन किं प्रयोजनम् ?

किञ्च केचन मतम्, मतमिति ब्रुवाणाः किमपि किमपि कुर्वते। केचन मतार्थमन्योन्यं कलहायन्ते ; शिरो भिन्दन्ति। एतानि सर्वाणि कर्माणि मनुष्यस्यानावश्यकान्यतिरिक्तानि कार्याणि प्रतिभान्ति, न वा ? विभूतेरुद्धूलनं रुद्राक्षाणां धारणम्, मृत्तिकया तिलकधारणम्, श्राद्धस्यानुष्ठानम्, ब्राह्मणानां सन्तर्पणम्, इमानि सर्वाणि मनुष्यस्यातिरिक्तानि कर्माणीति वक्तुं योग्यानि खलु ? एवं क्रियमाणैरतिरिक्तैः कर्मभिः किं प्रयोजनम् ? एवं दुरवस्थायाम्, एतावता नालम्, इति कांश्चन संवत्सरान् अस्मिन् ग्रामे भजनमित्येकमारब्धमस्ति ; कण्ठशोषणकृत्यम्। अस्य कृत्यस्य कार्यालयकृत्यस्य च सम्बन्ध एव नास्ति। विनैव प्रयोजनं तत् कर्म समन्वारभते। एतावन्त्यपि कर्माणि निष्प्रयोजनानि प्रतिभान्ति, न वा ?

इमानि निष्प्रयोजनानि वा ? कुत इमानि कर्तव्यानि ? एतैरुपनिपतत् प्रयोजनं किम् ? इतीमानीतः परमालोच्य जानीयाम।

मनुष्यः कुतो धनमार्जयेत् ? प्रत्यहं क्षुधां शमयति चेत्, तावतैव पर्याप्तं किल ? यत्र कुत्रापि गत्वाऽन्नं प्रार्थयते चेत्, दास्यन्ति। धर्मशालास्वपि भुञ्जीत। भोजनं लभ्यते खलु, वेतनं किमर्थमिति कश्चन न चिन्तयति। कश्चनौदनम्, एकप्रस्थं तण्डुलम्, दशरूप्यकाणि धनं च पृथक् पृथग् निवेश्य-तेषु किमप्येकं गृहाणेति यदि वदेत्, धनमेव कश्चन गृह्णीयात्। कुतः ? ओदन एव खल्वपेक्ष्यते। धनं किमर्थम् ? ओदन एकवारायैव प्रयोजयिष्यति। तण्डुलं द्वयोरेव वारयोरुपकुर्यात्। धनं दशानां वाराणामुपकुर्यात्। अधिकानां दिनानामुपयोग्यं वस्त्वेव सोऽधिकमभिलषति।

पाठशालां गच्छते बालकाय माता पाथेयं बद्ध्वा प्रयच्छति। किञ्चिद्दूरं ग्रामं गच्छामश्चेत्, तण्डुलप्रभृतीः सामग्रीर्बध्नाना गच्छामः।

पूर्वं धूमशकटो नासीत्। चिन्तामात्रेण गत्वा प्रत्यागन्तुं सौकर्यं नासीत्। परन्तु एतैः सौकर्यैरस्माकं हानिरेवाधिकं समापतति। धूमशकटशुल्कम्, भोजनालयव्ययः, महाबाष्पशकटस्य काफी प्रभृतीनां च व्ययाः सांप्रतं वर्तन्ते। एतान् विहाय महान्तं ग्रामं गच्छामश्चेत्, नवनवानां वस्तूनां विक्रये व्ययः। एतावन्तो व्ययास्साम्प्रतं समापतन्ति। पूर्वतने समये यावन्ति दिनानि ग्रामान्तरेषु यात्रामकुर्वत, तावन्ति दिनानि स्वगार्हं भोजनं लाभः, पादव्रजेन पादयोर्बलम्। ✓

एवं स्वल्पव्ययेन तन्त्रेण कालं क्षिपत्सु पूर्वकालीनेषु मनुष्येष्वेकमधि-कृत्यात्र स्मरणमागच्छति। पालक्काटसविधे चित्तूरनामनि ग्रामे कृष्णार्यो नाम कश्चनासीत्। स एकं महान्तं धनव्यवसायमस्थापयत्। तस्य धनव्यवसा-यस्य वृद्धिरूपेणायेन सप्ततिविद्यार्थिभ्योऽप्यधिकं वेदशास्त्राण्यध्यापयितुमेकां पाठशालां प्रारभत। बहुकालं तत्राधीतवन्तः पश्चात् वि, कृष्णस्मार्यैः स्थापितेऽस्मिन् संस्कृतमहाविद्यालये समागत्य पठन्तीति समुदाचारः। एवं पाठशालास्थापकेषु अपरे मुत्तुघनपाठिन इति पञ्चनदक्षेत्रे ( तिरुवैयारक्षेत्रे ) आसन्। ते शतं विंशत्युत्तरशतपर्यन्तं वा विद्यार्थिनो यथा वेदमधीयेरन्, तथा व्यवास्थापयन्। यत्र कुत्रापि तेषां भोजनार्थं समुचितं सौकर्यं

व्यवस्थापयन्ति स्म । कृत्येष्वपराधिनां दण्डं विधाय तं वृद्ध्यथ प्रदाय तदेव धनं मूलधनं न्यक्षिपन् । स्वयमेवाध्यापयन्ति स्म । कदाचन कश्चनाधिकारी तां पाठशालामागच्छत् । स तत्रत्यान् विद्यार्थिनः समीक्ष्य—हो हो हो अनीत्यैतान् सर्वान् संघीकृत्य क्षुद्रभित्तीकुरुथ किल !! अजवृन्दमिव दशवत्सरान् यावत् अन्तरवस्थाप्य किं प्रयोजनम् ? एतेषां जीवनार्थं कापि वृत्तिर्न व्यवस्थापिता खलु ! आङ्ग्लभाषायां यद्यधीतिनः, उन्नतां दशां प्राप्नुयुरित्यवददिति श्रूयते । तदानीं समीपस्थः कश्चन—एतेषामाङ्ग्लभाषां पठितुमप्रेष्यात्रैवाजवृन्दस्येवान्तरेवावस्थापनेनाधों व्ययो लाभो भवति । आङ्ग्लभाषायां यदि गताः स्युः, तर्हि वस्त्रधारणम्, शिरःकर्तनम्. द्विचक्रयानम्, इत्यादीनां कृते भविता य एतेषां व्ययः, सांप्रतं स लाभः किल । स खलु तेषामार्जितस्यार्धांशमाकर्षेदेव । स तु व्ययो नास्तीति हेतोरेतेषामर्धांशार्जनं सिद्धप्रायमेव । अवशिष्टमर्धमंशमार्जितुं मार्गं वयमुपादिशामैव । अत्रेमे विद्यामधीत्य गताश्चेदपि आङ्ग्लभाषापार्श्वे विना परावर्तनेनावस्थानेनैव लाभो वर्तते इत्यवोचदिति श्रूयते । एतैस्तस्मिन् समये स्वल्पं व्ययमानाः पुष्टं स्म जीवन्तीति ज्ञायते ।

तस्मिन्नपि समये पञ्चाशन्छिलापरिमिते दूरे विद्यमानं किञ्चित् स्थानं गन्तुं तण्डुलं बध्नाना अगच्छन् । यात्रास्थानं यथा यथा विप्रकृष्यते, तथा तथाऽस्माभिः संभरणीयाः पदार्था अपि वर्ध्यन्ते ।

एकं दिनं भुज्यते चेत्, पर्याप्तं खलु, दिनान्तरे भोक्तुमिदानीमेव का चिन्तेति नावतिष्ठते । दिनान्तरेऽसौख्यं भवेच्चेत्, क्लिश्येम खलु, इति श्वोऽपि मिलित्वाऽद्यैव संभरामः । श्वस्तनं सौख्यं नालोचयेम चेत्, धर्मं नास्माकमावश्यकम् । अस्मिन् मठे प्रथमं सेवकानां भोजनमात्रं दत्त्वा पर्यैक्षामहि, तेन तेषां तादृशी तृप्तिर्नाभवत् । तण्डुलरूपेण दीयते चेत् समीचीनं स्यादिति तेऽमन्यन्त । यावदपेक्षमुपयुज्यावशिष्टं विक्रीयेत, न वा ? सांप्रतं तण्डुलरूपेणैव दद्मः । मन्दबुद्धिरेव स्वल्पदिनपर्याप्तानि गृह्णीयात्, बुद्धिमांस्तु बहुदिनोपयोग्यानि गृह्णीयात् ॥

एवं पूर्वमेव भाविकालोपयोग्यानि संभृत्यावस्थापने पश्चात् कति दिनानि सुखं स्यामेति चिन्तयामः ? एकं दिनं वा ? एकं मासं वा ? एकं वत्सरं वा ? कति संभृत्य निक्षिपामः ? सहस्रं वा ? दशसहस्राणि वा ? इतोऽप्यधिकं कियदपि स्याच्चेदप्यस्माकं सुखायानुगुणमेव। कति दिनानि सुखेन जीवेमेति न सर्वेऽपि जानन्ति। परमेश्वरेण विलिख्य स्थापितं दिनमेव तस्यावधिः। तथापि वयं सर्वदा सुखेनैव जीवितुमभिलषामः।

पूर्वोक्तस्यावधेः परमपि सदा सुखेनावस्थातुमिमानि धनादीन्युपकरणानि पर्याप्तानि वा ? इमानि यावच्छरीरमेवोपकुर्युः। ततः परमेतैर्न प्रयोजनम्। वयम्, क्रियमाणानि सर्वाणि कर्माणि कालान्तरं सुखेनावस्थातुं कुर्महे। इदानीं क्रियमाणानि कर्माणि करणीयान्येव। तैः साकं सर्वदा विना क्लेशं जीवितुं किंचित् कर्म कर्तुमर्हामः। वयं सर्वदा न म्रियेमहे। शरीरमेव म्रियते। अतः सदा सुखेन जीवितुमिदानीमेव किञ्चित् कर्म कर्तव्यम्। मरणानन्तरं कर-चरणादीनि न स्युः। कालान्तरमुद्दिश्य सांप्रतमेव मरणशासनकोशे निक्षेपमिवेमान्यपि कर्माणि कर्तुमर्हामः।

एकस्यामुपत्यकायां वयं वर्तामहे। अस्माकं हस्ते सहस्रं रूप्याणि वर्तन्ते। सर्वाणि रूप्याण्यधर्णिकपणरूपेण वर्तन्ते। तदानीं चोराः समागच्छन्ति। प्रबलः कलहो भवितेत्येव प्रतीयते। पर्वतमधिरुह्यापरं पार्श्वं यदि गच्छेम, तर्हि अस्माकं भीतिरेव न स्यात्। तदानीं कश्चन समागत्यैतेषां सहस्ररूप्याणामपि तन्मूल्याः पत्रात्मकाः पणा अपेक्ष्यन्ते वेति पृच्छति। वयं किं कुर्याम ? सहसैव तद्धस्तेऽधर्णिकपणभाण्डं प्रक्षिप्य सहस्ररूप्यमूल्यान् पत्रपणान् गृहीत्वोत्प्लुत्योत्प्लुत्य पर्वतमारुह्य प्रधावेम, यदि तु ते पत्रपणाः पर्वतस्यापरपार्श्वस्थेष्वपि देशेषु विनिमययोग्या भवेयुः। तद्वदेव सांप्रतमस्माकं कथापि वर्तते। अस्माकं विद्यमानां शक्तिमनुसृत्य कालान्तरोपयोगीनि कर्माणि कुर्याम चेत्, अस्माकं क्लेश एव न भविता।

इहैव सुखेन जीवितुमर्हामः ? अनन्तरं वयं भविता स्मः, इति को निर्णयः ? इति कश्चन पृच्छेत्। यदि भवेम, ततः किं रोदितास्मः ?

"नास्ति चेद् नास्ति नो हानिः, अस्ति चेद् नास्तिको हतः।" इति श्लोके इदमितिवृत्तं कथितमस्ति। अस्य जन्मनोऽनन्तरं वयं भवितास्म, अत इदानीमेव कल्याणानि कर्माणि कर्तुमर्हाम इत्यास्तिका वदन्ति। अनन्तरं भवितास्म इति को निश्चयः, इति नास्तिकाः पृच्छन्ति। सांप्रतं कल्याणानि कर्माणि यदि कुर्याम, ततो यदि स्याम, तर्हि सुखं भवेत्, यदि न स्याम, तर्हि न कापि दुर्गतिः। पक्षद्वयेऽप्यास्तिकानां न कापि हानिः। पश्चाद् वयं भवितास्म, इति यदि सत्यं स्यात, औदासीन्यमास्थितानां नास्तिकानामवस्थैव दुरवस्था ॥

तस्मात् कल्याणानां कर्मणां करणं सर्वदा वरमेव। वयं कंचन देशं प्रति यदि प्रतिष्ठेमहि, मनः सन्तोषोन्मुखं भवेत्। एतच्छरीरमुत्सृज्य प्रतिष्ठमाना वयं मध्येमार्गं विश्रामयोग्यानि कर्माणि यदि न कुर्याम, अस्माकं क्लेशः स्यात्। तथाविना ऽऽत्मरक्षणक्षमाणि कर्माणि ज्ञानमार्गेण ज्ञातुमर्हामः। इदानीं क्रियमाणानां कर्मणामिदानीं फलं न दृश्यते चेदपि कालान्तरे भविता। नियूटन (Newton) प्रतिपादितं तत्त्वं बहोः कालात् पूर्वमेवात्मविषयेऽस्माकं पूर्वजाः प्रत्यपादयन्। एकस्याः शक्तेः प्रतिशक्तिः (Reaction) सर्वदा वर्तत इति मतमस्मदीयानि शास्त्राणि सम्यग् वदन्ति।

ख्रैष्टा जन्मान्तरं न स्वीकुर्वन्ति। परं तु तैर्वर्ण्यमानानि कानिचनेतिवृत्तानि स्वयमज्ञात्वैव ते जन्मान्तरं स्वीकृतवन्त इति निदर्शयन्ति। ते इदं शरीरमुत्सृज्य वियोगानन्तरं न्यायनिर्णयः कश्चन भवति, ततो जीवो नरकं वा स्वर्गं वा स्वकृतकर्मानुसारं लभत इति च वदन्ति। सुखदुःखानुभवसाधनेऽस्मिन् शरीरेऽत्र पेटिकायां शयाने सत्यपि अपरस्मिन्नेकस्मिन् शरीरेऽवस्थाय तेऽ(सुखदुःखे)नुभवितेति ते वदन्ति। तदेव वयं जन्मान्तरमिति वदामः। तस्मिन् शरीरे सुखदुःखयोरनुभवात् पूर्वं तयोः कारणानि कर्माणि यत्र जन्मनि कृतानि, इदं तज्जन्म यथा वर्तते, तथैव एतज्जन्मनि सुखदुःखयोरनुभवसाधनानां कर्मणां योग्यमेकं जन्मेतः पूर्वमप्यासीदेव खलु ?

अस्य जन्मनोऽनन्तरमप्युपयोगयोग्यानां केषांचन कर्मणामनुष्ठान-मावश्यकम्। सदा सुखेनावस्थातुं क्रियमाणानि कर्माण्येव मयाऽतिरिच्य-मानानीत्युक्तानि। विभूते ( भस्मनः ) धारणम्, रुद्राक्षैरलङ्करणम्, श्राद्धस्या-नुष्ठानम्, इत्यादीन्यस्माकं सर्वदा सुखेनावस्थातुमुपकुर्वाणानि कर्माणि ; एत-ज्जातीयानि कर्माणि वयं यावद्यावदधिकमनुतिष्ठामः, तावत्तावत् तानि क्षेमं करिष्यन्ति।

शरीरे सत्युपयोगीनि कर्माण्यतिरिच्य तस्यानन्तरमपि बहुकोटि-वत्सराणां सदा च प्रयोजनवन्ति कर्माणि वयं कर्तुमर्हामः। एतद्देशीयः पत्रपणः रष्याराज्ये न विनिमीयते। सर्वेषां देशानामेको राजा यदि स्यात्, तस्य मुद्राङ्कितः पत्रपणः सर्वत्र विनिमीयेत। एतेषां चतुर्दशानां लोकानां कश्चन राजा वर्तते। स एव परमेश्वरः। तस्य सर्वेषु राज्येषु विनिमय-योग्य एकः पणो वर्तते, स सदा सर्वत्र विनिमीयेत। स कः? स एव नाम धर्मः।

रामोऽरण्यं प्रति प्रस्थानात् पूर्वमनुमानयितुं कौसल्यादेवीसकाश-मगच्छत्। देशान्तरं प्रति प्रतिष्ठमानानां बालानां माता पाथेयं बद्ध्वा ददातीति संप्रदायो न वा? चतुर्दशवत्सरान् देशान्तरे निवत्स्यते बालाय किं नाम देयमस्ति॥ तां न प्रत्यभात् किञ्चन। सम्यगा-लोच्य वदति—

यं पालयसि धर्मं त्वं धृत्या च नियमेन च।
स वै राघवशार्दूल! धर्मस्त्वामभिरक्षतु॥

[ अयोध्याकाण्डे २५·३. ]

इति। हे राघव! अहं त्वां रक्षितुं किमपि कर्तुं न प्रभवामि। धर्म एक एव वर्तते, धैर्येण नियमेन च यं धर्मं त्वं पर्यपालयः, स धर्मोऽभि-रक्षिष्यति। स एक एव मया क्रियमाणोऽनुग्रह इत्यवोचत्। धर्मो रक्षति रक्षितः। रामस्य यो धर्मोऽभिरक्षिताऽऽसीत्, स एवेश्वरस्याखण्डे राज्ये विनिमीयेत। वयं स्वभावतः—अपत्यम्, पिता, ग्रामः, देशः इत्येतेषां

वदन्ति, मनुष्य एवोर्ध्वं वर्धते। तस्य रूपं स उन्नत इति निदर्शयति। स धर्ममार्गो यदि स्यात्, इतरप्राणिनोऽपि तमाद्रियेरन्। धर्ममार्गेऽतिक्रान्ते सहोदरोऽपि दूरीभवतीति रामायणकथया ज्ञातुमर्हामः। इदमेव वक्ष्यमाणः श्लोको विशदयति—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ इति।

( अनर्घराघवनाटके )

रामो धर्मस्य पथाऽगच्छत्। ततो मृगा वानराश्च तमुपाकुर्वत। रावणोऽधर्मस्य पथाऽगच्छत, ततः सोदरोऽपि तमुत्सृज्य दूरेऽभवत। रावणः स्वीय एव राज्ये विविधाभिः सेनाभिः परीतोऽपि न रक्षितः। धर्मिष्ठानां सर्वेषु देशेषु सुखमस्ति।

तस्मात स धर्मोऽभिरक्षेत्। कामक्रोधपरिपूर्तिं जीवनमात्रं चानुद्दिश्य परम्पराक्रमेणानुष्ठीयमानमतिरिक्तं च कर्म धैर्येण नियमेन चानुष्ठीयते चेत्, तत्सदा सुखं वितरेत्।

# महावारिधिः

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तिः )

शुभ्रः फेनचयो महाजलनिधेस्तारासमो दृश्यते
तुल्यो नीलगुणोऽपि किन्तु वियति श्वेतांशुरुत्कर्षकृत् ।
तस्माद् यः प्रतिबिम्बितं विधुशतैर्हन्तीव तद् गौरवं
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥३८॥

यस्यान्तस्तिमयो महापरिसरा भागेन दृश्या दृशा
पोतस्थेष्ववनिभ्रमं विदधते, मोहादथो ते यदा ।
तत्रैवावतरन्ति हन्त सहसा लीना भवन्त्यम्बुधौ
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥३९॥

यस्मिन्नौर्वमहानलः क्वचिदपि प्रोद्भूतरूपो भवन्
सामुद्रेण समीरणेन परितः पुष्टश्च नीरेन्धनैः ।
वह्नेर्वारिणि वैरमादिसमयात् सिद्धं विलुम्पत्यहो
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४०॥

यस्यान्तः प्रचरन्ति सिन्धुतुरगाः शक्त्या महामानया
येषां क्वापि समागमेन तुरगी सूते विचित्रं हयम् ।
राजन्ते जलहस्तिनोऽपि कति वा यन्नीरपूरान्तरे
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४१॥

उन्मादामयभागिनो जलनिधेर्यस्यानिशं गर्विणः
शत्रुं कल्पयतो वृथैव पुरतः सन्नाहमासीदतः ।
रोषोल्लासि नियुद्धमुद्यतकरं दृष्टिं समाक्रामति
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४२॥

यत्तीरे हरिदास इत्यभिहितो ध्याने रतः प्रत्यहं
चैतन्येन महात्मना प्रतिगतः पुर्यां समाधिं श्रितः ।
यत्क्षेत्रं समपादि सिद्धवकुलं नाम्ना महाश्चर्यदं
तं लोकोत्तरतीर्थराजमजयं वन्दे पुरी-वारिधिम् ॥४३॥

यस्यान्तं जगदुत्तरद्युतिभृतः संवीक्षितुं वाञ्छतः
शीर्षं दूरवियत्पथे सुविमले श्रीमन्दिरस्योन्नतम् ।
पुर्यां दूरगतं रवि प्रकटितं तस्मादिदं दृश्यते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४४॥

रत्नानां निजगर्भमाश्रितवतां यो रक्षणायोद्यतो
भीतिं प्रापयितुं विमुञ्चति मुहुर्भीष्मं महानालिकम् ।
यन्नादः श्रुतिभेदनस्तनुभृतां भीतिं विधत्ते परां
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४५॥

नीलं राजतपट्टिकापरिभृतं चित्रान्तं राजतं-
श्चित्रैः फेनचयैर्भुवः सुविमलं वासः किमेतत् पुरः ।
यं दृष्ट्वा लहराकुलं तनुभृतामित्थं भ्रमो दीप्यते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४६॥

पुर्यां यत्पुलिने मठः शुभमयो गोवर्द्धनेत्याख्यया
नानादेवतमूर्त्तिपूतनिलयः पृथ्वीगुहाभ्यन्तरे ।
श्रीशम्भोरवतारभूतभगवत्पादैः पुरा स्थापित-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४७॥

यस्यादूरतटे पुरातनतमे श्रीमन्दिरे सुन्दरे
लिङ्गात्मा भवबन्धमोचनपटुः श्रीलोकनाथः शिवः ।
देवद्वेषिजनापदृष्टिभयतो भूगह्वरे स्थापित-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४८॥

नक्षत्रैरिव लोचनैः सुरगणाः श्वेतांशुदीपोज्ज्वलं
यं पश्यन्ति महान्तमन्तरहितं रौप्यद्रवैराचितम् ।

यो नृत्यन्ननिभास्वरं शशधरं हस्तैरिवाह्वितुसते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥४९॥
मेघेनोन्नमतेव रोषणतया रात्रौ विधोश्छादनात्
सूर्यस्यापि दिवा प्रियस्य परितः क्षिप्त्वा तरङ्गान् बहून् ।
आक्रामन्निव गर्जनेन महता सन्नाहमायाति य-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५०॥
कोणार्के यदुपान्तवर्त्तिनि रथाकारं बृहन्मन्दिरं
मस्मिन् विश्रममातनोति गगनं क्रामन् रविः श्रान्तिमान् ।
यस्मादाह्वन उन्नतारुणशिलास्तम्भः पुरीमन्दिरे
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५१॥
अस्मादूर्द्ध्वमगाधमस्ति सलिलं यस्माद् विपत्तिर्भवेत्
तन्नातः परतो व्रजन्तु सलिले स्नानाय भक्ताः प्रजाः ।
इत्यावेदयतीव भङ्गनिकरैर्यः शुभ्रसूत्रोपमै-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५२॥
स्वच्छन्देन धरां सशैलगहनां नेतुं क्षयं यः क्षमो
मर्यादामनुकम्पयेव हि परं नायं व्यतिक्रामति ।
तीक्ष्णैर्वीचिचयैर्न सैकतमयी वेलापि संभिद्यते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५३॥
यद् यद् भूरिविभूति तद् भगवतो दिव्यं वपुः सूत्रितं
तस्माद् यः खलु भाति शैवकृतिनां मूर्त्तिः परा शाम्भवी ।
सोऽयं ताण्डवमातनोति नियतं प्रोद्यत्तरङ्गैर्भुजै-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५४॥
यत्तीरे विहरन्ति ये स्थितिभृतः श्रद्धावता चेतसा
ते मत्तोऽपि भजन्ति गौरवपदं का वा कथा देहिनाम् ।
इत्येवं वदतीव यो विहरतां पादौ जलैः क्षालयं-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५५॥

ब्रह्माद्वैतमसारसंसृतिरसप्रध्वंसतो देहिनां
ब्रह्मज्ञानवतां यथैव हृदये बाभाति विश्वोत्तरम् ।
तद्वद् यं परिपश्यतो हृदि जलाद्वैतं समुज्जृम्भते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५६॥

श्वेतः क्वापि यदुद्ध्वमभ्यति बको मीनप्रणाशेच्छया
स्वल्पेनैव पथा निवृत्तगमनस्तीरे समावर्त्तते ।
शुभ्रत्वादुभयोस्तरङ्गसविधे गच्छंश्च नालक्ष्यते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५७॥

यन्नीरात्तटमेत्य कर्कटगणा गर्त्ते स्वसम्पादिते
निर्भीका निवसन्ति वीचिसमये यस्याम्बुनोज्जीविताः ।
तत्रापि प्रतिगत्य निष्ठुरहृदो गृह्णन्ति तान् धीवरा-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५८॥

यद्वेलासिकतावलीं सुकृतिनो रामानुजाद्या बुधाः
पुण्यैः पादरजोभिरागमदृशः शिष्यैः प्रशिष्यैर्युताः ।
पूर्तिं लोकविलक्षणामिह पुरीप्रान्ते पुरा प्रापयं-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥५९॥

यत्सम्भूततरङ्गनादमिलितं श्रीनामसङ्कीर्त्तनं
गौराङ्गस्य महाप्रभोः परिकरानासीदतः पूर्वतः ।
पुर्यामार्यजनोचितस्थितिभृतां श्रोत्रं समप्रीणयत्
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६०॥

राजानः कति कालकुक्षिमगमन् मन्वादयो विश्रुता
देशा वा कति लोपमापुरभितो नानाविधैः कारणैः ।
यो नित्यं सदृशं वहन्निह पुनः सन्दीप्यते वीचिमां-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६१॥

यत्क्रोशार्द्धपदे विराजति महन्नीलाचले सुन्दरं
श्रीमन्मन्दिरमद्रिकन्दरसमं गर्भं दधानं हरेः ।

पृथ्वीमन्दिरराजिराजवलये यत्र सार्वभौमायते
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६२॥
पुर्या दक्षिणतो वहन्नविरलं भङ्गैः समुद्यत्करैः
कारुण्यात् प्रतिषेधतीव शमनाद् भीतिं पुरीवासिनाम् ।
यत्र स्नानकृतां कृतान्तशमने दिव्यं पदं वैष्णवं
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६३॥
यत्तीरे च यमेश्वरेत्यभिधया विश्वेश्वरः शङ्करो
लोकानां यमभीतिवारणकृते यातः प्रकाशं पुरः ।
तत्पूजा शिवलिङ्गकोटिभजनाभाव्यं प्रदत्ते फलं
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६४॥
यत्तीरादिह यावदक्षयवटं विस्तीर्णभूमिं शुभा-
मन्तर्वेद्यभिधावतीं भगवतः शंसन्ति विज्ञानिनः ।
तद्भूमेः क्वचिदंश एव मरणान् मुक्तिः परा देहिनां
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६५॥
येनोत्कूलितशङ्खशुक्तिनिकरानाहृत्य दीना जना
मालापुष्पमुखाणि संविदधतो वस्तूनि विक्रीणते ।
तीरे ये विहरन्ति तेऽपि कुतुकात्तानाहरन्त्युत्सुका-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६६॥
इन्द्रद्युम्ननृपेण यस्य सलिले दृष्ट्वा महापादपं
तेनाकारि सपार्षदा भगवतो मूर्त्तिर्महाभक्तितः ।
तस्य प्रार्थनया चकार विधिवद् ब्रह्मा प्रतिष्ठाविधिं
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६७॥
इन्द्रद्युम्नमहीपतौ जनगणैः सम्पाद्य तन्मन्दिरं
याते ब्रह्मपुरं तदर्थनकृते यद्वालुकाराशिभिः ।
प्रच्छन्नः प्रलयोत्तरं समभवन्नीलाचलः सर्वत-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६८॥

गालो नाम महान् महीपतिरथो हन्तुं मृगान् यत्तटे
भ्राम्यन्नश्वपदं क्वचित् क्षितितले बद्धं समुन्मोचयन्।
उत्सार्य क्षितिवालुकाः सुविपुलं श्रीमन्दिरं दृष्टवां-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥६९॥
यत्तीरे तदपूर्वमन्दिरवरं दृष्ट्वा स रिक्तं नृपो
मूर्त्या देववरस्य कस्यचिदथो श्रीमाधवं विग्रहम्।
शास्त्रोक्तेन नयेन भक्तिमुदितः संस्थाप्य कीर्त्तिं गत-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७०॥

( क्रमशः )

---

# अर्भकविलसितम्

( पूर्वानुवृत्तिः )

[ निबन्धकः—आर्-रङ्गाचार्यः शिरोमणिः ]

अपवरान्तःस्थितैव माता "विजये! चन्द्रस्य उपधानं माऽपहर! तदीयं तस्मै देहि रे वत्से!" इति ब्रवीति।

विजया "अम्ब! अत्रागत्य पश्य रे। कुत्राहं शयिताऽस्मि। कुत्र तदीयम् उपधानमस्ति। ( सपदि चन्द्रस्योपधानं दूरतः प्रक्षिप्य ) मदीय-महमुपदधानि, का नाम तदीयमपेक्षते स्पृशति वा।" इति वदति। ततस्तौ शय्यां गतौ सुखं तूष्णीं शयानौ स्तः।

चन्द्रः। (सहसा प्रबुध्य) अपसर रे अपसर। किमिति मां स्पृशसि रे!

विजया। का नाम त्वां स्पृशति। मुसल! किं विषयो न ज्ञायत इव भाति।

चन्द्रः। ( उच्चैः ) अम्ब! अम्ब! विजया शय्याया मदीयमर्धं स्वयमाक्रान्तवती। अहं स्थण्डिले पातितोऽस्मि। आगत्य पश्येतः अम्ब!

विजया। नहि। नहि। मातः! अहं मदीय एवार्धे शयानाऽस्मि।

अयं स्थूलः कलहप्रियो मिथ्या ब्रूते। ( सपदि तदीयं भागं तस्मै त्यजति )। क्षणादुभावपि महत्या सौजन्यश्रिया क्षणमिव शोभेते।

चन्द्रः। पुनरपि। स्थूले! स्थूले! मुण्डे! रण्डे! किमिति मत्पादोपरि तव पादं पातयसि। तं दूरीकुरु रे! इति गुणुगुणायते।

विजया। रे रे मुसल! क रे मदीयः पादस्त्वदीयं स्पृशति।

चन्द्रः। आम्। नियतं स्पृशति। किं दूरीकरीष्यसि, उत किम् अम्बामाहूय दर्शयिष्यामि?

विजया। अम्बां वा आह्वय, अन्यां वा शब्दायस्व; का नाम बिभेति।

चन्द्रः। अहमपि मदीयं पादं तवोपरि प्रक्षिपामि। किं करिष्यसि?

विजया। प्रक्षिप रे, प्रक्षिप, अहं पश्यानि।

उभौ। शय्यायां तिर्यग्भूतौ परस्परं मिथः प्रहरन्तौ पादापादि-प्रक्रिया-पराक्रमं प्रदर्शयतः।

माता मन्दं शय्यागृहं प्रविश्य पश्यति। आस्तरणान्येकत्र, उपधानान्यन्यत्र। नीशाराः कुत्रापि। हा! शय्यायाः कीदृशी दशा। कोऽयं निम्नोन्नतभावः। वत्सौ! किमिति एवमनवरतं कलहायमानौ स्थः। किं लोके अर्भका न सन्ति। किं ते त्वादृशाः किल आचरन्ति। पश्यतम्। शय्यायाः केयं स्थितिः! कोऽयमाकुलीभावः! इति कृतककोपं दर्शयन्ती शय्यां यथापुरमारचयति। अर्भकावपि शान्तौ सुशीलौ संविशतः।

चन्द्रः। अम्ब! अम्ब! यदि नाम विजया एकां कथां कथयति, अहं सुखं स्वप्स्यामि।

माता। वत्से विजये! कांचन कथाम् अनुजं कथय। विना कलहं सुखं स्वपितम्।

विजया कथयति। पुरा कश्चन भल्लूक आसीत्। किं जानासि। असौ भल्लूकः स्थूलः। नीलनीलः। आसकलं रोमभिर्व्याप्तशरीरः।

चन्द्रः। ऊँ

विजया। असौ भल्लूकः अतिवृद्धः। अस्य नखानि तीक्ष्णानि उग्रंपश्या दृष्टिः। उल्मुकवद्भाति।

चन्द्रः। ऊँ। किं भल्लूकः।

विजया। आम्। आम्।

चन्द्रः। ऊँ। ततस्ततः।

विजया। असौ कस्यांचिद्गुहायां निवसतिस्म।

चन्द्रः। ऊँ।

विजया। कानिचिद्दिनानि असौ नाहारमलभत। भृशं क्षुधितः। दारुणं जगर्ज। "बहाहो! बहाहो!" इति

चन्द्रः। (सभयम्) अम्ब! पश्य विजयाम्। मां भीषयति। मम महती भीतिर्भवति।

माता। वत्से विजये! बालं मा भीषय रे। असौ अर्भकः खलु। बिभेति। नैव स्वप्यात् सर्वां रात्रिम्। तं मा भीषय वत्से!

विजया। अम्ब! अहं केवलं भल्लूककथां कथयामि रे। नाहं भीषयाणि

माता। भल्लूककथा मा भवतु। अलम्। अन्यां सरसां कथां ब्रूहि। (तदनु महदिव सौमुख्यम्। गरीयान् विस्रम्भः। एका कथां ब्रवीति। अन्यः सादरं शृणोति।

एकः। दूरतो भव। जानुभ्यां मोत्सारय माम्।

अन्या। पश्य। कुत्र मम जानुनी स्तः कुत्र च पादौ।

एकः। किमरे। मदीयं कम्बलं त्वमेवाकृष्टवती।

अन्या। किमरे। किं तूष्णीं निद्रातुं न शक्नोषि। शनिः पीडा। सदा पिशुनायते।

एकः। अम्ब। विजयां पश्य रे।

माता। विजये! चन्द्र! वत्सौ! साधु आचरतम्। तूष्णीं स्वपितम्। मा कलहायेताम्।

---

# धर्ममीमांसा

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

सदसदिति बोद्धव्यमित्यर्थः। अथैषां वृत्तिर्निरूप्यते। तत्रानुलोमजातानां वर्णसङ्कराणां मातृजातीयत्वात् तत्समवृत्तित्वम्। तथाच विष्णुः "अनुलोमासु मातृवर्णा" इति। मातृवर्णतुल्यवृत्तित्वादेव मनु-विष्णुभ्यामेषां वृत्तिः प्रायेण विशिष्य नाभिहिता। उशनसा तु साम्येन कथञ्चिद् वैशिष्ट्येन चैषां वृत्तिरुक्ता। तथाच

> विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम्।
> जातः सुवर्ण इत्युक्तः सोऽनुलोमद्विजः स्मृतः।
> अथ वर्णक्रियां कुर्वन् नित्यनैमित्तिकीं क्रियाम्॥
> अश्वं रथं हस्तिनं वा वाहयेद् वै नृपाज्ञया।
> सैनापत्यञ्च भैषज्यं कुर्याज्जीवेत वृत्तिषु॥

इति। सुवर्ण इति मूर्द्धाभिषिक्तस्याभिधानान्तरम्। वर्णक्रियामिति क्षत्रियोचितवर्णक्रियां मातृजातिसाम्यात्तेषामिति बोद्धव्यम्। अश्वं रथमित्यादिना क्षत्रियोचितां वृत्तिं दर्शयित्वा भैषज्यमित्यनेन वृत्त्यन्तरमपि दर्शयति। भैषज्यमिति आयुर्वेदोक्तचिकित्साशास्त्रमपि मूर्द्धाभिषिक्तो जीविकात्वेनाश्रयेदित्यर्थः। समन्त्रकमित्यनेन दैवार्षप्राजापत्यरूपविवाहा ज्ञेयाः। यत्र क्षत्रियः पिता ब्राह्मणाय मन्त्रोच्चारणपूर्वकं कन्यां ददाति, तत्र दातृग्रहीत्रोरसमानवर्णत्वादयं न ब्राह्मो विवाहः। तथाच शङ्खलिखितौ "सवर्णः सवर्णाय विदितो विदिताय नग्निकां दद्यात् स ब्राह्म" इति। ब्राह्मणो यदि क्षत्रियां गान्धर्वादिविधानेनोद्वहति तदा तस्यां जातः पुत्रो वैद्य इत्युच्यते। तथाचोशना—

नृपायां विप्रतश्चौर्यात् संजातो यो भिषक् स्मृतः ।

अभिषक्तनृपस्याज्ञां प्रतिपाल्य तु वैद्यकः ।

आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत् ॥

इति । चौर्यञ्चात्रापदं विनापि यदि ब्राह्मणः क्षत्रियकन्यां पित्रोरनुमतिमन्तरेणापि लोभादिप्रदर्शनेनोद्वहेत् तदा तादृशविवाहस्याप्रशस्ततया विज्ञेयम् । स्मृत्यन्तरे पुराणे च वैद्यस्योत्पत्तिः प्रकारान्तरेण निरूपिता । तद् यथा ब्रह्मवैवर्ते प्रकृतिखण्डे—

वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति ।

वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः ॥

इत्यादि । ऊढायां ब्राह्मण्यामश्विनीकुमारेण जातो वैद्य इत्याख्यः पुत्रस्तस्माच्च शूद्रायामुत्पन्ना ये ते वैद्यजातित्वेन प्रसिद्धा इति वचनार्थः । उपाख्यानञ्चाकरे द्रष्टव्यम् । भावप्रकाशादौ वैद्याम्बष्ठयोरेकत्वमाह यथा—

अथ सर्वेऽपि चाम्बष्ठा वैश्या ब्राह्मणसम्भवाः ।

जननीतो जनुर्लब्ध्वा यज्जाता वेदसंस्कृतैः ।

अम्बष्ठास्तेन ते सर्वे द्विजा वैद्याः प्रकीर्तिताः ॥

इत्यादि । अत्र परस्परविरोधेऽप्येवं ज्ञेयम् यथा उशनसोक्तो ब्राह्मणात् क्षत्रियायामुत्पादितो यो वैद्यः स जातिपरः । ब्रह्मवैवर्तोक्तवैद्यस्तु व्यक्तिवचनः । तत्पुत्रपौत्रादयस्तु शूद्रा अपि पितुर्नाम्नाख्याता गर्गादिशब्दवद् वैद्या इत्यभिधीयते । भावप्रकाशादौ चाम्बष्ठानामेव वैद्यव्यवसायसाम्याद् वैद्यसंज्ञा इत्यर्थो ज्ञापित इति । कलौ तु वैद्यः शूद्रवदतिदिष्टः । यथा विष्णुपुराणे—

तपोयोगात् पुरा वैद्यास्तेजसा पितृवत् स्मृताः ।

विप्रात् क्षत्राद् यतो न्यूनाः क्रियया वैश्यवत् कृताः ॥

शनैः शनैः क्रियालोपादथ ता वैद्यजातयः ।

कलौ शूद्रसमापन्ना यथा क्षत्रा यथा विशः ॥

इति । अत्र प्रायेणेति ज्ञेयम् । तेन येषां क्रियालोपो न जातस्तेषां स-

स्वजातितो न प्रच्युतिः हेतोरभावात्। ब्राह्मणाद् वैश्यायामुत्पादितस्य नाम वृत्तिश्चाहोशना यथा—

वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते।
कृष्याजीवो भवेत् तस्य तथैवाग्नेयनर्त्तकः॥
ध्वजविश्रावका वापि ह्यम्बष्ठाः शस्त्रजीविनः।

इति। आग्नेयं स्वर्णं तस्य नर्त्तकः चिकित्सक इत्यर्थः। ध्वजविश्रावकाः सेनावाहका इत्यर्थः। मनुस्त्वम्बष्ठानामेकामेव वृत्तिमाह यथा "अम्बष्ठानां चिकित्सित"मिति। ब्राह्मणाच्चौर्यादधिगतायां वैश्यायामुत्पन्नान् सुताना-होसना यथा—

वैश्यायां विप्रतश्चौर्यात् कुम्भकारः प्रजायते।
कुलालवृत्त्या जीवेत नापिता वा भवन्त्युत॥
सूतके प्रेतके वापि दीक्षाकालेऽथ वापनम्।
नाभेरूर्द्ध्वन्तु वपनं तस्मान्नापित उच्यते॥
कायस्थ इति जीवेत् तु विचरेच्च इतस्ततः।
काकाल्लौल्यं यमात् क्रौर्यं स्थपते रथकृन्तनम्॥
आद्याक्षराणि संगृह्य कायस्थ इति निर्दिशेत्।

इति। ननु

शूद्रकन्या समुत्पन्नो ब्राह्मणेन तु संस्कृतः॥
संस्कृतस्तु भवेद् दासो ह्यसंस्कृतस्तु नापितः।

(क्रमशः)

—

## ग्रन्थनिकषः

**उद्भटश्लोकमाला**—कविभूषण-श्रीपूर्णचन्द्र-दे उद्भटसागर बि. ए महोदयेन गुम्फिता। २०३।१।१ कर्णओयालिश् ष्ट्रीट् इत्याख्यस्थानात् 'गुरुदासचट्टोपाध्याय एण्ड सन्स्' इत्येतैः प्रकाशिता। मूल्यं सार्धरूप्यक-द्वयम्। सेयं द्वितीयावृत्तिर्ग्रन्थस्य।

कस्य वा न विदितः साहित्यकुसुमावचायव्यापृतस्य काव्योद्यानषट्-पदायमानः कविभूषणः श्रीमान् पूर्णचन्द्र-दे उद्भटसागरमहोदयः। अनेन हि विदुषा सर्वत आदायादाय रसवन्ति पद्यान्यद्यत्वे काव्यरसपिपासूनामत उपदीक्रियन्त इति, ननु विदितमेव प्रायेण सर्वेषामक्षरमुखाणाम्।

यानि तावदुद्भटपद्यान्यद्य यावत् कविभूषणमहोदयेन संगृहीतानि तेषां संख्या तु परःसहस्रेति वक्तुं शक्यते। तेषु प्रायेण पञ्चभिः श्लोक-शतैरियं परीक्ष्यमाणा माला तेन ग्रथिता। न केवलमन्यदीयादुपवनात्, परं निजाननकाननादपि कुसुमान्युच्चित्योच्चित्य कविभूषणमहोदयेनात्र सन्निवेशितानि दृश्यन्ते। उत्सर्गपत्रे उत्सर्जनीयस्य विंशत्यधिकशतवर्ष-मायुराशासानेन ग्रन्थकृता गणिताश्रितं यत् खलु पद्यं लिखितं तत्तु परमेव वैचित्र्यं धत्त इति तदिदमुल्लिख्यते—

इष्टं खचन्द्रगुणितं शशिना समेतं रामान्वितं युगयुतं निहतं शरेण।
यच्छेषितं शरकरेण वसुग्रमब्दं त्वं जीव हे वसुवर ! स्वजनैः पृथिव्याम्॥

या कश्चन संख्यैव यथोक्तरीत्या परिकर्मिता विंशत्यधिकशतात्मना परिणमत इत्यस्य वैचित्र्यम्। यत्र तावत् कवेः स्वयं लिखितं पद्यमेवंताद्दशं वैचित्र्यं पुष्णाति, तत्र का कथा बुधवृन्दवन्दितचरणानां प्राचीनक-विप्रजापतीनां श्लोकस्येत्यनुभवन्त्वस्य ग्रन्थस्य माधुर्यं विद्वद्वर्याः। अस्तिचात्र वङ्गाक्षरमुद्रिते ग्रन्थे ग्रन्थकृत्कृतो वङ्गानुवादो माधुर्येण मूलातिशायी वङ्गीयानां महदुपकरिष्यति। मुद्रणं कागदञ्च मनोहरे इति चरत्वित्यं पञ्चशती सप्तशतीव वङ्गीयानां विदुषां सदन-वदनयो-रित्याशास्महे।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| October, 1937. | १८५९-शकीये आश्विने<br>२०श-वर्षस्य ६ष्ठ-संख्या | Vol. XX, No. 6 |
|---|---|---|

## जातितत्त्वम्

(२)

श्रीवैखानसे भगवद्धर्मशास्त्रे महर्षिमरीचिप्रणीते विमानार्चनकल्पे प्रायश्चित्तप्रकरणेऽप्यस्पृश्यानां मन्दिरप्रवेशनं प्रायश्चित्तनिमित्तमिति व्यवस्थापितम्। तद्यथा—

"अथास्पृश्यस्पर्शने प्रायश्चित्तं वक्ष्ये। मूषक-सर्प-कृकलास-मण्डूक-मार्जार-नकुलादिषु गर्भागारं प्रविष्टेषु विण्मूत्रविसर्जने च तद् व्यपोह्य पञ्चगव्यैरापोहिष्ठादिना प्रोक्षयेत, तेषु ध्रुवमारूढेषु विण्मूत्रविसर्जने च क्षिप्रं वस्त्रेण शोधयित्वा शुद्ध्यर्थं कुशेन मार्जयित्वा कुशोदकेन "आपो-हिरण्य-पवमानैः" प्रोक्ष्याचयेत्।

सूतिकोदक्या-रजक-ध्वजाद्यन्त्यजातिभिः प्रथमावरणे प्रविष्टे परिषद्देवतानामर्चास्थाने स्पृष्टे प्रविष्टे च दर्भोल्केनोद्दीप्य वास्तुस्नपनोक्तमन्त्रैः पञ्चगव्यप्रोक्षणं पुण्याहं च कुर्यात्। नित्याग्नौ दौवारिकमन्त्रं द्वारपालकमन्त्रं वैष्णवं च जुहुयात्। बाह्यावरणस्य संमार्जनोपलेपन-प्रोक्षणैः शुद्धिर्भवति। तेष्वर्चनाकाले वा दृष्टेषु देवं पञ्चगव्येनाभिषिच्य शुद्धोदकैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य पूर्ववद् हुत्वाऽर्चयेत्।

आलयाभ्यन्तरे प्रविष्टे तत्स्पृष्टहविर्निवेदने च द्रव्यं यथाविधि शोधयित्वा वास्तुहोमं हुत्वा पर्यग्नि-पञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्य नित्याग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं रौद्रं सौम्यं ब्राह्मं श्रीसूक्तं महीसूक्तं च हुत्वा ब्राह्मणान् भोजयेत्। ध्रुव-बेर-कौतुकादिषु स्पृष्टेषु पूर्ववत् शुद्धिं कृत्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्याब्जाग्नौ महाशान्तिं कृत्वा पुनः प्रतिष्ठां कारयेत्। शूद्राद्यनुलोमस्पृष्टहविर्निवेदने देवं पञ्चगव्यैः शुद्धोदकैश्चाभिषिच्य पुण्याहं वाचयेत्।

पञ्चपातकैश्चण्डालाद्यैश्चालये प्रविष्टे तत्स्पृष्टहविर्निवेदने च सप्ताहं महाशान्तिं हुत्वाऽऽलयमभ्युक्ष्य पुनः प्रतिष्ठां कारयेत्। ध्रुव-बेर-कौतुकादिषु स्पृष्टेषु पूर्ववत् शुद्धिं कृत्वा सप्ताहं महाशान्तिं हुत्वा वित्तानुसारेण कलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्। पतिते गर्भगृहे प्रविष्टे वास्तुशुद्धिं कृत्वा महाशान्तिं हुत्वाऽर्चयेत्॥ एतेषु प्रथमावरणे द्वितीयावरणे वा नैरन्तर्येण संचरत्सु मासेऽतीते मासमेकं महाशान्तिं हुत्वा कर्षणादि पुनः संस्कारं कृत्वा महाप्रतिष्ठां कारयेत्। तेषु प्रासादाभ्यन्तरे बाह्ये च संचरत्सु संवत्सरेऽतीतेऽर्चनादि संत्यज्य कौतुकादिरक्षणं कृत्वा गर्भागारादिसप्तप्राकारेषु गा वासयित्वा मासेऽतीते सर्वत्र शुद्धिं कारयित्वा मासत्रयं महाशान्तिं हुत्वा कर्षणादि पुनः संस्कारं कृत्वा बालालयं संकल्प्य जलाधिवासादीनि कारयित्वा बिम्बशुद्धिं कृत्वाऽशीत्यधिकसहस्रकलशैः संस्नाप्य ब्राह्मणान् भोजयित्वा वैष्णवान् संपूज्य देवं बालालये प्रतिष्ठाप्यालयादिषु सर्वत्र नवीकरणं कृत्वा महाप्रतिष्ठां कारयेत्। तैस्संसर्गिणा स्पर्शे सूतिकादीनामुक्तं प्रायश्चित्तं कारयेत्, तत्संसर्गिणां स्पर्शे स्नपनादिना शुद्ध्यति। तत्संसर्गिणां दोषो नास्ति। आशौचिद्विजस्पृष्टहविर्निवेदने चैकाहं महाशान्तिं हुत्वा शुद्धोदकैरभिषिच्य पुण्याहं वाचयित्वा पूर्ववदर्चयेत्। ध्रुव-बेर-कौतुकादिषु संस्पृष्टेषु पूर्ववन्महाशान्तिं हुत्वा पुनः स्थापनं कारयेत्। आलयाद् बाह्ये सर्वत्र प्रविष्टे गौरवं लाघवं च ज्ञात्वा समुद्दीव कारयेत्। खद्योत-पक्षिजाति-

प्रवेशे बिम्बे स्पृष्टे पूर्ववत् पर्यग्नि-गव्याभ्यां शोधयित्वा देवं शुद्धोदकैरभिषिच्य प्रोक्षणैः प्रोक्ष्य नित्याग्नौ चुल्यां वा वैष्णवं जुहुयात्। तत्समीपस्थान् बिम्बादीन् पूर्ववत् संशोध्य शुद्धोदकैः संस्नाप्य पुण्याहं वाचयित्वा पूर्ववत् होमं जुहुयात्। पूर्वोक्तदेशेषु मनुष्याणां श्व-कुक्कुटादीनां च च्छेदने ताडने रुधिरस्रावं मृतादौ संभूते तद् व्यपोह्य तद्देशशुद्धिं कृत्वा वास्तुहोमं हुत्वा देवं सप्तभिः कलशैः संस्नाप्य तद्दोषशमनार्थं महाशान्तिं हुत्वा पूर्ववदभ्यर्च्य प्रतिष्ठां कारयेत्, हविर्निवेदयेदि"ति।

तत्रैव बालालयविधिप्रसङ्गेऽपि "चण्डालाद्यस्पृश्यस्पृष्टे प्रविष्टे वाऽचिरेण देवं बालालये प्रतिष्ठापयेत्" इत्यस्पृश्यप्रवेशो बालालयनिमित्तमिति प्रतिपादितम्। बालालयेऽर्च्यमानेऽपि स्थानसंकटे चण्डालाद्यशुच्यधिष्ठिते नद्यादिभिः स्थाननाशे वा सति पुनर्बालालयान्तरविधानमप्यत्रानुसन्धेयम्।

अद्भुतशान्तिप्रकरणे—"अद्भुतेषु दृष्टेषु सद्यः शान्तिं कुर्यात्, अन्यथा कर्त्राराधकयोर्ग्रामस्य च महद्भयं राज्ञो राष्ट्रस्य क्षोभश्च जायते। तस्मात् सर्वप्रयत्नेन शान्तिमारभेत" इत्युपक्रम्य—अद्भुतानां त्रैविध्यं दिव्यान्तरिक्षभौमभेदेन संगृह्य, भौमानां चर-स्थिरभावादनेकत्वं निरूप्य, स्थिरेषु प्रतिमारोदन-हसन-जल्पन-परिवर्तन-स्वेद-रुधिरस्राव-ज्वलनादिमध्ये प्रतिलोमपतित-पाषण्डान्त्यजाति-शृगालादिवर्गास्पृश्यस्पर्शन-प्रवेशनादिकमपि ग्रामराज-राज्यादिविपत्तिनिदानमद्भुतमिति प्रतिपादितम्।

अयमत्रानुसन्धेयो विशेषः—यत् पूर्वोक्तानामद्भुतानां स्थानविशेषसम्बन्धेन रोगविशेषहेतुत्वम्। तद्यथा—तेषु बेर-पीठ-गर्भगृहभवानि राजराष्ट्रविनाशकारणानि, विशेषेण कर्त्राराधकयोश्च। प्रासादोत्पन्नानि क्षत्रियस्य, प्रथमावरणे वैश्यजातीनां मन्त्रिपुरोहितस्य माण्डलिकानां च भयावहम्, प्राणपीडादिभयप्रदं च। आस्थानमण्डप-सभामण्डप-राजवैश्यप्राङ्गण-क्रीडास्थान-महानसाचार्य-यजमानादि सर्वेतरवर्ण-वैश्य-चैत्यवृक्षादिषु संभूतानां फलानि विभागेन विज्ञेयानि॥ तत्र भौमेषु देवबेराचार्यपीठगर्भगृहाभ्यन्तरेषूत्पन्नेषूत्पन्ना दोषा उत्तमोत्तमाः, प्रथमावरणे मध्यमाः,

शेषेष्वधमाः, इत्यस्पृश्यस्पर्शनप्रवेशनादीनां यद्यपि प्रथमावरणे मध्यमदोषत्वमेव ; तथाप्यस्पृश्यप्रवेशने शुद्धिं कृत्वा शान्तिं समाचरेदिति प्रायश्चित्तीयत्वं व्यवस्थापितमेत्र ॥

प्रतिष्ठाप्रायश्चित्तप्रकरणेऽपि—अस्पृश्यस्पृष्टे बिम्बे स्नपनोक्तप्रकारेण स्नपनं कृत्वा पूर्ववत् प्रायश्चित्तं कुर्यात् इति प्रतिष्ठातः पूर्वं तक्षादिस्पर्शनादिप्रायश्चित्तं प्रतिपादितम्। इदं तु तदेव मन्दिरबाह्यबिम्बविषयमिति मन्तव्यम्।

पूजाकाले—"वेददूषक-पाषण्ड-पापरोगान्वितानां प्रतिलोमान्त्यजातीनां च दर्शने ब्राह्मं वैष्णवं रौद्रमाग्नेयं च हुत्वाऽर्चयेत्" इत्यस्पृश्यदर्शनमपि प्रायश्चित्तनिमित्तमिति प्रतिपादितम्।

अर्चानानवनीतेऽपि सेवाप्रकरण इदं विवेचितमेव—यद् अस्पृश्यानां देवालयप्रवेशनं न योग्यम्, यतस्तेषां गोपुरदर्शनमेव वैधमिति। तदुक्तम्—

गर्भागारे च सेवार्थं वैखानसकुलोद्भवः।
स्वाध्यायमात्रविप्राणामर्धमण्टपसेवितम् ॥
तपस्विनां यतीनां च महामण्टपसेवितम्।
राजराजकुलस्त्रीणां नृत्यमण्टपसेवितम् ॥
वैश्यशूद्रानुलोमादेर्बाह्यमण्टपसेवितम्।
अन्येषां विष्णुभक्तानां गोपुरं तु विधीयते ॥
"प्रतिलोमान्त्यजातीनां स्थूपिं दृष्ट्वा समाचरेत्।"
"अर्चकः सन्निधौ तिष्ठेत् परिचारोऽर्धमण्टपे ॥
अन्येषां मण्टपे चैव अनुलोमास्तु दूरतः।
दैविके गर्भगेहेऽन्यद्विजस्यापि प्रवेशने ॥
मृद्भाण्डानि परित्यज्य पुनः पुण्याहमाचरेत्।"
गर्भालये प्रविष्टे तु सूत्रान्तरद्विजातिभिः ॥
अष्टोत्तरशतैश्चैव कलशैरभिषेचयेत्।
प्रमादात् स्पर्शने चैव संप्रोक्षणमथाचरेत् ॥

अज्ञानादर्चने चैव प्रतिष्ठां पुनराचरेत् ।
आस्थानमण्टपादौ तु यदा संपूज्यते हरिः ॥
चतुर्वर्णा यथेष्टं तु सेवन्ते च महोत्सवे ।
प्रभुर्भक्तपराधीनो नित्यमाराधयेद्धरिम् ।
विमानमथवा तस्य पुरं गोपुरमेव वा ॥ इति ।

"देवालयसमीपस्थान देवसेवार्थमागतान् । चण्डालान पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ।" "विष्णवालयसमीपस्थान विष्णुसेवार्थमागतान्न चण्डालान पतितान् वापि स्पृष्ट्वा न स्नानमाचरेत् ।" इति वचने तूत्सवकाल-मात्रे गर्भगृहादौ पिहिते देवालयसमीपस्थानामेवास्पृश्यतां निषेधतः । "उत्सवे वासुदेवस्य यः स्नाति स्पर्शशङ्कया । स्वर्गस्थाः पितरस्तस्य पतन्ति नरकेऽशुचौ" । इति भृगुवचनैकवाक्यता नान्यथोपपद्यते । उत्सव-प्रकरणगते हीमे वचने । "उत्सवे देवेशं ये सेवन्ते, ते सर्वे पदे पदे यज्ञफलं लभेरन्" इति सर्वसाधारण्येनोत्सवे कौतुकदर्शनाधिकारं भृग्वादयो मन्यन्ते, तस्मात् अस्पृश्यस्पर्शनं न दोषाय भवेत्" इति विमानार्चनकल्पगतं प्रमाणमप्यत एव व्याख्यातम् ।

"शूद्रानुलोमानीतानि अपक्वानि निवेदयेत्, प्रतिलोमानीतानि तानि सर्वाणि वर्जयेत्" इत्युत्सवावसरे देवसेवार्थमागतानां प्रतिलोमानां स्पर्शेन फलादीनामपि निवेदनायोग्यत्वं विमानार्चनकल्पे प्रतिपाद्यते ।

अयमेवार्थः पाञ्चरात्रागमानुसारिपाद्मतन्त्रेऽपि प्रतिपाद्यते—

रोदनं हसनं जल्पो जल्पनं परिवर्तनम् ।
स्वेदश्च रुधिरस्रावः क्रिमि-कीटादिसंभवः ॥
प्रतिमायां भवेच्चेत्तु रक्तस्त्रीदर्शनं तथा ।
पाषण्ड-प्रतिलोमान्त्यजातिभिः पतितैस्तथा ॥
शृगालादिभिरस्पृश्यैः स्पर्शने च प्रवेशने ।
प्रवर्तने चोपसर्पे पर्ण-पुष्प-फलेषु च ॥

शाखादौ विपरीतस्य दर्शनं च विशेषतः ।
रक्तस्रावो जलस्रावश्चाद्भुतानि स्थिरेषु तु ॥
तेषु गर्भगृहे चैव पीठे चैव भवानि तु ।
राज्ञो राष्ट्रस्य विप्राणां नाशकानि विशेषतः ॥
कर्त्राराधकयोर्नाश इति शातातपोऽब्रवीत् ।
प्रासादनानि राज्ञां स्युः प्रासादेऽपि विशेषतः ॥
अधिष्ठाने च पादे च प्रस्तरे च गलेऽपि च ।
शिखरे च भवानि स्युः क्षत्रियाणां क्रमेण तु ॥
अभिषेकस्य योग्यस्य युवराजस्य चैव हि ।
अभिषिक्तस्य सम्राजश्चात्याहितकराणि तु ॥
प्रथमावरणे वैश्यजातीनां मन्त्रिणां तथा ।
पुरोहितस्य तन्मण्डलाधिपानां महद्भयम् ॥
शूद्रजातिविपद्धेतु द्वितीयावरणादिषु ।
सस्यनाशो गजाश्वादिपशुनाशश्च जायते ॥
पुरोधसश्चाग्निकुण्डे ब्रह्मस्थाने द्विजन्मनाम् ।
रुद्रालये तु सर्वेषां नृपस्य तु गुहालये ॥
सेनेशानां विपत्तिस्स्याद्वक्रतुण्डालये तथा ।
स्वालये राजपत्नीनां दुर्गस्थानेऽन्ययोषिताम् ॥
मातृस्थानेऽन्त्यजातीनामोषधीनां कुबेरके ।
नृपवाहनशास्त्रोपजीविनां भास्करालये ॥
अन्यदेवालये तत्तद्भक्तानामपि लक्षयेत् ।
आस्थानमण्डप-सभामण्डप-प्राङ्गणेषु च ॥
महानसे नृपावासे क्रीडास्थाने विशेषतः ।
आचार्ययजमानादिपदार्थिनिलयेषु च ॥
चैत्यवृक्षादिषूद्भूता रक्तक्षीदर्शनादयः ।
वल्मीकाद्याश्च फलदास्तत्तद्दिश्युक्तमार्गतः ॥

प्राकाराभ्यन्तरे प्राप्ते प्रमादादशुभे सति ।
अस्पृश्यागमने तत्र चण्डालाद्यैः प्रवेशने ॥
श्व-कुक्कुट-वराहोष्ट्र-गर्दभानां प्रवेशने ।
उदक्यया सूतिकया पाषण्डाद्यैरथापि वा ॥
कुण्ड-गोल-व्रतभ्रष्ट-तुरुष्कादिप्रवेशने ।
अन्यसूत्रिद्विजैः स्पृष्टे मोहादज्ञानतोऽपि वा ॥
महावातहते बिम्बे संसिक्ते वर्षबिन्दुभिः ।
विण्मूत्ररुधिरस्रावे बहुजल्पे च मैथुने ॥
एवमादिनिमित्ते तु जलसंप्रोक्षणं चरेत् ।
नैवासंप्रोक्षिते बिम्बे हरिर्वसति निश्चयः ॥
तस्माद् बिम्बविशुद्ध्यर्थं संप्रोक्ष्यैव समर्चयेत् ।
दोषाधिक्ये समुत्पन्ने लघुसंप्रोक्षणं चरेत् ॥
राष्ट्रक्षोभे च दुर्भिक्षे तन्त्रसंकरदूषणे ।
शूद्रैर्वाऽथानुलोमैर्वा पाषण्डैर्भ्रमितैरपि ॥
उदक्यया सूतिकया पतितैर्वाऽथ पातकैः ।
चण्डालाद्यैः प्रविष्टे च गर्भागारे विशेषतः ॥
सूतैर्वा कुण्डगोलाद्यैस्तथा देवलकादिभिः ।
श्वकुक्कुटवराहाद्यैः प्रविष्टे गार्दभादिभिः ॥
उलूक-गृध्र-काकाद्यैः प्रविष्टेऽन्तर्गृहे तथा ।
तुरुष्काद्यैः प्रविष्टे वा शुक्रशोणितयोरपि ॥
विण्मूत्रादेर्विसर्गे वा गर्भागारेऽर्धमण्डपे ।
त्र्यहादूर्ध्वं विहीने तु पूजने दीपवर्जने ॥
एकरात्रमतिक्रम्य देवे ग्रामान्तरे स्थिते ।
अग्निदाहेऽशनीपाते गर्भागारेऽर्धमण्डपे ॥
अन्यसूत्र्यर्चिते बिम्बे स्पृष्टे वा बुद्धिपूर्वकम् ।
अन्यैरनुक्तैर्दोषैश्च लघुसंप्रोक्षणं चरेत् ॥

चण्डालाद्यन्त्यजातीनां मरणे वा विशेषतः ।
शूद्रैर्वाऽथानुलोमैर्वा पाषण्डैः पतितादिभिः ॥
संस्पृष्टे वैष्णवे बिम्बे तुरुष्काद्यैर्मलिम्लुचैः ।
स्पृष्टे चण्डालकाद्यैर्वा महापातकदूषितैः ॥
कुण्ड-गोलक-सूताद्यैर्दीक्षितैरर्चने कृते ।
अनुक्तानि च सर्वाणि दुरितान्यद्भुतानि च ॥
दृष्ट्वा तु यजमानश्च ये तत्परिसरे जनाः ।
ग्रामस्थिता जनाश्चैव राजा राष्ट्रं च यत्नतः ॥
ज्ञात्वा शास्त्रोक्तविधिना दोषजं भक्तितः फलम् ।
महासंप्रोक्षणं कुर्यान्महादोषापनुत्तये ॥
महादोषेषु सर्वत्र महाशान्तिर्विधीयते ।
पूर्वं स्थापितबिम्बस्य न साधारणहेतुना ।
स्यात्पुनः स्थापनं तस्मान्महासंप्रोक्षणं चरेत् ॥
महासंप्रोक्षणविधेर्नूतनस्थापनस्य च ।
स्वल्पो भेद इति प्रोक्तमृषिभिः काश्यपादिभिः ॥" इति ।

सर्वेऽपीमेऽर्थाः केरलतन्त्रग्रन्थविष्णुसंहिता-तन्त्रसमुच्चयादावपि प्रतिपादिताः । ते यथा—

क्षेत्रे मृतिर्जननमङ्कुणमण्टपादौ मूत्रासृगादिपतनं पतितादिवेशः ।
सोलूक-गृध्र-करट-श्व-खरोष्ट्र-कोल-क्रोष्ट्रक्ष-कुण्डुभपुरस्सरगर्भवेशः ॥
बिम्बस्य पातचलनादिरथ प्रदाह स्वेद-प्ररोद-हसितानि तथाऽद्भुतानि ।
छत्राक-नाकु-मधुकादिसमुद्गमाश्च पूजाविलुप्तिरपि चासति दिष्टदोषे ॥
क्षुद्रान्यमन्त्रयजनं प्रतिषिद्धदुष्टपुष्पादिपूजनमथो मरिचादिलेपः ।
एतानि तन्त्रकथितानि निमित्तकानि ज्ञेयानि तत्र गुरुलाघवमेद्भवन्ति ॥

"प्रासाद-देहहर्म्याणां चण्डाल-पतितादिषु ।
अतः प्रविष्टेषु तथा शुद्धिः स्यात् केन कर्मणा ॥"

"मनुष्याणां च पश्वादौ बहिर्मण्डलतो बहिः ।
जन्ममृत्यू तथा तत्र पुल्कसादिप्रवेशनम् ॥"
"द्वारास्त्वन्तर्मण्डलेऽथ प्रासादेषु च वेशनम् ।
पातक्याशौचिपाषण्डिवप्तॄणां रजकस्य च ॥
म्लेच्छानां तन्तुवायादिवर्णबाह्यजनस्य च ।
पुष्पिका-सूतिका-कारु-चण्डालानां क्रमाद्गुरु ॥"
"श्व-चोर-व्रात्य-पाषण्डि-चण्डालादिप्रवेशनम् ।
... ... ... ...
एते चान्ये च विज्ञेया उत्पाता बहुदोषदाः ॥"
"चण्डाल-पतितोदक्यासूतिकोन्मत्तकादिभिः ।
चौरैरशुचिभिर्व्रात्यैः पाषण्डैर्देवलैस्तथा ॥
प्रविष्टे पूजने स्पृष्टे द्रव्याणां स्पर्शने तथा ।
दोषाश्च बहुधा प्रोक्तास्तन्त्रेष्वेव पृथक् पृथक् ॥"
"चण्डालादिप्रवेशे तु प्रथमावरणे सति ।
वास्तुहोमं ततोऽर्धं वा शान्तिहोमं समाचरेत् ॥"

———

# गीर्वाणवाणीपरिचयः

[ निबन्धकः—वे, अनन्तनारायण-शास्त्री
श्रीभाण्डारकरतत्त्वज्ञानमन्दिरम्, पुना । ]

सहस्रनयनादीड्यः सहस्ररसनालयः ।
सहस्रपत्रगेशोऽव्यात्स सहस्रशिरा विभुः ॥

अस्ति सकलकलाकलापललामायिता, निखिलनिर्जरनिरन्तरनिषेव्यमाणा, नित्यनिरवद्यगुणगणगरिमा, निगमागमसम्पदुन्मेषपरिमुषितनिजयशोभूमा, विविधसुवर्णपदसुषमा कामितकामिजनतानवरतकृतप्रणामा, ब्राह्मी नाम वागादिमा ।

यामधीयानाश्चिरं चिरन्तनीं तन्वन्ति कवीशा दिशान्तरेषु भृशं निजयशोराशिम्, समाम्नायसमुदयपरिचयविचितविविधविषयास्तुष्यन्ति मनीषिणः यत्स्वरूपिणीः पुराणेतिहाससरससाहित्रीकलाः समाकलय्याकलङ्कितधियः संशोधयन्ति पुष्पन्धय इव मधुरमधूनि। यदधिश्रिताः श्रुतीः, विश्रम्भं परिश्रम्य शास्त्राणि च पोषणश्रद्धया सश्रीका हूणपरिश्रान्ता अपि विस्तृतिनिवेशनान्यारचयन्ति। यदुपगूढा च ब्रह्मविद्या विद्यावतां निगूहितमोहाशापिशाचिकानां चिरन्तनी चिरतरपरिचितावगतीनां नित्यं निरवद्यं च सुसमातनोति। तामेतां नितान्तसमेधितसमस्तमङ्गलां समभ्यस्य गीर्वाणकलां सकलमपि विन्देम प्रशस्तं शस्तम्। तां च सरस्वतीमुपसद्य गुरुवरान् सप्रश्रयमभ्युच्छ्रितभाषाकौशला लब्धन्यायनयशब्दाद्यागमसमूहा लब्धवर्णाः परमादरेण परिपालयन्ति कलाविदः। विदन्तोऽपि तादृशीं कलां श्रान्तश्रान्तशब्दाद्यागमा अपि स्वयं केचन कलाकोविदाः परिषत्स्वेव वादप्रतिवादगमनिकया सुधीमणीन् सुधाप्रचुरया गिरा नितरामानन्दयन्ति। चिरतरागमश्रान्ता अपि ते कथमपि न यथा प्रभवन्ति संभाषितुम्, यथा

स्वान् सरसविविधविषयोपदेशनैः शनैः शनैरपि सभासदाः समोदं सभाजयेयुः। केचन सरलसरसकविताकोविदा विदांकारयन्ति रयेण गीर्वाणगिरागौरवम्। रसिकतमानपि सदस्यान्सम्पाद्य सकौतुकं सम्मानयन्ति। अन्ये पुनः यथावद्विदितसर्वविद्या अपि विनीतन्यायादिनयमर्यादा अपि स्वात्मन्येव तादृशशास्त्रबोधितान् गूहयन्तः परेषां तोषसमुन्मेषाय तत्तत्कालोचितान् भावविशेषान्सतोऽसतोऽपि प्रचारयितुं प्रयतन्ते। अपरे च पुरातनपण्डितगणपरिपालितागमपरिपाटीर्विघटयन्तोऽपार्थयन्तश्च यथास्वमनीषं वित्तमेव निनीषन्ते मनीषिणंमन्याः। एते च नाकलयन्ति कलाकुशलानां धर्मशास्त्रादि हृद्यतमं वचनजातम्, नानुरुन्धते च तदनुरुद्धाचारनिकरान्। न वा स्वयमननुरुन्धाना अपि परान्परिहासपूरणपथाद्विपरिवर्तन्ते। न चात्मनः पूर्वेषां वा महितनिजमतमहिमानमवगन्तुमीहन्ते। किमिदमनर्थव्रातं यथातथमनवबुद्धबुधबोधितपथा धर्मपरिपन्थीति विदन्तोऽपि कलिमलाद्वा स्वप्रज्ञापरिपाकविकलेन वाऽन्येन वा केनापि हेतुना सावहेलं व्याकुलीकुर्वन्ति जगन्तीति महदिदं व्यसनपदं समपादि सुधियंमन्यमानैः। समीक्षध्वं सुदूरमपकृष्टाः स्मः स्पष्टतरोपदिष्टशिष्टाचारेभ्यः, नापि परेषां परितोऽपि दिशां परिहासमुखरितादसतोऽपथोऽपि भिया सति पथि परावर्तामहे। भवत्विदम्। नूनं विदितवेदितव्यानां वैदिकप्रकाण्डानामुपकण्ठमधीत्य विधिवत्सनातने पथि स्वयं प्रवृत्य परानपि सन्तः प्रवर्तयेयुः। अन्तर्वाणिमणिगणभणितगीर्वाणवाणीम् अनतिरिक्तशाब्दमर्यादमभ्यस्य परान् प्रवचनैः प्रबोधयेयुः, उतोपदेशरीत्या धर्मेतिहासपुराणेभ्यो धर्मपूगान्सोदाहरणमितरेभ्यो व्याचक्षीरन्। अद्यापि किल महर्षिगणभाषितवर्षितेषु सविमर्शं विचिन्वन्ति वैदिकं धर्मजातम्। द्वैपायनकृतमहाभारतपुराणादिषु समाम्नायप्रतिबिम्बितं कतीव विषयजातान्युपलभामहे। न नोऽविदितमपि व्यासोच्छिष्टमिदं जगत् इति। कत्यसंख्येयाः समाम्नायाः! कति च इतिहासपुराणादयः! कति वा सरसकविकवितापीयूषतरङ्गभङ्ग्यः! सर्वेऽप्येते काममधिश्रित्य भृशं प्रचकासति।

कां वा भाषामधिश्रित्य परान् परे पथि प्रवर्तयन्तः प्रथन्ते। सैव किल सरस्वती गीर्वाणसम्बन्धिनी पवित्रतमेति न संशयास्पदं विपश्चिद्-पश्चिमानाम्। अतो विदन्त इदं सर्वं मनसि चावधार्य सनातनधर्मसंरक्षण-स्मृतिमनुसरन्तः, परासदुक्तीः स्वोक्तिपरिपन्थिनीस्तिरस्कुर्वन्तः, स्वे स्वे धर्मपथे प्रवर्तमानाः, तत्र तत्रेतरानपि गैर्वाणीं वाणीं बोधयन्तः, तत्र तत्र गैर्वाणी-वाणीप्रचिचारयिषया सदांसि परिकल्पयन्तः, अनपशब्दम्, अनुलङ्घितमर्यादं लिखितपठनेन, यथायथं वाचा वा सधर्मविवेकं गीर्वाणवाणीमहिमानं निर्दिशन्तः, उपदेशनैस्सद्धर्माणां क्षणे क्षणे विस्तरयन्तः, "कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमि"त्यादिभगवद्वचनसमाहितधियः परिश्राम्यन्तु जगदुन्नत्यै। गीर्वाणवाणीपरिचयाचरितश्रुतिस्मृत्याचाराः, परोक्तधर्माभासांश्च सद्वी-सलिलैः प्रक्षालयन्तः, सर्वदा सर्वेषां क्षेममातनितुं प्रभवन्तु सुधियः इति। इत्यलं पल्लवितेन।

गीर्वाणवाणीं परिचित्य सन्तः परानपि च्छात्रगणान्विबोध्य।
परोक्तदुर्वादवचांसि हित्वा स्थित्वा स्वधर्मेषु सदा विभान्तु॥

# उपदेशपरम्परा

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटि-पीठाधीशानाम् ]

## पुण्य-पापे

### ( ४ )

वयमुदरपूरं भुञ्जानाः, पुत्रा बन्धवः इत्यादीन् विना परिश्रमं भोजयितुं गृहस्थाश्रमे कानिचन कर्माणि कुर्वन्तो वर्तामहे। अस्माकं मानं संरक्षितुं वस्त्राणि, क्षुधां निरसितुमाहारः, वसितुमावसथः, पुत्रादीन् पोषयितुं समुचित-सौकर्याणि च सुसंपन्नानि स्युः, इति किञ्चिद् लौकिकं कार्यमिव, सर्वलोक-गमनेऽपि सुखेनावस्थातुं किञ्चित् कर्तुमर्हामः। तदेव कर्म धर्मो नाम।

कश्चन सन्देह इदानीमुदेति। उदरपूर्तिकार्ये एव सर्वोऽपि कालो व्ययितो गच्छति खलु! धर्मं कर्तुमवकाश एव नास्ति। एवं कश्चन क्लेशः प्रतिभातीति। एवं वदन्तस्सर्वेऽपि धनमार्जितुमात्मनः सर्वं समयं यापयन्ति चेदपि न दोषः। व्यर्थेष्वालापेषु, चिन्तनेषु, परिहासेषु, उत्साहेषु च बहुरेव समयो व्यर्थं गच्छति। धनार्जनसमयं गणयित्वा परिशिष्टं समयं व्यर्थमयापयन्त आत्मलाभकरं कर्म कर्तुमर्हन्ति। संकल्पे सत्यवसरो न, न लभ्येत। विद्युच्छकटेषु बाष्पशकटेषु च गच्छन्तो भगवन्नाम कीर्तयन्त एव गन्तुं शक्नुवन्ति। इदानीमार्जिते धने एकापि काकिण्यस्माकमेत-च्छरीरत्यागे सति लोकान्तर उपकरोति वा? तेषु लोकेषु विनिमययोग्यं धनं भगवन्नामस्मरणमेव। ततस्तन् नियतं कीर्तयितुमर्हामः। अवसरो नास्तीति मिथ्या भाषणमेव।

वयं—चतुर्भिः प्रकारैर्धर्मं कुर्वाणा भवेम—शरीरेण, वाचा, मनसा, धनेन च कर्तुमर्हामः। धनमात्मलाभार्थं विनियोक्तुमर्हामः। दानं नाम धर्मं कर्तुमर्हामः। दरिद्रावस्थायां कथं दानधर्मोऽनुष्ठीयतामिति कश्चन सन्देहः समुदेति। दारिद्र्येऽपि व्ययं संकुच्यैकापि काणिका धर्मे विनियोक्तुं

शक्येत। प्रत्यहमेकैकोऽपि एकां काणिकाम्, आणक-तुरीयांशं वा दातुं संकल्पयतु।

निद्रायाम्, गल्पकथासु, परिहसनेषु चैकैकस्यापि बहुरेव समयो व्ययते। तानि निवर्त्य भगवतश्चरणे ध्यातुमर्हन्ति। अयमेव आयः। अन्यानि सर्वाणि व्यय एव। ते सर्वे मांसार्थं व्ययीक्रियमाणाः समयाः। शरीरं मांसमेव किल, तत्सम्बन्धेन व्ययो मांसायैव खलु व्ययः।

वयं बहूनि पापान्यकरवामेति मा बिभियुः। अस्मत्समाना एव स्थिता बहव एव भागवता अभूवन्। अस्मत्तोऽपि महापातकिनोऽपि उन्नतं पदं प्राप्ता वर्तन्ते। पापिनो रक्षतीत्येव भगवतो महिमा भवति। ततो वयं धैर्येण स्थातुमर्हामः।

भगवद्गीतायां श्रीकृष्णोऽर्जुनं वदति—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि॥

गीता—३६॥

इति। लोके सर्वेभ्यः पापिभ्योऽपि महापातकी चेदपि पापरूपं सागरं ज्ञान-नाम्ना प्लवेन त्वं तरिष्यसीति वदति।

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

गीता—१८७७॥

अहं पापमकरवमिति मा रोदीः, अहं त्वां सर्वेभ्यः पापेभ्यो मोचयामि। ततस्त्वमधीरो मा भव, मा रोदीः इति भगवान् वदति।

वयं कथं पापं कुर्महे इतीदं विमृश्य जानीम। वाचा, मनसा, शरीरेण धनेन च वयं पापं कुर्महे। मनसा दुष्टानि चिन्तनानि स्मारं स्मारं पापं कुर्मः। वाचा सोत्साहं हासं हासं पापं कुर्महे। देहेन निन्द्यानि कर्माणि कारं कारं पापं तनुमः। वयमेतानि पापानि मा कार्ष्मेति संकल्पयन्तोऽपि तथा स्थातुं नेश्महे। पिशाच इव पापाचरणप्रकृतिरस्मान् ग्राहं ग्राहं हरति। सर्वदाऽस्मान् परित एव भ्रमति। बहोः कालात् पापं

कुर्वाणा वर्तामहे। तत एव सा प्रकृतिर्न जहाति। तां प्रकृतिं कथमपसारयतु ?

येन पथा वयं पापं कुर्महे, तेनैव पथा प्रकृतिं परिवर्तयितुमर्हामः। पूर्वोक्तेषु चतुर्षु मार्गेष्वेव तं प्रयत्नं कर्तुमर्हामः।

"धर्मेण पापमपनुदति" ( महानारायणोपनिषत् ) इति वेदवाक्यं पापं धर्मेण निवर्तयेति वदति। धर्मो नाम कः ? अधर्मस्य साक्षात् प्रतिद्वन्द्वी धर्मः। दोषस्य विरोधी गुणः, स एव धर्मः। दोषः कः ? अस्मान् पापं कुरु पापं कुरु इति यः प्रेरयति, स एव। कस्यचन कर्मणः कामतः करणं पापम्। स कामोऽस्मान प्रसभमाकृष्य पापं कारयति।

पापं नाम किम् ? पुण्यं नाम किम् ? यद् वयं मा कर्तुमर्हाम इति मनसः प्रतिभाति, तदेव पापम्। यस्याचरणं गुण इति प्रतिभाति, तदेव पुण्यम्। मनुष्यः सर्वदा पुण्यस्य फलमेवाभिलषति।

पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः।
न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः॥

पुण्यस्य फलं विना क्लेशं सुखेन जीवनम्। तदेव प्रयोजनं सर्वेऽप्यभिलषन्ति। तेन मनः शान्तिमधिगच्छति। आनन्दरससमुदेति। अस्माकं पुण्यस्य प्रयोजनेऽभिलाष एव वर्तते। अस्माकं कर्मसु बहुशः पापकर्माण्येव वर्तन्ते। अस्माकं पापाचरणस्यास्माकमन्तःकरणमेव साक्षि वर्तते। पुण्यस्याचरण आलस्यमुदेति। पापकर्मणामनुष्ठाने कोऽप्युत्साहो वर्तते।

पापस्य फलं दुःखम्। इमानि मा कुरु इत्यस्माकमन्तःकरणं साक्षि यानि वारयति, तानि पापकर्माणि। इदं मा कर्तव्यमिति चिन्तयन्ति, परंतु तदाचरणं न परित्यजन्ति।

अस्मिन् लोके जातानां सर्वेषां सुख इच्छा वर्तते, पुण्यमेव कर्तव्यमिति सर्वे संकल्पयन्ति। पापमेव न कर्तव्यमित्यपि जानन्त्येव। परं तु तैः क्रियमाणेषु शतस्याशीत्यंशाः पापान्येव, विंशत्यंशा एव पुण्यानि। एतच्चिन्तने महती लीलैव भाति। पापमपेक्षितमिति नैव वयमभिलषामः, तथापि

पापभार उपर्युपचीयमान एव वर्तते। अस्य तु कारणं न ज्ञायते। कुत एवम्? इति प्रश्नं न समाधातुं पारयन्ति। बहुकालेभ्यः पूर्वमेवार्जुनोऽस्मान् सर्वानपि समुद्दिश्य भगवन्तं पृष्ट्वोत्तरं प्राप्तवान्।

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥

गीता—३७

मनुष्यः पापं करोति। तत् कर्तुमनिच्छन्नपि स करोति। तं को वा पापं कारयति? बलात्कृत्य पापं कुरु पापं कुरु इति ब्रुवाणस्स पुरुषः कः? पापं न कर्तव्यमित्येव संकल्पः। पापेऽणुमात्रमपि नेच्छा वर्तते। परंतु तं पापं कारयन् पुरुषः कः? इत्यपृच्छदर्जुनः।

भगवान् तत्समाहितवानेव।

काम एषः क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥

गीता—३७

मनुष्यस्यैकं वस्त्वपेक्षितमित्यभिलाषो वर्तते। तत् प्राप्तुं प्रयतते। न्यायेन मार्गेण यदि न लभ्येत, अन्यायेन मार्गेण प्रयतेत। तदेव पापम्। तस्य पापस्य कारणम्—अपेक्षितमित्यभिलापः। तमेव काम इति वदेयुः। सोऽस्माकमेकः शत्रुः, अपर एको वर्तते। स क्रोधः, कोपः। एकस्मिन् वस्तुन्यभिलषिते, तस्मिन्नप्राप्ते सति तद्विरोधिषु क्रोध उदेति। अभिलषितस्य वस्तुनोऽलाभे क्रोधो भवति। कामः प्रतिहतः कोपो भवति। अत उभे अप्येकत्वेनैव व्यवहर्तुमर्हामः।

"कामस्स एष प्रतिहतः केनचित् क्रोधत्वेन परिणमते।" (गीता-भाष्यम्)। एकस्मिन् समये कामरूपमेव, कालान्तरे क्रोधरूपं भवति। कन्दुकं भित्तौ प्रक्षिपामः। तदानीं तद् परावृत्यागच्छति। प्रक्षेपावसरे तत् काम इव भवति, परावृत्यागमने क्रोध इव भवति। कामे पूर्यमाणे कोपो भवतीत्यदो वाक्यं भवति। कामः केनापि न तृप्यते। यावदपि

भुज्यते, तस्मै नालम्। वयं क्षुधायामाहारं दद्मश्चेत्, तृप्तिर्भवति। कामः काम्यमानेषु सर्वेषु दत्तेष्वपि न शाम्यति। तद्वस्तु लब्धमेवेति न शान्तिमेति। कामो वह्निरिव। वह्निराहारेषु दीयमानेषु दीयमानेषु भूय एवाभिवर्धते। तद्वदेव कामोऽपि। आहारं प्रदाय प्रशमनमग्नेरपि न संभवति। अग्नेः कृष्णवर्त्मा इति किञ्चिद् नामास्ति। अग्निर्यत्र यत्र गच्छति, पश्चात् काष्ण्यं कुर्वन्नेव गच्छति। कामोऽपि तथैव। प्रथमं सन्तोषो भवति। तत उपर्युपरि न लब्धमिति रोदनं कारयति। आहारे दीयमाने कामो विकसति। कामो नाम महान् बुभुक्षितः। ततो महाशन इति वर्ण्यते।

क्रोधः, कामोऽकार्यकारी यदा परावृत्यागच्छति, तदा समुदेति। स कामादपि महीयान्। इदं नैषधे वर्णितमस्ति।

कलिरागच्छति। तस्य सेनापतयः कामः, क्रोध इत्यादयः सहैवागच्छन्ति। स्तुतिपाठका एकैकस्य सेनापतेर्महिमानं संगृह्य वदन्ति। क्रोधमधिकृत्याप्युक्तमस्ति—

'दुर्गं कामाशुगेनापि दुर्लङ्घ्यमवलम्ब्य यः।
दुर्वासोहृदयं लोकान् सेन्द्रानपि दिधक्षति ॥ इति।

[ नैषधे-१२-२१ ]

कामस्य दुष्प्रवेशो देशो नास्तीति वदन्ति। कामो महान् वीरः। परं तु क्रोधस्ततोऽपि प्रबलः। क्रोधस्य दुर्गे कामस्य बाणो न प्रविशेत्। तत्रावतिष्ठमान इन्द्रादिदेवानपि विजयेयेति क्रोधो वदेत्। तत्तु दुर्गं किम्? दुर्वाससो हृदयमेव तत्। तदन्तः कामस्य बाणो न प्रविशति।

अस्माभिः क्रियमाणानां बहूनां पापकर्मणामपि काम-क्रोधावेव हेतू भवतः। रजोगुणाद् इमौ समुद्भवतः। महाशनः कामः, महापापः क्रोधः। इमावेवास्माकं वैरिणौ।

विना कामं किञ्चन कर्म क्रियते चेत्, तदा पापं न भवति। अभिलष्य कस्यचन करणमेव पापम्। पापमभ्यासमभ्यासं सा प्रकृतिर्बहोः कालात् तद्वासनावासिता वर्तते, इति हेतोः सांप्रतमपि पापं कारयति।

त्रिभिरपि करणैः पापमाचरामः। मनसा बहुविधानि दुश्चिन्तनानि संभवन्ति। तानि पापानि। वाचाऽनृतवदनप्रभृतीनि पापान्याचरामः। केवलमस्माकं भगवान् वाचं ददाति स्म, किमर्थम्? हृदयस्थं वदतु, इति ददाति स्म। तथाऽकृत्वाऽनृतमुच्यते चेत्, वाचोदानमस्य न सप्रयोजनम्, इति व्यवहारासमर्थं पशुरूपं तं पश्चात् सृजेत्। अस्माकं वाचमददात् सत्यं वक्तुम्, भगवन्नाम संकीर्तयितुं चैव।

मनसा, वाचा, कायेन, धनेनेति चतुर्भिरपि पापं कुर्मः। अभिलष्य किञ्चन कर्म क्रियते चेत्, पापं समुद्भवति। पूर्वोक्तैश्चतुर्भिरपि समीचीनानि कर्माणि कर्तुमर्हामः। सूत्रं यथावेष्टयामः, तथैव मोचयितुमर्हामः। यैश्चतुर्भिः पापं कर्तुमभ्यस्याम, तैश्चतुर्भिरेव पुण्यं कर्तुमभ्यसितुमर्हामः।

पापस्य द्वे शक्ती स्तः। एका दुष्टा प्रकृतिर्वर्तते तद्यथा—नस्योपयोगप्रकृतिमालोचयामः। स द्विविधं दोषं प्रयोजयति। तस्मिन् दिन उपयोग एको दोषः। श्वोऽपि तदुपयोगार्थं प्रेरणं द्वितीयो दोषः, इत्याहत्य द्वौ दोषौ समुद्भवतः। तद्वदेव पापं कर्म कालान्तरेऽपि तत्कर्तुमभ्यासं जनयति। तमभ्यासं वासनेति वदामः। वयं समीचीनां वासनामात्मन्यारोपयितुमर्हामः, दुष्टां वासनामवरोपयितुमर्हामः।

तदेवं सर्वाणि पापानि अभिलाषेणैव समुद्भवन्ति, इति संचिन्त्य पूर्वोक्तेषु चतुर्षु प्रकारेषु विना कामनां कर्माणि कर्तुमर्हामः।

प्रत्यहं मनसा वाचा कायेन धनेन च समीचीनानि कर्माणि कुर्वाणा भवेम। अस्माभिरार्ज्यमानाद् धनात् प्रत्यहमन्ततः एका काकिणी धर्मार्थं हुण्डीबन्धेन पृथक् करणीया। तद् धनं कुटुम्बार्थमविनियुज्य धर्मार्थमेव विनियोजनीयम्। अस्माकं सर्वं धनं नास्मदीयमिति सर्वदा स्मर्तुमर्हामः। एतस्मिन् शरीरे म्रियमाणे तदस्माकं सम्बन्धं जह्यादेव। तद् धनमस्मदीयं कर्तव्यं चेत, अस्मासु यत्र कुत्रापि गतेषु विनिमययोग्यपणरूपेण परिणमयितव्यम्। अमुष्मिन् लोके इदं धनं विनिमययोग्यम्। इदं धनं धर्मेषणात्मना परिणमयेम चेत, तत् यत्र कुत्रापि विनिमीयेत। तदानीमिदमपि

धनमस्माकं स्वं स्यात्। अतो बालानारभ्य वृद्धान् यावत् सर्वे धर्मार्थं पृथक् पृथक् एकां हुण्डीं रक्षितुमर्हामः। वयं जन्मत आरभ्यैवं प्रकृतिं यदि रक्षेम, एतन्मध्ये यावत् कियदेव कृतवन्तः स्याम, अस्माकं कर्तव्यानि वयं व्यस्मराम। बालानां कृते सांप्रतमेव धर्महुण्डी स्थापनीया। तेषां कृते मरणशासनकोशो न निक्षिप्यते वा? एतच्छासनकोशनिक्षेपोऽस्य जन्मनः परमप्युपयुक्तं भवेत्, इति हेतोः सर्वेऽपि—इदं मरणानन्तरशासनकोश इति भावयितुमर्हन्ति।

वाचा पुण्यानि कर्तव्यानि। प्रत्यहं सहस्रं भगवन्नामानि वाऽन्तत उच्चरणीयानि। तदस्माकमुपयोक्ष्यति। न केवलमियत्, किन्तु विपत्तिर्यथा नागच्छेत्, तथा रक्षेदपि। व्यर्थवितण्डाजल्पेन पापम्, तेन विपत्तिश्च भवति। भगवन्नाम्नामुच्चारणेन सा विपत्तिरपि न भवति। अधिकं पुण्यमपि भवति। भगवतो बहूनि नामानि वर्तन्ते। तथा महात्मानो वदन्ति स्म। तस्यैकं नाम सहस्रवारमुच्चारणीयम्। सिद्धेभ्यो महद्भ्यः तन्नाम ग्रहीतव्यम्। संख्यानार्थमेकं सूत्रं रक्षणीयम्। वयं स्वयमेव भगवन्नाम यद्युच्चरेम, तथापि न दोषः।

मनसा समीचीनं कर्म कर्तव्यम्। कंचित् कालमेकस्मिन् स्थानेऽवस्थातव्यम्। भगवन्तं ध्यातुमर्हामः। अस्माकं मनो बह्वीभिश्चिन्ताभिः संहितमस्ति। तत् महाचित्रोपाधिपटवद् वर्तते। हृदयं कस्य स्थानमिति ज्ञातव्यम्। तत् भगवत उचितं स्थानम्। तत् स्थानं वयमुपलिप्य संशोध्य तस्मिन् भगवन्तमुपवेश्य स्वयमप्युपवेष्टुमर्हामः। तस्य को मार्गः? भगवतश्चरणे ध्यातुमर्हामः। दिनदिनमन्ततः पञ्च निमेषान् ध्यानं कर्तुमर्हामः। कस्यामप्यवस्थायामिदमविच्छेदेन प्रसरेत्, इदं भोजनेन समानम्। इदं ततोऽप्यधिकमित्येव वक्तव्यम्। अनाहारावस्थायामिदमवश्यं कर्तव्यम्। तदेश्वरस्यानुग्रहो भवेत्। सोऽनुग्रहः सर्वेषामनुकूल एव। धनमार्जितुं यावन्तं कियन्तमपि कालं यापयामः। अस्माकं वस्तुगत्याऽऽत्मलाभकरमिदं कर्म न्यूनमर्धघटिकामपि न कर्तुमर्हं

वा ? तामर्धघटिकामपि धर्म-धनं संचेतुं समयः स्यात्। मनो ध्याने यदि संलग्नम्, तर्हि वागादीन्यपि तदनुगुणमेव समीचीनं कर्म कुर्युः।

कायेन समीचीनं कर्म कर्तव्यम्। देवालयं गत्वा प्रदक्षिणं कृत्वा नमस्कारः कर्तव्यः। दण्डसमर्पणमिति नमस्कारं वदन्ति। दण्डवत् पतनमेव तत्। इदं शरीरं नास्मदीयम्, तस्यैवेति भावयित्वा तत्सन्निधौ प्रक्षेप्तव्यम्।

एवं करणेन पापं स्वयमेव विश्लिष्येत् अहंभावोऽपि हीयेत। यावद्यावद् वयमवरुह्येम, तावत्तावद् महिमारोहेत्।

स्त्रियो भर्तारं नमस्कुर्वन्ति चेद्देवालम्। पुरुषा देवालयं न गमिष्याम इति दृढसंकल्पा वर्तन्ते, इति हेतोस्तेषामपि कृते स्त्रियो देवालयं गच्छन्ति। स्त्रियो देवालयं न गच्छेयुरिति नास्ति। न नियम इति ज्ञातव्यम्। केचन मूललिङ्गं पश्यन्ति। केषांचन ध्वजस्तम्भदर्शनेनैव पर्याप्तम्। गोपुरदर्शनेनैव केषांचन पुण्यं भवति। स्त्रीणां भर्तृवन्दनमेव पर्याप्तम्। अधिकारिविशेषाणामनुगुणं तत्स्थानं भवति। तदनुगुणं शरीरमर्पयितुमर्हामः।

तदेवं वयं चतुर्भिः प्रकारैः पापमकरवाम, पुनरपि कुर्मः। इदं प्रतिरोद्धुं प्रतिसाधनं धर्मः। तं धर्मं त्रिभिः करणैर्धनेन च कर्तुमर्हामः। शरीरेण प्रदक्षिणादीनि कर्तुमर्हामः। इदं न मदीयम्, किन्तु भगवत एवेति दण्डवत् पतितुमर्हामः। देवालयो यदि नास्ति, तर्हि स्मृत्वापि कर्तुमर्हामः। वाचा भगवन्नाम कीर्तयितुमर्हामः। मनसा चरणारविन्दं ध्यातुमर्हामः। धनेन दानधर्मं कर्तुमर्हामः।

वयं यदि पापं नाचरामः, तर्हि पुण्यं न कर्तव्यम्। पापमकरवाम, इति हेतोर्नूनं धर्मान् कर्तुमर्हामः। बालानारभ्य वृद्धान् यावत् कस्मिन्नपि वयसि विद्यमाना अपि सर्वजातयोऽपि एतैश्चतुर्भिः प्रकारैर्धर्मं यदि कुर्युः, तर्ह्येव पापं निवर्तेत। आत्मलाभकरं धनं संचीयेत। इमान् धर्मान् हस्त-

पादादिकरणेषु विद्यमानेष्वेव कृत्वाऽऽधमर्ण्यमपहृत्योत्तमणतामपि संपादयितु मर्हामः। तेषु विनष्टेषु करणमसाध्यम्।

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥

( गीता ८।१० )

इत्युक्तमस्ति। एतच्छरीरं परियुज्य प्रतिष्ठमानेष्वस्मासु मनो न चलेत्। पर्वतवत् तिष्ठेत्। पापाद् भीत्यभावे तथा स्यात्। कामक्रोधयोरभावे तत् पापं नास्ति। धर्मं यद्यनुतिष्ठेम तौ शाम्येताम्। अस्माभिः क्रियमाणानि पापानि यदि चिन्त्येरन्, अस्माकमोदनोऽपि न लब्धुमर्हति। तावन्ति पापानि कुर्महे। भगवान परमः कृपालुः, इति हेतोरेतावन्ति सौकर्याण्य-स्माकमपि समापतन्ति। तस्मात् पापं न्यूनयितव्यम्। सर्वं तदर्थ-मर्पणीयम्। सोऽन्तरात्मनि वर्तते। तस्मै शरीरादीनि यदि समर्प्येरन्, तर्हि कामो निर्मूलो भवति। तदानीं न पापम्, पापानामभावे स्थिरं सुखमुदेति॥

---

# शब्दार्थवैचित्र्यम्

## ( १ )

[ निबन्धकः—श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

सहृदयाः, केन वा नाकर्णितो वाङ्मयशब्दः सुरसरस्वत्याः समुपासकेन, केन वा न संपूजिता मृन्मयी मूर्तिर्भगवत्या भक्तप्रवरेण, केन वा न समाराधितं चिन्मयं रूपं साधकोत्तंसेन ? तन्नैतदाश्चर्यं यद् वाङ्मय-मृन्मय-चिन्मयादिशब्दाः सुपरिचिताः स्युः सर्वेषामेवाक्षरमुखाणाम्। एतेषु च त्रिषु शब्देषु प्रकृतीनां विभिन्नत्वेऽपि प्रत्यय एक एव मयट्समाख्यो वरीवर्त्ति। मयट्प्रदेशाश्च—तत्प्रकृतवचने मयडित्यादयः। अर्वाचीनैश्च वैयाकरणैस्ताद्रूप्ये मयडित्यपि सूत्रं प्राणायि। निपुणं पुनर्विचार्यमाणे मयट्प्रत्ययोऽयं मूलतो मय इति प्रातिपादिकमेव। तच्च मानार्थक-मी-धातुतो भावप्रत्यययोगेन निष्पन्नम्। निर्माणम्, आकृतिः, रूपम् इत्येवास्य प्राथमिकोऽर्थः, एवञ्च समासचरमावयवस्थस्यास्य निर्मितः घटित इत्येवं रूपोऽर्थः सम्पन्नः। कर्त्तरि प्रत्ययेन शब्दस्यास्य निर्मातृबोधकत्वमपि संसिध्यति। अत एव शिल्पिकुलतिलको मय इति व्यपदिश्यते। क्रमेण च समासान्तिमावयवरूपेणैवास्य बाहुल्येन प्रयोगदर्शनात्, समासे च प्रत्ययनिष्पन्नशब्देष्विव ऐकपद्यस्य ऐकस्वर्यस्य च समुपलम्भात् मयशब्दोऽयं प्रत्ययतया परिगणितो वैयाकरणैः। अत्र च लाघवं झटित्यर्थप्रतिपत्तिश्च प्रयोजकतया प्रतिभातः।

आङ्ग्लभाषायामपि -hood,-head इति प्रत्ययद्वितयस्यायमेव समुत्पत्तिप्रकारः। मूलतः प्रत्ययाविमौ संस्कृत-भाषागत-'केतु'-शब्दतो नातिरिच्येते। गथिक् भाषायां हाइडुस् (*haidu-s*)- शब्दस्य (आकारः, प्रकारः) भाव इत्यर्थः। ततश्च Anglo-Saxon भाषायां हाड् (*had*)

शब्दस्य प्रकारः अवस्था, भावः इत्यर्थः, आङ्ग्लभाषायां, हूड्, हेड् इति (-*hood*, *head*) प्रत्ययद्वितयस्य शर्मण्यभाषायां च 'हाइट्' 'काइट्' (*heit*, *Keit*) इति प्रत्ययद्वयस्य च स एवार्थः ।

हाड्शब्दे च क्रमेणाप्रयुक्तताम् उपेयुषि प्रत्ययमात्रोच्छ्वसिते एतदर्थकास्ते ते शब्दा आत्मानमलभन्त ।

| | | |
|---|---|---|
| HÂD | order<br>office<br>degree<br>estate<br>rank | class<br>section<br>condition<br>profession<br>position<br>denomination<br>interest |

[-hood (O. E. hád, rank, condition, character, nature as in *bisceop-had*, rank of a bishop, episcopacy ; *maegd-had*, virginity). We find it represented by two distinct forms—

-*head* (Middle E. -*hede*), in *maidenhead*, *godhead*.

-*hood* as a living formative in many words of old and recent origin :—

Childhood, manhood ; hardihood, likelihood,

-*heit*, -*keit* as Abstract suffixes in German. The form -*keit* is but a variant of -*heit*, which arose after adjectives in -*ic* (now -*ig*) ; *heilic-heit* $\geq$ *heili-keit*, *heilig-keit*. In time -*keit* was used also after other stems where, phonetically, there was no call for it.

In Gothic and Old High German the suffix still had independent existence, Gothic *haidus* meaning manner, and O. H. G. *heit* (Anglo-Saxon *had*) quality, character or person. But simultaneously it occurred as a suffix.]

( क्रमशः )

# महावारिधिः

[ निबन्धकः—श्रीकालीपद-तर्काचार्यः ]

( पूर्वानुवृत्तिः )

इन्द्रद्युम्नमहीपतिः परमितः सङ्कल्प्य नीलाचले
तत्रापूर्वविलोकितां प्रतिकृतिं दृष्ट्वा परं विस्मितः ।
यत्तीरेऽपरमन्दिरं सुरचितं श्रीमाधवं प्रापयत्
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७१॥
तस्मादूर्द्ध्वमसौ महोत्सवशतैः श्रीमन्दिरे सुन्दरे
यन्नीरस्नपनेन पूतिपरमां मूर्तिं हरेर्दारवीम् ।
रामेणापि सुभद्रया प्रतिगतामस्थापयद् ब्रह्मणा
तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७२॥
पश्चा गोष्पदखातयातसलिलं आभाति यद्दर्शिनो
गङ्गा वा यमुना प्रयाति महता यद्वीचिना तुल्यताम् ।
नद्यो याः प्रचरन्ति भूमिवलये ता यत्र कूपोपमा-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७३॥
सौम्यं श्रीगुरुधाम यस्य पुलिने पूतं द्रुमैराचितं
श्रीश्यामाचरणप्रतीकविलसच्चित्रं विचित्रोत्सवम् ।
यत्पश्चात् सिकतामयाः क्षितिभृतो वृक्षैर्विशालैर्युता-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७४॥
गम्भीराभवनाद् यदीयपुलिनं गन्तुं प्रवृत्तः पुरा
श्रीचैतन्यमहाप्रभुः क्षितिभृतस्तान् वीक्ष्य मार्गस्थितान् ।
भावावेशविमोहितेन मनसा गोवर्द्धनं ज्ञातवां-
स्तं लोकोत्तरतीर्थराजमजयं वन्दे महावारिधिम् ॥७५॥

किन्त्वेकान्तं तदतिगहनं बोद्धुमेतेऽसमर्था
वन्दे लोकोत्तरगुणभृतं तं महावारिराशिम् ॥८२॥

औदार्याद् वा सकलभुवने तीर्थराज्याधिपत्याद्
योऽयं नक्तन्दिवमुपचितः सप्रसादो विभाति ।
तस्माद्धास्यं स्मितमपि चिरं दीप्यते वीचिवेशम्
वन्दे लोकोत्तरगुणभृतं तं महावारिराशिम् ।८३॥

प्रातः सायं नियमविहितश्रीजगन्नाथसेवा-
सम्पत्त्यर्थं घनरवसमा दुन्दुभिध्वानधारा ।
यस्य प्रोद्यत्तमलहरिकागर्जितैरेति वृद्धिं
वन्दे लोकोत्तरगुणभृतं तं महावारिराशिम् ॥८४॥

नानाकारपयोदचन्द्रतपनच्छायाभृतो नीरधे-
र्यस्य प्राप्तविचित्ररूपरचनामुग्धस्य सन्दीव्यतः ।
नानावेशविराजितस्य नृपतेः साम्यं समुज्जृम्भते
तं वन्दे जगदुत्तरं निरवधि दिव्यं महावारिधिम् ॥८५॥

इन्द्रद्युम्ननृपेण विप्रततये गाः कोटिशो यच्छता
यस्मादाहृतपूतहस्तविगलत् संकल्पतोयं स्थितम् ।
इन्द्रद्युम्नसरोवरत्वमभजद् गोक्षुण्णभूमौ पतत्
तं वन्दे जगदुत्तरं निरवधि दिव्यं महावारिधिम् ॥८६॥

नीरेण प्रतिमां दधाति परितः सूर्यस्य पादावली
तस्मादेव दिवैव धन्वनि मृगास्तोयभ्रमं बिभ्रति ।
योऽयं सूर्यकरे प्रसर्पति ततो दीर्घायते वारिणा
तं वन्दे जगदुत्तरं निरवधि दिव्यं महावारिधिम् ॥८७॥

उग्रस्यापि रवेरुदग्रकिरणा नालं जनान् बाधितुं
यस्योत्तालतरङ्गसङ्गिपवनं संसेवमानान् पुरः ।
तेनैवातपतापितेऽपि समये तत्सैकतं यान्त्यमी
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥८८॥

यद्गर्भे वितता श्मशानधरणी नैकैर्मठैरञ्चिता
'स्वर्गद्वार'गता प्रकीर्णसिकतास्तोमान्तराले स्थिता ।
प्रायः प्रत्यहमेव यत्र जनतादेहः शुचा दह्यते
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥८६॥

यद्वातेन निरन्तरं प्रवहता वह्निः परं क्षुभितः
स्वल्पेनैव शवं नयत्युपगतं कालेन निःशेषताम् ।
शोकक्रन्दितमश्रुभारविषमं यद्गर्जिते लीयते
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥९०॥

यद्भीत्येव समीपदीव्यदरुणस्तम्भाग्रमानोन्नते
क्षेत्रे श्रीपुरुषोत्तमे रुचिमये श्रीरत्नसिंहासने ।
रामेणापि सुभद्रया च सहितस्तस्थौ जगन्नाथक-
स्तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥९१॥

यन्मार्गेण समप्रदेशमनुजा भूत्वा पुरीसंङ्गता
मङ्गल्यं भगवन्तमर्चितुमलं भूयासुरित्याशया ।
चक्रे श्रीभगवान् समुद्रपुलिने नीलाचले संस्थितिं
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥९२॥

भक्ताः श्रीपुरुषोत्तमस्य सलिले स्नातुं समायान्ति ये
तानभ्यर्थयितुं सभक्तिमनसा येनोद्धृता बाहवः ।
स्पृष्ट्वा चापि पदं सुशीलपयसा माहात्म्यमासादितं
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥९३॥

आकाशे समुदित्वरा जलधरा विद्युत्समालिङ्गिता
यावद् भैरवगर्जितं विदधते घोराः सुनीलाम्बराः ।
तावद् यस्य तुलां दधाति गगनं भङ्गान् यतो गर्जत-
स्तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥९४॥

भुक्त्वा क्लेशानिव सुतपसः काम्यमर्थं दधाना
यस्योत्तीर्य प्रबललहरीं धीवराः क्षुद्रनावा ।

शान्तं वक्षःस्थलमुपगता मोदभारं भजन्ते
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिं ॥९५॥

कीर्तिर्यस्य प्रचरति भुवं सर्वतो गर्वदृप्ता
लिप्ताः पापैर्यदनुसरणं कर्तुमर्हा न लोके।
यो वाह्यान्तःकरणकलुषप्रक्षये तुल्यशक्ति-
र्वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥९६॥

यस्य द्वीपप्रचयमभितो भूरिवाणिज्यपोता
नानाद्रव्यैः परमुपचिताः सोत्सवाः संप्लवन्ते।
दानादानैर्जगदुपकृतिश्चापि सम्पादयन्ते
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥९७॥

यस्यागाधं निरवधिजलं दीर्घमुत्तीर्य पोतै-
र्नानाशिल्पाद्युपचितगुणां द्वीपमालां श्रयन्तः।
प्रज्ञावन्तो विविधविषयामुन्नतिं साधयन्ति
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥९८॥

ऊर्द्ध्वं दूरे पथि सुनिपुणा व्योमयानं श्रयन्तो
यन्माहात्म्यं कथमपि परिज्ञातुमर्हन्ति लेशात्।
रिङ्गद्भङ्गं निरवधिमविश्रान्तमाद्यन्तशून्यं
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥९९॥

भित्त्वा शैलं क्वचिदपि वहन्नम्बुभिर्घोररूपैः
क्षिप्त्वा दूराध्वनि लहरिकाः सैकतं स्नापयित्वा।
योऽयं याति प्रकटमधुरं गीतिकां श्रावयित्वा
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥१००॥

देशे देशे पृथगुपचितां भावधारां पुरस्ताद्
दृष्ट्वा दृष्ट्वा स्मितमिव तनोत्येष यो वीचिभङ्गैः।
आनन्दं वा भजति पुलिनक्षिप्तबाहुप्रतानो
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥१०१॥

लङ्कापुर्यां जनकतनयाशोकजाश्रुप्रवाहो
यस्याम्भोभिः समगत पुरा पावनः श्रावणाभः ।
बद्ध्वा शैलैर्यमतिरभसं राघवः प्राप सीतां
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥१०२॥

यस्यादेशादभजत नतिं विन्ध्यशैलः समुच्चः
सूर्यं रोद्धुं शिखरनिकरं वर्द्धयन्नूर्द्ध्वमार्गे ।
लोपामुद्रापतिरतिरुषा यं पपौ स प्रभावाद्
वन्दे मायामयमिव मुहुस्तुन्दिलं तं महाब्धिम् ॥१०३॥

यस्याकाङ्क्षा निपुणकरणैरप्यमेया गभीरा
सङ्गीतानामपि विलसतां नार्थलेशो विभाव्यः ।
यस्योल्लासे प्रसरति पुरो निर्निमेषैव दृष्टि-
र्वन्दे मायामयमिव मुहुस्तं वरेण्यं महाब्धिम् ॥१०४॥

यावच्छुभ्रतरङ्गिता सुनिविडा जीमूतमाला स्थिरा
शून्ये नीलरुचौ समुद्रनभसोर्लुप्तो विभेदग्रहः ।
तावद् यस्य विशालशुभ्रलहरीमालेव सा दृश्यते
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥१०५॥

दैवं यत्नशतेन नाभिभवितुं जीवः कदाचित् क्षमो
यत्रागाधपयोनिधावपि ततो भङ्गाकुले संस्थितम् ।
अत्युग्रे लवणाम्बुभिर्झषकुलं व्यापाद्यते धीवरै-
स्तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥१०६॥

यस्यान्तश्चरवाष्पयानशरणा गूढेङ्गिता योधका
गूढं लक्ष्यपदे सहोपकरणैरुत्पत्य नीरान्तरात् ।
हत्वा शत्रुकदम्बकं विजयिनः काम्यं फलं भुञ्जते
तं वन्दे जगदुत्तरं निरवधिं दिव्यं महावारिधिम् ॥१०७॥

आकाशं लक्षतारासहितमिह पुरः स्यन्दते विद्रुतं किं
किं वा कारुण्यधारा परमपितुरियं नीररूपा विभाति ।

यं दृष्ट्वाद्यन्तशून्यं जलमयमजयं कल्पयन्त्येवमेवं
वन्दे तं वारिराशिं सुविपुलवपुषं भूरिवैचित्र्यजुष्टम् ॥१०८॥

ग्रहशरवसुचन्द्रैरङ्किते शाकवर्षे वृषगतदिननाथे श्रीजगन्नाथपुर्याम् ।
श्रुतिशशधरमानेऽष्टाधिकं भार्गवाह्वे शतकमिदमवाप्तं वारिराशेः समाप्तिम् ॥

पित्रे श्रीहरिदासाय तत्तनूजेन साष्टकम् ।
शतकं तीर्थराजस्य तर्कतीर्थाय दीयते ॥

---

# धर्ममीमांसा

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

इति पराशर स्मृति वचनाद् विरोधश्चानयोः परस्परमिति चेन्न पराशरेण जात्युत्पत्तिप्रकारः प्रदर्शितः, उशनसा तु कुम्भकारस्यैव वृत्यन्तरं नामान्तरञ्चोक्तं इति । तु इति पक्षान्तरे । ब्राह्मणाच्चौर्यतो वैश्यायां जातः कायस्थ इति संज्ञाञ्च लभते इत्यर्थः । ततः कुम्भकारेण सहास्य समजातित्वम् । अस्य निन्द्यत्वमपि मिथ्यालिपिकरणादिना । वृत्तिश्चास्य पुना राजाधिकरणे तन्नियुक्तलिपिकरणादिकम् । तथा च विष्णुः "अथ लेख्यं त्रिविधं राजसाक्षिकं ससाक्षिकमसाक्षिकञ्चेति । राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं राजसाक्षिकमिति । कायस्थाश्चोत्कोचग्रहणेन मिथ्यालिपिं निर्मायादण्ड्यानपि दण्ड्यान् निरूपयन्तीत्यत एभ्यः प्रजा राज्ञा रक्ष्या इत्यादिशति याज्ञवल्क्यो यथा—

चाटु-तस्कर-दुर्वृत्त-महासाहसिकादिभिः ।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥

इति । ब्रह्मवैवर्त्तपुराणेऽपि—

कायस्थेनोदरस्थेन मातुर्मांसं न खादितम् ।
तत्र नास्ति कृपा तस्य दन्ताभावेन केवलम् ॥

स्वर्णकारः स्वर्णवणिक् कायस्थश्च व्रजेश्वर।
नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले ॥
हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम्।
शतेषु सज्जनः सोऽपि कायस्थो नेतरौ च तौ ॥ इति।

पुराणेषु तु कायस्थसृष्टिक्रमो बहुधोपलभ्यते। यथा स्कन्दपुराणे—

क्षणं ध्यानस्थितस्यास्य सर्वकायाद् विनिर्गतः।
दिव्यरूपं पुमान् बिभ्रद् मसीपत्रञ्च लेखनीम् ॥
चित्रगुप्त इति ख्यातो धर्मराजसमीपतः।
प्राणिनां सदसत्कर्मलेखाय स निरूपितः ॥
ब्रह्मणातीन्द्रियज्ञानी देवाग्न्योर्यज्ञभूक् स वै।
भोजनाच्च सदा तस्मादाहूतिर्दीयते द्विजैः ॥
ब्रह्मकायोद्भवो यस्मात् कायस्थो जातिरुच्यते।
नानागोत्राश्च तद्वंश्याः कायस्था भुवि सन्ति वै ॥

इति। नन्दिकेश्वरपुराणे तु—

कायस्थ एष उत्पन्नः क्षत्रिण्यां क्षत्रियात् ततः।

इत्यादिवचनेनास्य क्षत्रियत्वमेवावधार्यते। पद्मपुराणे चास्योत्पत्तेः प्रकारान्तरतां वर्णयति यथा—

माहिष्यवनितासूनुर्वैदेहाद् यः प्रसूयते।
स कायस्थ इति प्रोक्तस्तस्य कर्म विधीयते ॥

इति। क्षत्राद् वैश्यायां जातो माहिष्यः, वैश्याद् विप्राजो वैदेह इति। ततश्चाह तत्रैव—

( क्रमशः )

———

# हाओड़ा 'संस्कृतसाहित्य-समाजः'

वर्त्तमानवर्षीय-सौरभाद्रपदस्य विंशदिवसे रविवासरे सायं षष्ठघटिकायां हाओड़ाप्रदेशान्तर्गत-"कोड़ारबागान"-स्थित-संस्कृतविद्यालये माननीय-पण्डित-प्रवरश्रीयुक्त-प्रियनाथसांख्यतीर्थमहोदयानामाध्यक्ष्येण संस्कृत-शास्त्र-निष्णातानां कापि सभा समजनि। तत्र कलिकाताराजकीयसंस्कृत-महा-विद्यालयाध्यापकः श्रीकालीपदतर्काचार्यः श्रीदाशरथिस्मृतितीर्थः श्रीराम-गोपालस्मृतिरत्नः श्रीकालीकिङ्करकाव्यतीर्थः श्रीतिनकड़िकाव्यतीर्थः श्रीहृषीकेशकाव्यतीर्थः हाओड़ाप्रदेशीयराजकीयाङ्गलविद्यालयप्रवीणशिक्षकः श्रीविश्वजीवनभट्टाचार्यः अन्ये च समवेता अभूवन। तत्रादौ श्रीमता अनाथ-बन्धुभट्टाचार्येण गीतमुद्‌बोधन-सङ्गीतम्। विद्यार्थिना श्रीमता नित्यानन्द-मुखोपाध्यायेन च विवृतं सभाया उद्देश्यम्, सदाचारपालनस्य प्रयोजनञ्च। अथ श्रीमता दाशरथिस्मृतितीर्थेन सदाचारमधिकृत्य प्रस्तुतं संस्कृतमयं व्याख्यानम्। ततः श्रीविजयनाथमुखोपाध्यायो वक्तृताप्रसङ्गेन वर्त्तमान-कालीनावस्थां तथा हाओड़ाप्रदेशे सत्यां वङ्गीयब्राह्मणसभायाः शाखा-सभायां सदाचारपालनमुद्दिश्य सभान्तरस्य निष्प्रयोजनकतया नवीनसभायाः संस्कृतसमुन्नतिसाधनमेवास्तु लक्ष्यमिति प्रस्तुतवान्। हाओड़ाप्रदेशान्तर्गत-राजकीयाङ्गलविद्यालयप्रधानशिक्षकेण श्रीविश्वजीवनभट्टाचार्येण साहित्य-स्याचारस्य च समुन्नतेरावश्यकता विवृता। अथ श्रीमता कालीपद-तर्काचार्येण सभाया उद्देश्यं संस्कृत-साहित्यसमुन्नतिसाधनं, संस्कृतभाषाया विविधोपयोगाः, संस्कृतसाहित्यसमुन्नतिसाधनस्य विविधा उपायाश्च सविस्तरं प्रत्यपाद्यन्त। एवमेवं निर्वृत्तेषु व्याख्यानेषु श्रीमतो विजयानाथ-मुखोपाध्यायस्य प्रस्तावेन हाओड़ा'संस्कृतसाहित्यसमाज' इति नाम्ना संस्कृत-साहित्यसमुन्नतये कापि स्थिरा सभा घटिता। तस्याः कार्यपद्धतिः "कलिकातासंस्कृत-साहित्य-परिषदः" कृत्यपद्धतिमनुवर्त्तेत।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| November, 1937 | १८५९-शकीये कार्त्तिके २०श-वर्षस्य ७म-संख्या | Vol. XX, No. 7 |
|---|---|---|

## धर्मज्ञसमयः

सांप्रतं हि सर्वत्र पण्डिता नाम लौकिकाश्चेति विभज्य व्यवहरन्ति । तेन च केचन मन्यन्ते—पण्डिता नाम जातिविशेषः, येषां धर्माधर्मव्यवस्थां विना राजनीतावन्यत्र न स्थानलेशोऽपि, ते तु धर्मव्यवस्थां विहायान्यत्र न प्रमाणपदवीमधिरोहन्ति ।

पुरुषबुद्ध्यपेक्षा हि राजनीतिः । पण्डिता अपि यदि जातिविशेषः, यदि वा केवलं लौकिकपरतन्त्रतामेवाहरन्तो मानवविशेषाः, पुरुषबुद्धिस्तु तेषामपि कुत्र वा गमिष्यति । इन्द्रियाणां मनसो वा विषयग्रहणपाटवं पण्डितपामरसाधारणमेव, तारतम्येऽपि लौकिकानामेव तस्य परा काष्ठा, न पण्डितानामित्यत्र न काऽपि विनिगमना । लौकिकेष्वपि सर्व एव बुद्धि-पाटवस्य परामेव काष्ठां प्राप्ता इति न शपथयितुं शक्नुमः । पण्डित-वंशीयत्वेन पण्डितपदेनैव व्यपदिश्यमानाः सांप्रतिकजानपदसभाध्यक्षाः अन्ये च कति कति नेतारो भारतवर्षे सांप्रतं जीवन्ति । किं बहुना ? वंशतः, नामतः, कार्यतः, शक्तितः, बहुतरनिबन्धनपरिशीलनेन च पण्डितो-त्तमा महामनसो मालवीयमहोदया असदृशहिन्दुविश्वविद्यालयव्यवस्थापनेन

भारतवर्षकैङ्कर्येणैव स्वजीवनयात्रां निर्वहन्तोऽपि पण्डिता एव। सति चैवं पण्डिता नाम जातिविशेष इति भावस्य दूरीकरणे तेषां पाण्डित्यस्य यथोपयोगः स्यात्, तथा कार्यकरणे पण्डितानामसाधारणोऽधिकारः, यत्र लौकिकानां लेशतोऽपि न स्थानम्। इदमेवाभिप्रेत्योक्तम्—"धर्मज्ञसमयः प्रमाणम्" इति।

धर्मज्ञा नाम पण्डिताः, तेषां व्यवस्था सन्दिग्धेषु धर्मेषु प्रमाणम्। व्यवस्थया हि तेषां निश्चितो धर्मोऽनुष्ठानपर्यवसायी कर्तुं शक्यते, यतस्त एव धर्मज्ञाः। धर्मस्तु "चोदनालक्षणोऽर्थो धर्मः" इत्यादिभिः श्रुति-स्मृति-सदाचारादिभिर्मीमांसापद्धत्या विचारितैरेव ज्ञातुं शक्यते, न पुरुषबुद्धिमात्रेण। व्यक्तं च शङ्करभगवत्पादाः भगवद्रामानुजाचार्याः श्रीभगवन्मध्वाचार्याः श्रीभगवद्वल्लभाचार्याश्चान्ये चान्ये चाचार्याः धर्मे पुरुषबुद्धेः स्वतन्त्रायाः न प्रवृत्तिलेशोऽपि, श्रुत्यादीन्येव हि तत्र प्रमाणानीति वदन्ति। तदुक्तं शङ्करभगवत्पादैः—न हि धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्। पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्येति। सति चैवमधर्मस्य धर्मतया धर्मस्याधर्मतया वा परिवर्तनं शब्दमात्रपरिवर्तनमेव स्यात्, न तु फलपरिवर्तनमपि। कुमारिलपादा अपि—

"क्रोशता हृदयेनापि गुरुदाराभिगामिनाम्।
भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता॥"

इत्यादिवचनैः परोपकारकत्वादिकं धर्मलक्षणमित्यपि वक्तुं न शक्यम इति वदन्ति। यथा चानुमानगम्यत्वे धर्मस्य—गङ्गापानसाधर्म्यात् सुरापानमपि धर्मः स्यात्, तथापि कुमारिलपादा एव विशदयन्ति।

कालदेशपरिस्थितिमनुसृत्य धर्मानुष्ठाने यद्यशक्तिः, तदाऽधर्मस्याप्यनुष्ठानं चाक्रायणादिभिः कृतं धर्मरूपेणैव गृह्यमाणमासीत्। किं बहुना विश्वामित्रस्य चौर्येण श्वजाघनीभक्षणमपि विपत्त्यां सत्यां धर्म एवाभिमन्यते सर्वैरपि। सति चैवं पण्डितानां धर्मज्ञानां सांप्रतिकानामपि महती विपत्तिर्देशस्यात्मनश्च वर्तत इति जानतां कथं न धर्माधर्मपरिवर्तनं भूषणम्? सत्यं

शास्त्रतो मुख्यकल्पतया गौर्यादिकन्याविवाहोऽष्टमादिवयस्येवावगम्यते, आपत्कल्पतयैव रजोदर्शनानन्तरमपि विवाहः, सोऽप्यब्राह्मणादिविषय एव। परं तु सांप्रतं राजकीयनियमाश्चतुर्दशवयसः पूर्वं विवाहं यदा निषेधन्ति, तदुल्लङ्घने च कारागृहप्रवेशो वाऽन्यो वा दण्डोऽनिवारणीयो वर्तते, इति ब्राह्मणानामप्यापद्धर्मतया तदनुष्ठानं धर्मज्ञैरपि पण्डितैरनुमन्तव्यं वा न वा? कारावासोऽपि महापापमिति हि धर्मशास्त्राणां सिद्धान्त इति धर्मज्ञाः पण्डिता मन्यन्ते। सति चैवमुभयतःपाशायां रज्जौ लौकिकानां मतं परिस्थितिरपि धर्मज्ञानां धर्मव्यवस्थापनावसरे समादरणमेवार्हति। इयमेव नीतिर्मन्दिरप्रवेशाभ्यनुज्ञानादिविषयेऽपि समादरणीया। यतो राजानोऽपि तदनुगुणमेव व्यवहरन्ति, राजाज्ञोल्लङ्घनेऽपि महती विपत्तिः पुरोमुखा वर्तते, इति यदि धर्मज्ञाः पण्डिताः सांप्रतमपि स्वीयं कर्तव्यं न करिष्यन्ति, तर्हि महती दुरवस्था भारतवर्षस्य समापतेत्। वदन्ति केचन जानपदसभास्तारा अपि सांप्रतं राज्यशासनमधिकुर्वन्तस्तादृशैर्नियमविशेषैर्भारतवर्षे जातिभेदव्यवस्थां स्पर्शास्पर्शव्यवस्थां भक्ष्याभक्ष्यव्यवस्थां च केषांचन पण्डितानामेव मतेन भारतीयानां विषये दूरीकरिष्यन्तीति। अस्यां च परिस्थितौ पण्डितानां मुष्टिमेयानां विरोधोऽपि कियदवधि कार्यकारी स्यादित्यपि धर्मज्ञाः पण्डिता न ज्ञातुमर्हन्ति?

श्रूयते मद्रासनगरे पौषमासे महती काचन पण्डितपरिषद् डाक्टरकुरुतुकोटि ( शङ्कराचार्याणां ) सभाध्यक्ष्येण भविता। डाक्टरकुरुतुकोटिमहाशयास्तु ते, ये खलु मिस्‌मिल्लारशुद्ध्यादिकरणेन लोकविख्याताः संस्कृतभाषया व्याख्याने लब्धप्रतिष्ठाः, सुधारकप्रवराः, येषां मतमनुसरन्तस्तत्र तत्र पण्डितप्रवरा बहव एव वर्तन्ते। सत्यमिदं भविष्यति पण्डितप्रवराणामपि मन्दिरप्रवेशादिव्यवस्थायां नैकमत्यमिति। सति च मतभेदे सुधारकाणां जानपदसभास्ताराणामपि मार्गः पण्डितैरेव कैश्चन प्रदास्यते, इति केषांचन मुष्टिमेयानां महामहोपाध्यायानां महामहोपदेशकानां पण्डितराजानामाचार्यपदाङ्कितानां च व्यवस्था कथं नीत्वा कार्यं निर्वहतां जानपदसभास्ताराणा-

मन्येषां च भारतवर्षशासनमधिकुर्वतामपकरिष्यति ? इदानीं तु धर्मज्ञाः पण्डिताः केचन सुधारकपक्षविरोधिनो मुष्टिमेया अपि दुर्बला एव, न प्रबलाः, इति प्रबलैरात्मनो दमने किं करिष्यन्ति ? स्वयं प्रबला अपि मुष्टिमेयाः पण्डिताः, दुर्बलैरपि प्रबलशासनाधिष्ठातृभिर्दत्तावलम्बैर्बाध्येरन्नेव। तदुक्तम्—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥

इति। अस्यां चावस्थायां सर्वेषामपि पण्डितानामैकत्येन सुधारक-पक्षानुसारेण धर्मव्यवस्थापनमेव समुचितम्, यतो धर्मज्ञसमयः प्रमाणमिति केचन मन्यन्ते।

परे तु मन्यन्ते—सत्यमापत्तौ सत्यामापद्धर्मतयाऽधर्मस्यापि धर्मतया व्यवहरणं तादात्विकमासीत्। इदमेवालोचनीयम्—केयमापत्तिर्नाम। वयं तु प्रतीमः—प्राणात्ययशङ्कैवापत्तिरधर्मस्यापि धर्मतया व्यवहरणं तादात्विकं व्यवस्थापयति, न तु यत्किञ्चित्क्लेशानुभवशङ्कामात्रम्। चाक्रायण-विश्वामित्रादीनां तु प्राणात्ययशङ्कैव तदानीमासीदिति तत्तदितिहासप्रकरणत एवावगम्यते। "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति बादरायण-सूत्रमप्यापद्धर्माणां न विधानम्, किन्तु प्राणात्ययशङ्कायां तदभ्यनुज्ञानमात्र-मिति बोधयति। तदुक्तमाकरे—प्राणात्यय एव परस्यामापदि सर्वमन्न-मदनीयत्वेनाभ्यनुज्ञायते, तद्दर्शनात्। तथा हि श्रुतिश्चाक्रायणस्यर्षेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति—"मटचीहतेषु कुरुषु" ( छा-१-१०-१ ) इत्यस्मिन् प्रकरणे। चाक्रायणः किलर्षिरापद्गतः इभ्येन सामि खादितान् कुल्माषांश्चखाद। अनुपानं तु तदीयमुच्छिष्टदोषात् प्रत्याचचक्षे। कारणं चात्रोवाच—"न वा अजीविष्यमिमानखादन्" इति, "कामो म उदपानम्" इति च। सति च प्राणात्ययप्रसङ्ग एव प्राण-संधारणायाभक्ष्यमपि भक्षयितव्यमिति। स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावताऽपीत्यनुपानप्रत्याख्यानाद् गम्यत इति। अनेन तु ज्ञायते यो

विपन्नः, स एव विपद्धर्ममनुष्ठातुं शक्नोति, नाविपन्नोऽपि। विपत्तिश्च प्राणात्ययप्रसङ्ग इति। तस्यां चावस्थायां शास्त्रं प्राणधारणार्थं यत्किमपि कर्तुमभ्यनुजानातीति यदि धर्मज्ञाः पण्डिता व्यवस्थापयितुमर्हन्तीति मन्यते, तर्हि स्वागतमेव पृच्छामः। इदमेवात्रालोचनीयम्—कस्य वाऽधर्मस्य धर्मतया परिवर्तनं विना प्राणात्ययप्रसङ्गस्सुधारकाणां पण्डितानां वा ? यदि मन्यन्ते विवाहविषये सांप्रतं राजकीयनियमानामुल्लङ्घने विपत्तेः संभावनेति, तर्हि जानपदसभास्तारा अत्र समुचितं मार्गमादित आरभ्योपदिशन्त एवासन्, यद् राजाज्ञोल्लङ्घनेनापि स्वकर्तव्यनिष्ठा तु केनापि न परित्यक्तव्येति, यदि धर्मानुरागिणोऽपि धर्मविषये जानपदसभास्तारा अपि राजकीयनियमद्वारा दमयिष्यन्ति, तर्हि तदीयमेव पन्थानमनुसृत्य स्वकर्तव्यनिष्ठां न ते परित्यक्ष्यन्ति। "बलाद् बन्दीकृतो यस्तु म्लेच्छचण्डालदस्युभिः।" इति प्रायश्चित्तविधिः स्वधर्मरक्षानुरागिणां तदानीं हस्तावलम्बं दास्यति। दुर्बलदमननीती राजकीयानां न कार्यकारिणीति बहुशो दृष्टम्। सति चैवं यदि शक्ताः, यदि वा न विपन्नाः, तर्हि कारागृहवासस्वीकारेणापि धर्मानुरागिणः स्वधर्ममेव परिपालयिष्यन्ति। विश्वसिमः—जानपदसभास्तारा भारतीयानामेव स्वेषां दुर्बलानां दमनार्थं प्रयतनेन नात्मानं शासकापसदं करिष्यन्तीति। दुर्बलानामपि सर्पाणां किञ्चिद् बलं वर्तते, इति धर्मानुरागिणोऽपि स्वधर्मरक्षार्थं स्वीयं धर्मबलमेवोपयोक्ष्यन्ति, येनात्मा सुरक्षितः स्यात्, विरोधिनश्च प्रबला अपि शिक्षिता भविष्यन्ति। न सांप्रतमपि सुधारका अन्ये वा प्रतिज्ञातुं शक्नुवन्ति, कोऽपि धर्मात्मा, निगूढतेजा भारवर्षे नास्ति, यस्य तेजसा सर्वेऽपि सुधारकाः क्षणमात्रेण शिक्षिता भविष्यन्तीति। एकोऽपि धर्मज्ञः कोट्यधिकानामपि सुधारकाणां दमने समर्थ इति सम्यगेव सुधारकाः सर्वेऽपि जानन्ति। यतो मुष्टिमेयानामपि पण्डितानां धर्मज्ञानां तदनुसारिणां वा जनानां दमनार्थं स्वमतस्यैव प्रचारार्थं नालीकास्त्राणामारक्षिणां सेनायाश्च साहाय्यं सुधारका एवापेक्षन्ते, न धर्मज्ञा मुष्टिमेया अपि। अतो यदि धनशक्तिः, प्रभुशक्तिः, बुद्धिशक्तिः, वाक्शक्तिः, व्यवहारशक्तिः,

पाण्डित्यशक्तिर्वा कस्यचन सुधारकस्य तदाचार्यस्य वा वर्तते, तर्हि राजकीयसाहाय्यं विना सा प्रदर्श्यताम् ! किमिति वाऽऽरक्षकाणां साहाय्यं प्रार्थ्यते। विवाहविषयेऽपि पूर्वं मद्रनगरे पण्डितपरिषदेका संघटिता, किं वा कार्यमकरोत्, यावद् राजकीयं साहाय्यं नोपलब्धमिति सुधारका एव वदन्तु। वयं तु मन्यामहे—जानपदसभास्तारः राजकीयभावेन स्वराज्य-शासनाधिकारेण वा प्राप्तेन यदि धर्मविषये स्वीयं मतं न प्रचारयिष्यन्ति, यदि जानपदसभापक्षेण, स्ववैयक्तिकमतेन वा प्रचारयिष्यन्ति; तर्हि स्वस्व-बलाबलपरीक्षायां न कोऽपि दोष इति। राजबलेन धर्मस्य परिवर्तनकथापि बहुशोऽशोकादारभ्य परीक्षिता, इति राजबलं वर्तत इति गर्वो न चिरजीवी स्यादित्येव पश्यामः। राजानो हि प्रसन्नगभीराश्चारदृष्टयश्च कदा वा केन मार्गेण गमिष्यन्तीति न निश्चयः। न हि राज्ञां तात्कालिको भाव एवाजीवं स्थायीति दृश्यते, समयानुसारिणो हि राजानः। डाक्टर-कुरुतुकोटिमहाशयास्तु नासिकक्षेत्रे पण्डितसभायां संघटितायामनेकसहस्रजन-संकुलायां मिस् मिझरशुद्धिविषये कियत् पूर्वापरविरुद्धं व्यवहरन्ति स्मेति सर्व एवेदं जानन्ति। न हि शास्त्रपारतन्त्र्यं विना धर्मज्ञता नाम। उक्तं हि भगवता—"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ"—इति। अस्मिंश्च प्रसङ्गे स्वनामधन्य-तपस्विप्रवर-जगद्गुरु-श्रीशङ्करभगवत्पादानां श्रीकाञ्चीकामकोटिपीठाधीशानामुपदेशपरम्परातः कानिचन मङ्गलानुशासन-वाक्यानि संगृह्यन्ते, यानि सर्वेषां कर्णधाररूपाणि स्थास्यन्ति। तानि यथा—

(१) सर्वेऽपि भारतीयाः स्वस्वधर्माभिरुचयो भवन्तु।

(२) अस्तमियात् सर्वेषां भारतीयानामधार्मिकभावः।

(३) श्रुति-स्मृति-पुराणादिपरतन्त्राः सर्वे भवन्तु, न तु श्रुति-स्मृति-पुराणादीनात्मतन्त्रान् कर्तुं प्रयतन्ताम्।

(४) परिस्थितिमपि स्वीयां शास्त्रमनुसृत्य शुशोधयिषन्तु, न तु शास्त्रं स्वीयां परिस्थितिमनुसृत्य।

(५) भगवति वासुदेवे सदाशिवे परमात्मनि वा सर्वे समर्पयन्तु स्वीयानि सर्वाणि कर्माणि।

(६) लौकिककार्यावसरे काम-क्रोध-लोभादिपरवशा न केऽपि भवन्तु।

(७) प्रयतन्तां मरणावस्थायामन्ततो गत्वा भगवति भावेनावस्थातुम्, येन प्रथममात्मा सुरक्षितः स्यात्।

(८) धार्मिकशिक्षाप्रदानेनैव सन्तानरक्षार्थं सर्वेऽपि यतन्ताम्।

(९) विद्यालयादिद्वारेव प्रतिगृहमपि यथासंभवं जीविकार्थं परमुखनिरपेक्षास्स्वतन्त्रा अरूक्षा धर्मकामाश्च विशिष्टाः पण्डिता वर्धन्ताम्, येन शुद्धा धर्मव्यवस्था श्रद्धास्पदा च लब्धुं शक्येत।

(१०) धर्मशास्त्राविरोधेनार्थशास्त्रेण व्यवहरन्तु, न त्वर्थलोभेन धर्मशास्त्रस्याप्यन्यथाकरणार्थेन प्रयत्नेन।

(११) पुण्याहेषु पुण्यक्षेत्रेषु देवतायतनादिषु च पुराणश्रवणगोष्ठी-भगवन्नामकीर्तन-तन्नामस्मरणादिगोष्ठीबन्धेन समालोचयन्तु समुचितानुपायान् पराक्रम्यमाणस्वधर्मोद्धारसमर्थान्।

(१२) शुश्रूषन्तां भारतवर्षमनाथालय-धार्मिकशिक्षाप्रधानविद्यालय-चरकसुश्रुताद्यभिमतचिकित्साप्रणालीप्रधान-सुयोग्य-चिकित्सालयादिस्थापनेन

(१३) संमिलन्तु वैयक्तिकनिन्दा-द्वेषादिपरित्यागेन परस्परं स्वधर्मरक्षणार्थे व्यापारे सन्ततमैकमत्येन व्यवहरणेन। न जहतु धर्मं स्वीयं कामावेशेन भयावेशेन लोभावेशेन वा॥

(१५) स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु॥

(१६) काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥ इति।

# दरिद्रनिर्वेदः

[ निबन्धकः—वैद्याचार्य-श्रीभोलानाथकविराज-विद्यानिधि-सरस्वती-
कविभूषण-भिषग्रत्नायुर्वेदशास्त्री ]

( पदे पदे स्खलत्त्वेन बालिशत्वविकाशनात् ।
अपि दुष्टमिवापत्यं प्रीतये काव्यमात्मनः ॥ )

श्रीमन् दीनजनेश मे चिरभवं यन्नाम कामोत्कटं
नापक्रामति विष्णुचक्रभजनान्न ब्रह्मरन्ध्रादरात् ।*
मन्ये योगविदां वरेण विधिना दत्तादतीवोत्तमाद्
दुःखं तन्न निहन्यते नरपते लक्ष्मीविलासादृते ॥१॥†

अन्तर्दाह-विनिद्रता-प्रलपन-श्वास-भ्रमोद्वेजन-
प्रायः कायविशोषणः प्रतिदिनं यो मे गदो जायते ।
अभ्यस्ते बहुलङ्घनेऽप्यपघने यातेऽप्यतिक्षीणतां
नैवर्ते रसयोगतः क्वचिदसावार्तस्य मे शाम्यति ॥२॥

जिह्वा नीरसतां गता सुकविता नीता यथा दुर्जनं
चक्षुश्च क्षुधया निमग्नमभवत् सूक्तं प्रमत्ते यथा ।
शैथिल्यं गतमन्यदिन्द्रियमपि प्रायो निराहारतो
नित्याभ्यासविवर्जितं श्रुतमिव क्षीणस्य दीनस्य मे ॥३॥

लज्जा मज्जति मे जगज्जनगणाद् याच्ञावचोवाचने
तेजो भ्रंशत एव हा परिभवः सम्भाव्यते सर्वतः ।
सत्त्वं नैव विकाशते नरपते प्रज्ञाऽपि न ज्ञायते
दारिद्र्येण मम क्षुपद्रुततया नश्यन्ति सर्वे गुणाः ॥४॥

---

* विष्णुचक्ररसो नाम भेषजविशेषः, पक्षे षट्चक्रविशेषः । ब्रह्मरन्ध्ररसो नाम भेषजविशेषः, पक्षे योगशास्त्रोक्तस्थानविशेषः ।

† लक्ष्मीविलासरसो नाम भेषजविशेषः, पक्षे कमलाविलसितम् ।

पत्नी गर्भभरालसाऽपि सहसा दक्षाऽस्ति भिक्षाटने
पुत्रश्चाऽऽत्मकरं विलम्बितकरोऽप्युच्चैः करोत्याशया।
कन्याऽप्यन्यदृशामगोचरचरी चंक्रम्यतेऽन्नाशया
दारिद्र्यं मम दुर्घटं घटयति श्रीमन् महीमण्डले ॥५॥
काष्ठं कष्टसमाहृतं हृतमहो दुष्टैरिवाऽऽरण्यकै-
र्नीतं भोजनमण्डजैः कथमपि प्राप्तं प्रतीहारतः।
जग्धं दग्धमुखैः फलं च कपिभिर्हा मे गृहे जर्जरे
तिष्ठन्नोष्ठपुटे निविष्टसलिलः कष्टेन जीवाम्यहम् ॥६॥
तात त्वं मयि कातरे कुरु कृपां नन्वीषदप्याशय
प्रायः सर्वदिनं न किञ्चन मया भुक्तं बुभुक्षावता।
इत्थं बालशिशुं गृहे गलदसुं दृष्ट्वापि कष्टादहो
द्वारि द्वारि मया मुहुर्गतमथ प्राप्तं न किञ्चित् फलम् ॥७॥
पादत्राणविनाकृतं मम पदं संविध्यते कण्टकैः
शीर्षं वर्षनिदाघतापभरतश्छत्राद्दते घूर्णते।
वित्ताभाववशात् प्रदीपविरहाद् गाढान्धकारान्तरे
खद्योतद्युतिदीपिते पथि मया दुःखेन चंक्रम्यते ॥८॥
दुग्धं दग्धविधेर्न सम्भवति मे तक्रेऽपि वक्रो विधिः
सर्पिः केन समर्प्यतां शिरसि मे तैलावलेपः कुतः।
विश्वामित्रकपालमेव चषकं पत्रं च पात्रं महद्
हंहो दैन्यदशाकशाहततया जातोऽस्मि सर्वंसहः ॥९॥
भोज्यं व्यञ्जनवर्जितं कथमपि प्राप्तं कदन्नं क्वचिद्
दुर्गन्धं कृमिदूषितं बहुमलं पेयञ्च हेयं पयः।
शय्या भूमितले पलालशकले यूकादिकीटाकुले
चीरेणैव चिराय संवृततया कालो मया नीयते ॥१०॥
वस्त्रं मे प्रियया धृतं कथमपि च्छिन्नं शतग्रन्थिकं
शाकः पाकमृते विनापि लवणैर्जग्धीयते दुर्जरः।

दूरे गव्यरसास्तृषा शिशुगणैः पानीयमापीयते
चुल्ली च ज्वलनोज्झिता भवति मे झिल्लीरवैरावृता ॥११॥
स्थूणाशेषगृहान्तरे सकुहरे व्यालीनकाकोदरे
लूताव्याततचुल्लिकापरिसरे विश्रान्तवैश्वानरे ।
सातङ्कं क्रियते मया क्रमविधिः क्रोडे शिशून् रक्षता
दुःखेनैव बुभुक्षया प्रतिपदं प्राणात्ययाशङ्कया ॥१२॥
धाराप्लावितचुल्लिकापरिसरे मत्पर्णगेहान्तरे
पीठा हन्त लुठन्ति कूर्मसदृशाः का मे दशा वर्ण्यताम् ।
दीपस्तैलमृते वतेह लभते निर्वाणमाकालिकं
बालानां च विलापतो निशि हतो निद्राभियोगो मम ॥१३॥
ग्रीष्मो निःस्वतया सुदुःसहतमश्चण्डांशुचण्डातपाद्
वर्षा नैव सहर्षतां विदधते धाराधराप्लावनात् ।
नानन्दाय शरद् हिमर्तुरपि मे शीतार्तिसंपीडनाद्
हाहा हन्त वसन्त एष मधुरोऽप्यन्ताय चिन्तावतः ॥१४॥
सूचीकर्मणि दक्षता कुवसनच्छेदान्तरं सीव्यतः
क्लेशानां सहने तथा कुशलता प्रायो विपत्पाततः ।
नैपुण्यं कृषिषु स्वयं जनयतः शस्यान्यनेकान्यहो
संसारे प्रतिवासरं नरपते दीनस्य मे जायते ॥१५॥
यं प्रत्येव करोत्यनुग्रहविधिं कृष्णः प्रहृष्टः स्वयं
नूनं तस्य हरत्यसौ धनमदं येनैष निर्वेदतः ।
संसाराद् विरतो रतो भवति तत्पादाब्जसंसेवने
तद् दारिद्र्यमभद्रमदनमिदं भद्राय सम्भाव्यते ॥१६॥
केषां नाम विदामिदं न विदितं दीनः सुदामाऽभवच्-
श्रेष्ठो भक्तजनो हरेः करुणया सम्प्राप्तसम्पत्तिकः ।
दीनस्यैव हि बन्धुरस्ति भगवान् दैन्यादसौ लभ्यते
दीनस्यैव वशीभवत्यलमहो दैन्यं हि धन्यं सताम् ॥१७॥

अन्नाभावात् प्रतिदिनमिदं क्षीयते मे शरीरं
वस्त्राभावात् परिहितमहो चीरमेकान्तजीर्णम् ।
छत्राभावाच्छिरसि पतिता सह्यते वर्षधारा
वित्ताभावान्मम खलु दशा तापसस्येव देव ॥१८॥
भूमौ स्वापात् पतनमरणत्रासलेशोऽपि नास्ति
स्वल्पाशित्वादुदरज-रुजां कुत्र सम्भावना च ।
किञ्च स्तेयात् कथमपि भयं नास्ति मेऽकिञ्चनत्वा-
न्मन्ये दैन्यं सकलसुखदं शान्तिदाने निदानम् ॥१९॥
स्वल्पाहारः क्षितिषु शयनं सर्वदा नम्रभावः
कृष्णध्यानं करणयमनं सर्वभूतानुकम्पा ।
आशा वासो रुचिरतिचिरं क्षान्तियोगक्षमत्वं
दैन्ये मन्ये नृप बहुगुणाः सन्ति सन्तोषवृत्तेः ॥२०॥
क्षान्तिः शान्तिं जनयति मम त्यक्तमेवार्थजातं
सन्तोषोऽन्तः प्रभवति भवो हन्त संलीयतेऽद्य ।
नैवासत्यं प्रति मम रतिर्जायते जातबुद्धेः
का मे कामे रुचिररुचिरे निःस्वभावात् स्वभावात् ॥२१॥
यातायातं जगति नियतं जायते वासनातो
यावज्जीवं विषमविषये लीयमानस्य जन्तोः ।
दारिद्र्येण द्रवति हृदये सर्वतो मे विरागा-
न्नित्यं तत्त्वं स्फुरतु सततं सत्त्वशुद्धेर्हि सिद्धिः ॥२२॥
श्रीविष्णुपुरवास्तव्यश्रीहृषीकेशसूनुना ।
श्रीभोलानाथवैद्येन निर्वेदोऽयं विनिर्मितः ॥२३॥
चैत्रसंक्रमणे शाके वसु-वाण-पुराणमे ।
आविरासीदिदं काव्यं कवेर्दीनतया स्वयम् ॥२४॥

---

# अहो ! कनीयान् ग्रामणीः !!

[ निबन्धकः—आर्-रङ्गाचार्यः शिरोमणिः ]

हा !! राम !! किमेवं स्याम !!

कश्चन ग्रामः। गोविन्दपुरमिति। तस्य ग्रामणीः श्रीकण्ठः। असौ ज्यायान्। स्वकर्मणि कृतहस्तः। चिन्नुः। कनीयानसौ। यथाजातः। सुलभकोपः। अनाघ्राताक्षरः। शस्यकर्मणि कुशलः। सायंप्रातः क्षेत्रदर्शी। श्यावदन्तः। गोविन्दपुरवास्तव्यः कश्चन वणिक्। कस्यापि हेतोरसौ श्रीकण्ठायासूयामास। वणिगसौ स्ववैरं निर्यातयितुकामो बहूनुपायान् अचिन्तयत्। अन्ततश्चिन्नुमुपससार। असौ क्षेत्रं पर्यटन्नासीत्। अमुं वणिक् दृष्ट्वा भो मित्र ! त्वमनभिज्ञः कापट्यस्य। नखंपचोष्णे प्रदेशे प्रत्यहमटसि। भृशं परिश्राम्यसि। धनान्यार्जयसि। शरीरम् इक्षुपीडं निष्पीडयसि। ज्यायांसं स्वपोषं पुष्णासि। असौ तु गृह एव वसति। न बहिः पदात् पदमपि चलति। सुखं स्वादुङ्कारं भुङ्क्ते। आदिशति। अधिकरोति। न केवलमियत्। प्रत्युत त्वां मूढः, यथाजातः, अनभ्यस्त-विद्यः, विटनारीपरायणः, इति चान्यानि च उच्चावचं निन्दति। अधिक्षिपति। आर्जितानि धनानि अलक्षितं श्वश्रूगृहं प्रापयति। स्वभार्यायै नवनवानि अभ्यर्हितानि भूषणानि कारयति। वदति तु तानि श्वश्रूबन्धुजनैः प्राभृततया स्वभार्यायै समर्पितानीति। एवं मिथ्यागौरवं प्रकटयन् सुखं जीवति। अहो ! बत ! त्वं तु परमसात्त्विकः। अविद्वान् लोकतन्त्रस्य। यदि नाम त्व न परिश्राम्यसि, धनं वा नार्जयसि, कथमसौ जीविकां निर्वर्तयेत्। अस्य मासिकं वेतनं तु सप्त। अनेन कथमसौ जीवतु। बलवती ख्यातिर्ग्रामणीरिति। तव पितुरसावपि पुत्रः, त्वमपि पुत्रः। पिता च पुत्री। पुत्रौ युवां च पितृमन्तौ। पैतृकं धनं तु युवयोरुभयोरपि

साधारणम्। सुखदुःखे च समे। तेन सगौरवं ग्रामण्या भवितव्यम्। त्वया तु केवलं जनैर्लघुभावितेन व्रात्येन जीवितव्यमिति कोऽयं विधेर्वामः प्रक्रमः! का नामावाक्शिरस्कता। केयमव्यवस्था। कुतो न विनिमयः। कुतोऽसौ न क्षेत्रादिकं पर्यवेक्षताम्। कुतश्च त्वया ग्रामण्या न भूयताम्। असावपि पुरुषः। त्वमपि पुरुषः। यदि नाम त्वं सत्यं पुरुषोऽसि, वयं पश्येम, "किं तद् ग्रामणीत्वं तव करस्थं भवतीति। त्वयाऽपि विना शरीरायासं सुखं जीव्यत" इति चान्यानि प्रबोध्य प्रविशन् महिषो जलाशयमिव तदीयं शुभाशयं झटिति विह्वलयामास। अयमुपजापो लघु तस्य मनसि पदं लेभे। उपजातोद्वेगश्चिन्तुः "कथं वाऽयं ग्रामाधिकारस्तस्य हस्तादास्कन्दनीयः। यदि नामायम् ऋजुः प्रार्थ्यते किमसौ सपदि सरसं दद्यात्" इति चिन्तयामास। श्यावदन्तस्तु स्वेनोप्तदुर्नयबीजम् अङ्कुरोन्मुखमिति पश्यन् समुपजातकुतूहलो रुचिज्ञो बिडालः पयःपात्रमिवाजस्रं तेन सह सञ्चरमाणस्तं प्रोत्साहयन्निदमुपजजाप। "मित्र! मृदुर्हि सर्वदा परिभूयते। नास्मिन् काले सान्त्ववचनं फलेग्रहि। शृणुष्वेदं हितं मम वचः। इतः सत्वरं याहि। तवाग्रजो वेद्यां स्तम्भे पूर्वकायं साचि निवेशयन् सामि शयितः सुखमास्ते। यथावस्थितं निविडं तं तस्मिन् स्तम्भे रज्ज्वा यागपशुमिव दृढं बधान। सरभसं वेत्रेण तीक्ष्णान् त्रिचतुरान् प्रहारान् प्रयुङ्क्ष्व। ततः पश्य। कशाभिहतस्तुरग इव सपदि ग्रामाधिकारस्तव करस्थो भवति वा न वेति। इतरथा स सुदुर्लभः"। इति। स्ववैरं निर्यातयितुमेवमसौ धूर्तः कपटं कर्णे जपतीत्यविदन् प्रत्युत तत् आत्महितं मन्वानश्चिन्तुः सत्वरं प्रतस्थे। अग्रजं स्तम्भेन सम्यगबध्नात्। प्रबलं त्रिचतुरानिव प्रहारान् लोप्त्रेण गृहीते चौर इवास्मिन् प्रयुयुजे। अग्रजस्तु साहसस्यास्य कथन्ताम् अजानानो विस्मितो विह्वलश्च सन् अनुजमभिवीक्ष्य सादरं अङ्ग! को विशेषः! इति तमन्वयुङ्क्त। अनुजः। किमहो त्वयैव यावज्जीवं ग्रामाधिकारो भर्तव्यः। अहमप्येको वर्ते इति किं न जानासि। सपदि मय्यर्प्यतामयमधिकारः इति साटोपमतर्जयत्।

अग्रजः। अङ्ग! किमल्पस्य हेतोः साहसमाचरसि। यदि वाञ्छसि सद्यो दद्यां किल। किमित्येवमस्थाने प्रावर्तथाः। भवतु। नाधुनापि कापि हानिः। बन्धनान्मोचय माम्। अद्य प्रभृति ग्रामाधिकारस्त्वदायत्तः। बन्धनान्मुक्तोऽग्रजः कथमयमजातलोकानुभवो ग्रामाधिकारं वोढुं शक्ष्यत इति चिन्तयाऽनुजमुपदिशन् आसीत्।

तदात्वे तस्मिन् ग्रामे कस्यचिद् गृहस्थस्य माता मृता। गृहस्थः अश्वधावं प्रधाव्यागत्य यथाग्रामसमुदाचारं श्रीकण्ठस्य पादयोर्निपत्य अहो स्वामिनः! मम जनयित्री सद्योऽम्रियत। अहं दरिद्रः। किमिदानीं करवै। भवानेव शरणम्। इति उदश्रु गद्गदं प्रोवाच। श्रीकण्ठस्तु तस्य हस्ते दश रूपकाणि दत्त्वा "अङ्ग! किं कुर्मः। मा शोचीः। अलं रुदित्वा। मरणं प्रकृतिः शरीरिणाम्। अहो! कष्टम्! तव माता सुतरां साध्वी। सुगुणा। सर्वहितैषिणी। सा न केवलं तव माता। अपि तु ममापि। न केवलं ममापि। अपि तु अस्मिन् ग्रामे वसतां सर्वेषामपि। वयं तस्या मरणं प्रति विषीदामः। मा खिद्यस्व। अनन्तरकरणीयाय सज्जीभव" इति समाश्वास्य तं निवर्तयामास। तदनु चिन्तुं दृष्ट्वा "अङ्ग! एवमस्माभिर्दीनेषु दया प्रदर्शनीया। सानुशयं ते सान्त्वनीया इत्युपदिदेश।

चिन्तुस्सहर्षं ग्रामाधिकारमभ्युपेयिवान्। एकद्वानि दिनानि यथावद् व्यतीतानि। रणशूरः कश्चन सेनासमाजाद् ग्रामं प्रत्याजगाम। तस्य दयिता विषूचिकापदेशात् सद्योऽम्रियत। स च यथाक्रमं सत्वरमागत्य नवीनग्रामण्यः पादयोर्निपत्य "स्वामिनः मदीया कुटुम्बिनी दिवं गता। किं कुर्यामहमधुना, को वा शरणमिह" इति दुःखितो न्यवेदयत्। नवीनो ग्रामणीस्तमवलोक्य "अङ्ग मा रुदिहि। किं कुर्महे। जातस्य हि ध्रुवो मृत्युः। मृतो न जातु पुनरुज्जीवति। हन्त! कष्टम्! तव भार्या अतीव सुगुणा। रूपवती। सुशीला। किमसौ तव केवलं भार्या। न। अपि तु ममापि। न केवलं मम। किन्तु एतद्ग्रामसदां सर्वेषामपि। तस्या मरणं समाकर्ण्याहं शोचामीत्य"भिदधत् स्वयमतितरां दयालुरिति लोको

मन्यतामिति चिन्तयन् तस्मै द्विदशरूपकाणि दत्त्वा "याहि अनन्तरकरणीय-मवलोकय। मा खिद्यस्वे"ति अग्रजो मातृमरणे यथाऽब्रवीत् तथैव भार्या-मरणेऽपि उपचारवचांसि उदाजहार। रणशूरस्तु तस्य दुर्वचांसि समाकर्णयितुं नितरामक्षमः प्रवृद्धामर्षो झटिति समुत्थाय व्याघ्र इव एकोत्पातमाप्लुत्य नवीनग्रामण्यः कपोलयोः पञ्चषाश्चपेटिकाः कठिनमुदारञ्च सम्भावयामास। धनमगृहीत्वा तन्मुखमपश्यन् चटुलं प्रययौ। अग्रजस्तु गृहाभ्यन्तरात् सवेगमागत्य 'को विशेषः' इति भ्रातरमपृच्छत्। चिन्तुस्तु यथावत् सर्वमवदत्। तच्छ्रुत्वाऽग्रजो विषण्णः "अङ्ग! सर्वत्र कर्मणि औचित्यमवेक्षणीयं किल। मातृकथा अन्या भार्याकथा चान्या। सा सर्वेषां भार्येत्युक्ते कस्य नाम कोपो न भवेत्। अहो! लोकव्यवहारं न जानीषे. किं कुर्यामि"ति शुशोच।

अनुजः अतिमात्रं दुःखितश्चपेटाप्रतिग्रहणमपि ग्रामाधिकारांशभूतः किम्। अलम्। अलम्। नाहमभिलषामि ईदृशमधिकारम्। त्वयै-वावलोक्यतामसौ। महानद्यायं परिभवो मे जातः। अयं परिभवो यावत् जनानां हृदयाद्विस्मरणेनापयातो भवति तावत् यत्र कुत्रापि अथवा तव श्वशुरगृहे स्थास्यामि। इत्युक्त्वा प्रातिष्ठत। ज्यायांस्तु बहुधा प्रतिषिषेध। न तस्य वचः कर्णे चकार। ज्यायानिदमेकमुपदिदेश। "तत्र गत्वा यत्किञ्चिद् मा प्रलप। यदि किञ्चिद् अवश्यं वक्तव्यं भाति, एकद्वानि वचांसि उक्त्वा तूष्णीं भूयताम्। ततोऽधिकं न किमपि वक्तव्यम्। वाग्यतो भव" इति।

चिन्तुस्तु सुदूरं पद्भ्यामटित्वा कथमपि ज्यायसः श्वश्रूगृहमाससाद। आगतं तं दृष्ट्वा श्वश्रूः सरभसं प्रत्युद्व्रज्य "आगन्तव्यम् आगन्तव्यं सम्बन्धिकुमार, कदा आगतोऽसि" इति कुशलं पप्रच्छ। चिन्तुः इदानीमेवागच्छामीति प्रत्यब्रवीत्। श्वश्रूः। अपि ग्रामे सर्वेऽपि कुशलिनः। अनुजः। आम्। श्वश्रूः। ज्यायान् किञ्चिदिवास्वस्थ आसीदिति वार्ता समाकर्णिता। इदानीं कथमास्ते। अपि कुशली? चिन्तुः। (स्वगतम्)

एकद्वेभ्यो नाधिकं वक्तव्यमिति किलाग्रजो मामुपादिशत्। इति विचिन्त्य किमप्यवदन् स्वललाटजस्वेदं केवलं परिममार्ज। श्वश्रूः। तूष्णीं भवन्तं ललाटं चक्षुश्च मार्जन्तं तं दृष्ट्वा किमप्यत्याहितमाशङ्कमाना किं ज्यायसो यत्किञ्चिदभद्रं समपद्यत। किं तत् प्रकटमभिधातुं कष्टायसे। किं तदेवं वक्तुमिहागतोऽसीव भासीति समुदश्रु प्रत्यपृच्छत्। अनुजो यथापुरं तूष्णीमास्त। अपि तु अध्वखेदात् "ऑ—ऊँ—ऑ" इति दीर्घमुष्णं निशश्वास। श्वश्रूजनस्योत्कण्ठा अकुण्ठा विषवद्ववृधे। "आत्मनो जामाता नियतं दिवं गतः। तत् स्पष्टमाख्यातुमनिच्छन्नयमनुजः स्वयं दुःख्यति" इति मम संप्रत्ययो निष्प्रत्यूह इति कृतमतिर्विलापगाथा रागमालिकया विस्तारयितुमुपचक्राम। मातृगृहं पूर्वमेवागतवती श्रीकण्ठस्य भार्या समाकर्ण्येमं प्रेयोनाशं मातरं दृढमाश्लिष्य बाला कुररीव करुणं चक्रन्द। विलपन्त्यावेते वीक्ष्यानुजश्चिन्नुः। किमप्यत्याहितमन्तर्गृहे समभवत्। वृश्चिकदंशो भवेदिति मन्वानः अभिक्रस्तरुणोक्षेव प्ररुराव। श्वशुरः, श्यालः, प्रातिवेशिकः, अन्येऽपि गृहस्थाः, सर्वेऽपि समागत्य चिन्नुं गाढमाश्लिष्य विलापक्रमं पर्यायेण प्रवर्तयामासुः। ग्रामपुरोहितः अविलम्बितमेव श्रीकण्ठभार्याया मूर्धजान, माङ्गल्यतन्तुं, भूषणानि च परिहारयामास। श्वेतवासे पर्यधीयत। चिन्नुस्तु नैतावता स्वकीयं वक्त्रं व्याददे। भुञ्जानोऽपि मूकवद् बुभुजे। न किमपि बभाषे। पश्यन्तः सर्वेऽपि ज्यायसो दुःखमनुचिन्त्य दुःखाविष्टमना न किमपि भाषितुमीष्ट इति मन्वाना अपगच्छन्।

अत्रागतस्यानुजस्य पञ्चषा मासा व्यतीताः। असौ स्वग्रामं प्रति प्रतस्थे। मध्येपथं स्वसुहृदमेकमपश्यत। तस्य गृहे कानिचिद्दिनान्युवास। ज्यायान् श्रीकण्ठस्तु चिराय विलम्बमानमनुजमनुचिन्त्य स्वश्वश्रूगृहं गत्वा अनुजः किं करोति का तस्य प्रवृत्तिरित्यादिकं विज्ञायाशु समागच्छेति स्वभृत्यं प्रणिधाय।

श्रीकण्ठस्य भार्या सद्यो मुण्डितमूर्धजा श्वेतवासोऽवगुण्ठितशिराः श्वेत-

कपोतीव ग्रामाद्बहिःस्थिते आराम इङ्गुदीफलानि भूमौ पतितानि अवनतानना समुद्धरन्ती दिवं गतं पतिमनुस्मृत्य—

"चम्बन्नववयसि......निःश्रीका जाताऽहम्" इति विलापगाथां मन्दं मन्दमनुवर्तमाना ददृशे। तदा तत्र गतो भूयः पक्किलिः "भो! मातः! अनुजः श्यालः चिन्न्वार्यः अत्रागतः किल। संप्रत्यसौ कुत्रास्ते" इति तामन्वयुङ्क्त। प्रजावती तु निजां विलापगाथामविहायैव असौ—

"त-दा-नीमेयाय......त-दा-नीं प्रे-या-य" हन्त! हन्त!

इति कथयित्वाऽवनता स्वकर्मणि प्रसितासीत्। पक्किलिस्तु "अहो! अनुजस्य कथाऽत्रागतमात्रस्यैव अवसितेति प्रतिभाति। अत एवेयं भगिनी एवं रोदिति। इत्याकलयन् तरसा गोविन्दपुरं निववृते। श्रीकण्ठमपि अनुजवृत्तान्तं यथावद्विदितमकरोत्। तत उपरि किमभूदिति किमु वक्तव्यम्। श्रीकण्ठो रुरोद। गृहजना रुरुदुः। ग्रामस्था अरोदन्। इतस्ततो धावन्तः शुनकाश्चोरभयादयं कोलाहल इति "बुक्-बुक्" इति समबुक्कन्। रोदनक्रमो महानासीत्। मुहूर्तात् परं स्वयमेव शशाम च। ततः पुरोहितो दर्भपाणिराविरास। ततो यथाक्रमं यथाविधि चिन्नुभार्या च परिहृतमूर्धजा मोचितमाङ्गल्या परिवीतश्वेतवासाश्च अवमुक्तभूषणा नव्यवैधव्यदुःखदूषिता तस्थौ। अहो! प्रजावती मुण्डा! कनीयसी मुण्डा! हा!! जीवत्यपि स्वस्वपत्यौ यातरौ हन्त!! मुण्डिते!!

सति व्यतिकरे तादृक्षे चिन्नुः खसुहृदो गृहात् प्रस्थाय स्वगृहमाययौ। वेद्यां निषसाद। ज्यायान् श्रीकण्ठो यदृच्छया गृहाद्बहिरागतः, अनुजं जीवन्तं प्रत्यागतं दृष्ट्वा विस्मयस्तिमितः स्वयमपि वेद्या अन्यत्र कोणे मौनमवलम्ब्यावतस्थे।

श्रीकण्ठस्य भार्या श्वश्रूदेवीं पुत्रशोकदूषितहृदयां समाश्वासयितुं प्रवहणमारुह्य निजभर्तृगृहमाजगाम। वेदिकाकोणे जोषं स्वस्थमव्याहतशरीरमासीनं निजदयितं ददर्श। बभ्राम। सवेपे। सपदि गृहाभ्यन्तरं प्रविवेश। कोणे कुत्रापि निषद्य मूकेव तस्थौ। श्रीकण्ठोऽपि आत्मनो भार्यां

परिहृतमूर्धजां निराभरणां शून्यकण्ठनासापाणिमालक्ष्य भ्रान्तो वृश्चिकदष्ट-श्चोरकिशोर इव "अहो !! केयं दुरवस्था !! कोऽयं दशापरीवर्तः" इति शोचन् शनैः शनैरन्तर्गृहमविशत्। चिन्नुस्वामिनो भार्याकन्यामधिकृत्य किमधिकं वक्तव्यम्। हा !! राम !! किमेवं स्याम !!

---

## प्रार्थना

[ निबन्धकः—श्रीयोगेन्द्रमोहन-विद्यारत्नः ]

निजकर्मफलोत्थयातना-विषदग्धास्तनयास्तवागमात्।
मुदमद्य परां गताः शुभे जननी स्वर्गसुखाद् गरीयसी ॥१॥

बहुविघ्नविपत्तिभिः समं समरे श्रान्ततमा निराशताम्।
उपगम्य सुतास्तवाधुना परितापानलदग्धमानसाः ॥२॥

वचने पटुतां वितन्वतां मनुजानां कतिधाऽत्र जल्पनाः।
ननु कर्मठसत्यवाग्जनो वत ! वङ्गेषु न दृश्यतेऽधुना ॥३॥

इयमद्य सुरेन्द्रनाथभूः प्रतिजुष्टा किल चित्तरञ्जनैः।
उपदेशकशाप्रपीडिता प्रतिकार्यं वत ! हीनशक्तिभिः ॥४॥

निजदेशहितैषणाच्छलात् सुजनान् स्वार्थपराः प्रतीशते।
व्यवसायमतिप्रणोदिता बहुवार्तावहपत्रसेविनः ॥५॥

कपटः किल लम्पटः शठः प्रभुशक्तिं प्रतिपद्य वञ्चयन्।
जनतां निजकोषमेधयन् गुणिलभ्यं पदमेत्य गर्वभाक् ॥६॥

अधुनाऽन्नमिहास्ति तस्य नो गुणढक्काध्वनको न यः स्वयम् ।
इति साधुरिहाद्य दुर्दशः स्वगुणाख्यानरतिं न मर्षयन् ॥७॥

परवञ्चनबुद्धिचातुरीं प्रचुरां दर्शयतीह योऽनिशम् ।
अधुनात्र स एव बुद्धिमान् अपरान् धिक् सकलान् किलाधमान् ॥८॥

विपरीतरतिर्दुरायतिः कतिधाऽत्र प्रचलत्यबाधिता ।
अपराधशतं नु तस्य तद् यदि सत्यं कथयेदिदं जनः ॥९॥

पशुभावगता नरा मुदा प्रमदा धर्षयितुं समन्ततः ।
विजयन्त इतीह दुःखदं सुरभूमावसुरस्य ताण्डवम् ॥१०॥

अबला प्रबला कलौ भवेदिति वाक्यं वितथं न दृश्यते ।
प्रगतिप्रवणाशुभानना प्रतिमार्गं मदनप्रवृद्धिकृत् ॥११॥

ननु संयमहीनलालसा-लसितानां सविधे नृणां सदा ।
यदि पीनपयोधरा मुदा प्रमदा यान्ति भवेच्छुभं किमु ? ॥१२॥

चरमा बत दुर्दशा यथा प्रभवेत् पुष्टतमा प्रकर्षतः ।
सकलं किल लक्ष्म तत् तथा ननु रोगादिभिरद्य लक्ष्यते ॥१३॥

नवमार्गविसर्गमन्थरान् ऋषिवाक्यामृतहीनलालसान् ।
अवताद् भवदुःखहारिणि ! जननि ! त्राणपथं प्रदर्श्य नः ॥१४॥

# धर्ममीमांसा

( पूर्वानुवृत्तिः )

[ निबन्धकः—श्रीगोपालकृष्ण-वेदान्ताचार्यः, एम. ए. ]

नीचानां देशजातानां लेखनं स समाचरेत् ।
गणकत्वं विचित्रञ्च वीजपाटीप्रभेदतः ॥
अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ ।
चातुर्वर्ण्यस्य सेवां हि लिपिलेखनसाधनम् ॥
व्यवसायः शिल्पकर्म तज्जीवनमुदाहृतम् ।
शिखां यज्ञोपवीतञ्च वस्त्रमारक्तमम्भसा ॥
स्पर्शनं देवतानाञ्च कायस्थाग्रो विवर्जयेत् ॥ इति ।

एतैः स्मृति-पुराणप्रमाणैः कायस्थानां त्रैविध्यमुपलभ्यते । तेषु केचित् क्षत्रियाः केचिदनुलोमवर्णसङ्करा वैश्याः अन्ये च प्रतिलोमसङ्कीर्णसङ्करत्वाच्छूद्रा एव । इमानेव शूद्रान् मनसिकृत्याह व्यासो यथा—

वर्द्धकी नापितो गोप आशापः कुम्भकारकः ।
वणिक्-किरात-कायस्थ-मालाकार-कुटुम्बिनः ॥
एते चान्ये च बहवः शूद्रा भिन्नाः स्वकर्मभिः ।

इत्यादि । ननु ये कायस्था नन्दिकेश्वरस्कन्दपुराणोक्ताः क्षत्रिया ये चोशनःस्मृत्युक्ता वैश्यास्तेषामुपनयनसंस्कारो विधीयते न वेति चेद्-त्रोच्यते । येषां पूर्वापरं संस्कारोऽयं वर्त्तते तेषां न बाधः । येषान्तु पुरुषत्रयं यावद् व्रात्यता तेषामपि प्रायश्चित्तानन्तरं संस्कारो विधीयते । पुरुषत्रयात् परन्तु चिरव्रात्यत्वमेषां जायते । तथाच विष्णुः "व्रात्याः पतितास्त्रिपुरुषं मातृतः पितृतश्चाशुद्धा" इति । अस्यायमर्थः—ये व्रात्या कारणान्तरात् पतिताश्च त्रिपुरुषमकृतप्रायश्चित्तास्तेऽशुद्धाः उपनयनसंस्कारानर्हा इत्यर्थः । आपस्तम्बोऽप्याह—"अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां

ते ब्रह्महसंस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत्। तेषामिच्छतां प्रायश्चित्तं यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरोऽथोपनयनम् तत उदक-स्पर्शनमि"ति। अस्यार्थः—यस्य वटोः पिता पितामहश्चानुपेतौ स्यातां स स्वयं पिता पितामहश्च ब्रह्महतुल्याः। यथा ब्रह्महसमीपेऽभ्यागमनादिकं त्यजेत् तथा तेषामपीत्यर्थः। अथ ते चेत् प्रायश्चित्तमिच्छन्ति तदा यथा प्रथमे पुरुषे स्वस्मिन्नुपनयनकालातिक्रमे ऋतुः मासद्वयव्यापि व्रतम् शुद्धिहेतुः एवमन्य-स्मिन् द्वितीयादिपुरुषे संवत्सरः शुद्धिहेतुः तत उपनयनादिकं कार्यमिति। ननु—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः॥

इत्यनेन वचनेन मनुना उपनयनस्य मुख्यकालमुक्त्वा—आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्त्तते। इत्यादि वाक्येन गौणकालः प्रदर्शितः। ततश्च—

अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥

इत्यनेन यस्य व्रात्यत्वं निरूपयति, तस्य—

सावित्री पतिता यस्य दशवर्षाणि पञ्च च।
सशिखं वपनं कृत्वा व्रतं कुर्यात् समाहितः॥

इत्यादिवचनविहितमुद्दालकादिव्रताचरणं विधायोपनयनसंस्कारो व्यवस्था-पितः। पुरुषत्रयस्यानुपनयने संस्कारार्थं कीदृशी व्यवस्था इति चेत् एकपुरुषे यथा मासद्वयव्याप्युद्दालकव्रताचरणव्यवस्था मन्वादिभिरभिहिता तथापस्तम्बेनापि पुरुषद्वये पुरुषत्रये वा वर्षव्यापि व्रताचरणं व्यवस्थापितम्, पापस्य लघुत्व-गुरुत्वभेदेन प्रायश्चित्तस्यापि लघुत्व-गुरुत्वादिकमुन्नेयमिति न किञ्चिदसामञ्जस्यम्।

अत एव कुम्भकारवणिजादीनामुपनयनार्हत्वेऽपि बहुपुरुषं संस्कारा-भावेन शूद्रसमत्वादेव व्यासेनोक्तं "शूद्रा भिन्नाः स्वकर्मभिरि"ति। येषान्तु

क्षत्रियादीनामुपनयनसंस्कारार्हानुलोमसङ्कराणाञ्च पुरुषपरम्परया उपनयन-संस्कारो न व्याहतस्तेषां न शूद्रत्वप्राप्तिरिति ज्ञेयम्। यत्तु केचित्—

युगे जघन्ये द्वे जातौ ब्राह्मणः शूद्र एव च।

इति यमस्मृतिवचनमुदाहृत्य कलौ क्षत्रियादिजातीनामभावं वर्णयन्ति तत्र यमवचनस्य समूलत्वं चिन्त्यम्। व्रात्यदोषबाहुल्यमुद्दिश्य वोक्तम्। कैश्चित्तु निबन्धृभिः सच्छूद्राणान्तु नामकरणे वसु-घोषादिरूपपद्धतियुक्त-नामत्वञ्च बोध्यमित्युक्तम्, तत्रेदं तात्पर्यम् वसु-घोष-मित्रादयस्तु वैश्यजाते-रेवोपाधिः। तथाच मनुः—

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥ इति।

यमोऽपि—

शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्॥

इत्याह। प्राचीनेष्वपि वैश्यानामेव वसु-मित्र-दत्ताद्युपाधिव्यवहारो दृश्यते। तेनैषां जात्या वैश्यत्वमेव। परन्तूपनयनसंस्काराभावाद् वङ्गेषु सच्छूद्र-समत्वमधुनेति सम्भवति। एतेन व्रात्यत्वात् शूद्रसमत्वेऽपि कस्यापि वर्णजातिगतपद्धतितः प्रच्युतिर्न जायत इत्यर्थ आयाति। ब्राह्मणात् शूद्राया-मुत्पन्नस्य जातिं वृत्तिञ्चाहोशना यथा—

शूद्रायां विधिना विप्राज्जातः पारसवो मतः।
भद्रकादीन् समाश्रित्य जीवेयुः पूजकाः स्मृताः॥
शिवाद्यागमविद्याद्यैस्तथा मङ्गलवृत्तिभिः।
तस्यां वै चौरसद्वृत्तो निषादो जात उच्यते॥
वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम्।

इति। भद्रकादीन् कृष्यादीन्। भद्रकालीमिति पाठे तु तन्नाम्नीं देवतामिति अर्थो बोध्यः। क्षत्रियाद् वैश्यायामुत्पन्नस्य वृत्तिमाहोशना यथा—

नृपाज्जातोऽथ गृह्यायां वैश्यायां विधिना सुतः ।
वैश्यवृत्त्या तु जीवेत न क्षत्रिं धर्ममाचरेत् ॥
तस्यां तस्यैव चौर्येण मणिकारः प्रजायते ।
मणीनां राजतां कुर्यान्मुक्तानां वेधनक्रियाम् ॥
प्रवालानाञ्च सूत्रत्वं शङ्खानां वलनक्रियाम् ।

इति । सूत इति मन्वाद्युक्तो माहिष्य इति नाम्ना प्रसिद्धः । क्षत्रियाच्छूद्रायामुत्पन्नस्य वृत्तिमाहोशना यथा—

शूद्रायां विप्रसंसर्गाज्जात उग्र इति स्मृतः ।
नृपस्य दण्डधारः स्याद् दण्डं दण्ड्येषु सञ्चरेत् ॥
तस्यां वै चौरसंवृत्त्या जातः शूलिक उच्यते ।
जातदुष्टान् समारोप्य शूलकर्मणि योजयेत् ॥

इति । विप्रसंसर्गादिति विप्रपदेन क्षत्रिय उच्यते मन्वादिभिरेकवाक्यत्वादिति । विप्र इति सम्बोधनपदं वा, मन्वादिभिरेकवाक्यत्वेन संसर्गोऽत्र क्षत्रियस्यैव । क्षत्रसंसर्गादिति पाठे तु स्पष्ट एवार्थः । वैश्याच्छूद्रायां जातस्य वृत्तिमाह स एव यथा—

शूद्रायां वैश्यसंसर्गाद् विधिना सूचकः स्मृतः ।
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा ॥

सूचकः मन्वादिभिर्यः करण उक्तः स एव शिल्पकर्माणि प्रासादादिनिर्माणञ्च कुर्यादित्यर्थः ।

शूद्रायां वैश्यतश्चौर्यात् कटकार इति स्मृतः ।
वैखानसेन केचित्तु केचिद् भागवतेन च ॥
वेदशाखावलम्बास्ते भविष्यन्ति कलौ युगे ।

इति । अनधिकारित्वेऽपि कलौ कालधर्मादेव कटकाराणां वैदिकधर्मावलम्बित्वमित्याशयः । अथ प्रतिलोमजातानां वृत्तिरुच्यते । तथा चोशनाः ।

नृपाद् ब्राह्मणकन्यायां विवाहेषु समन्वयात् ।
जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ॥
वेदानर्हस्तथाचैषां धर्माणामनुबोधकः ॥

इति। द्विज इति द्विजोत्पन्नत्वादभिधानमात्रम्। आचारस्तस्य शूद्रवत् वेदानर्हत्वेनोपनयनसंस्काराभावात्। पुराणेष्वधिकारस्त्वस्य प्रागेव निरूपितः। अपरमपि—

ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रजायते ।
वृत्तञ्च शूद्रवत् तस्य द्विजत्वं प्रतिषिध्यते ॥

( क्रमशः )

---

# संस्कृत-साहित्य-परिषद् एकविंशवर्षीय-कार्यविवरणम्

[ निबन्धकः—श्रीअमरेश्वरठाकुर-वेदान्तशास्त्री ]

आदौ तावन्निखिलविद्याधिष्ठात्रीं वागदेवीं भूयो भूयः प्रणम्य संस्कृत-साहित्यपरिषदः परिपोषकान् समागतान् सुधीवर्यांश्च यथायोग्यमभिवादन-प्रमोदपरिष्वङ्गं विज्ञाप्य सभापतिमहोदयस्य समाज्ञया संस्कृतसाहित्य-परिषद एकविंशवार्षिककार्यजातं विवरीतुमुत्सहामहे ॥

प्रारम्भ एव सर्वजनपूजितानां भारतहितैकप्राणानां महामान्यानां कालकवलं गतानां सम्राड्महोदयानां पञ्चमजर्ज-इत्येतेषां द्वितीयः पुत्रः 'षष्ठजर्ज' इति नाम परिगृह्य राजसिंहासनं समारूढ इति कोऽप्यनिर्वचनीय आनन्दः प्रकट्यते। अतः परं शोकभारपर्याकुलमानसैरस्माभिः परिषदि प्रत्यकृत्रिमम् अनुरागं प्रकटितवतां केषाञ्चन महापुरुषाणां वियोगवार्त्ता

भवतां पुरतः समवतार्यन्ते । ये नामासन नैयायिककेसरिणो महामहोपाध्याय-पदभाजो वर्षस्यास्याजनाभस्य नाभिस्थानभाज इव सर्वदर्शनपरमाचार्या मनीषिणामग्रण्योऽसामान्यप्रतिभासम्पन्नाः कामाख्यानाथतर्कवागीशमहोदयाः, येऽप्यासन परिषदः सहकारिसभापतिपदमधिरूढपूर्वाः स्मार्तशिरोमणयो विद्वदग्रगण्या महामहोपाध्यायपदभाजः शितिकण्ठवाचस्पतिमहोदयाः, तेऽस्मान शोकाम्बुधौ निमज्य स्वकर्मार्जितं स्थानं समापन्नाः । द्वयेषामपि तेषां लोकान्तरप्रस्थानेन परिषदः पण्डितसमाजस्य, किं बहुना भारतवर्ष-स्याप्यपूरणीया क्षतिः समपद्यत । परिषद उन्नमनविधौ तेषामात्यन्तिकीं चेष्टामैकान्तिकमाग्रहं चानुध्यायन्तो वयमत्यन्तमेव विषीदामः । ये च परिषदः परमोपकारक आजीवनं सदस्यपदभाक् 'ढाका'निवासी भूस्वामी सूर्यकान्तरायचतुर्धुरीणमहोदयः, सुधीवरः सुधेन्दुकुमारदासः एम्. ए पि. एच डि, डाः अमियमाधव-मल्लिकः, शिक्षकवरः सुरेशचन्द्र-कुण्डु-महोदयः, ते सर्व एव परिषत्संसृष्टानस्मान दुःखमहाम्बुधौ निमज्जितान् कृत्वा द्युलोकं प्रस्थितवन्तः । परिषदः परमबान्धवानामेषां वियोगेन या हानिः संवृत्ता, न जानीमः पुनस्तस्याः पूर्तिः कथं भविष्यतीति । वयमेषां पुण्यां गतिं कामयामहे ।

मान्या भद्रमहोदयाः, विंशतिवर्षेभ्यः प्राग् अस्यामेव नगर्यां केषाञ्चन दरिद्राणामध्यापकानां छात्राणाञ्च प्रयत्नेन परिकल्पितेयं संस्कृतसाहित्य-परिषत् । जानन्त्येव भवन्तः कीदृक् प्रयत्नो वर्त्तते सर्वदैव विद्वत्सु तत्तद्-देशीयभाषाणां समुन्नत्यर्थम् । या संस्कृतभाषा श्रुतिस्मृतिपुराणादिशास्त्राणां धात्रीरूपा, या च भारतीयभाषानिवहानां जननी, या भाषा सर्वावयव-परिपुष्टा सर्वसमृद्धिशालिनी, या भाषा सौन्दर्येण गौरवेण भावगाम्भीर्येण च जागतिकभाषाजातेषु कामपि प्रतिष्ठां किमपि वैशिष्ट्यञ्चाधिकरोति, या भाषा देवभाषेति भारतीयैरार्यैराद्रियते च पूज्यते च, या खलु भाषा तत्तत्प्रदेशवासिन आर्यान् एकस्मिन्नेव सूत्रे ग्रथितुं प्राभवत्, यया खलु भाषया निखिलानाम् आर्यधर्मावलम्बिनां आजन्ममरणानुष्ठानानि सम्पा-

यन्ते, तस्या भाषायास्तन्निबद्धसाहित्यस्य च संरक्षणप्रसारौ कर्त्तव्याविति संस्कृतसाहित्यपरिषत्प्रतिष्ठापकानामुद्देश्यमासीत्। तदुद्देश्यं साधयितुं परिषदियं काश्चनोपायान् अवलम्बितवती। उपायेषु तेषु प्राधान्येन वर्त्तन्ते—

(१) साधारणसभाधिवेशनविधानम्, बाहुल्येन संस्कृतभाषया कार्याणां परिचालनम्, मासिकाधिवेशनेषु संस्कृतभाषोपनिबद्धानां निबन्धानां पाठश्च।

(२) चतुष्पाठीसंस्थापनेन शास्त्राध्यापनम्।

(३) ग्रन्थागारस्थापनम्, तत्र मुद्रितानां हस्तलिखितानाञ्च संस्कृत-ग्रन्थानां संरक्षणम्।

(४) अप्रकाशितपूर्वाणां संस्कृतग्रन्थानां प्रकाशः।

(५) संस्कृतभाषामय्याः पत्रिकायाः प्रचारः।

(६) संस्कृतरूपकाभिनयः।

(७) संस्कृतप्रतिष्ठानान्तरयोगः।

(८) शास्त्रव्याख्या च।

महाभागाः, उपायानिमानुपजीव्य परिषदियं विगते वर्षे किं किं कर्म कृतवती साफल्यञ्च कियल्लब्धवती, तत् सर्वं भवतां विज्ञानार्थम् उपन्य-स्यते।

(१) सभाधिवेशनानि।

(क) वार्षिकसभा—विगते वर्षे सौराश्विनस्य चतुर्दशदिवसे 'युनि भार्सिटी-इन्ष्टिटिउट्' इत्याख्ये भवने परिषदो त्रिंशवार्षिकमहोत्सवो यथा-रीत्यन्वष्ठीयत। तत्राऽऽध्यक्ष्यमासीत् सुगृहीताभिधानानां संस्कृतभाषायां संस्कृतशास्त्रे च श्रद्धावतां सुषङ्गाधिपानां महाराजेत्युपाधिमलङ्कुर्वाणानां श्रीमतां भूपेन्द्रचन्द्रसिंहशर्ममहोदयानाम्। विविधविद्यानिष्णातानां सुर-भारत्यां श्रद्धाशीलानां संस्कृतसाहित्यरसलोलुपानाञ्च सामाजिकानां समागमेन परिषत् किमप्यपूर्वं गौरवं समधत्त। सभापतिमहोदयेन स्वर्गतानां

कविराजशिरोमणि-श्यामादासवाचस्पतिमहोदयानां प्रतिकृतेरावरणोन्मोचनं कृतम्। महात्मनाममीषां विद्यावत्त्वं दाक्षिण्यं धर्मनिष्ठाम् अन्यांश्च बहून् सद्गुणान् समुत्कीर्त्य बहव एव विद्वांसस्तत्र सामाजिकानां चेतांसि श्रद्धायुक्तान्यकुर्वन्। अन्ते च परिषत्सदस्यैर्भासकविकृतस्य 'बालचरितम्' इत्याख्यस्य, बोधायनकविकृतस्य 'भगवदज्जुकीयम्' इत्याख्यस्य च रूपकस्याभिनयेन सर्वेषां चेतांसि समावर्जितानि समुपार्जिताश्च भूयांसः साधुवादाः। प्रसङ्गतश्चेदं सकृतज्ञताकमङ्गीक्रियते—यत् कविराजशिरोमणि-महोदयस्य प्रतिकृतेः सर्वोऽपि व्ययः सुयोग्येन तदीयपुत्रेण श्रीमता विमला-नन्दतर्कतीर्थमहोदयेणैवोढ्यत इति।

(ख) साधारणसभा—विगते वर्षे साधारणसभाधिवेशनानि यथारीति सञ्जातानि। तत्र तत्र विपश्चिद्भिः सारगर्भाः संस्कृतभाषामया निबन्धाः पठिताः सम्यक् पर्यालोचिताश्च। तेषु केचन परिषत्पत्रिकायां प्रकाश-मुपनीताः।

(ग) कार्यनिर्वाहकसमितिः—विगते वर्षे कार्यनिर्वाहकसमिते-रधिवेशनेषु तदधिकृताः प्रायः सर्व एव सदस्याः साग्रहं सम्भूय परिषदः कृत्यजातं सम्पादितवन्तः परिचालितवन्तश्च कर्त्तव्यमप्रमादेन।

(घ) विशेषाधिवेशनम्—आलोच्ये वर्षे त्रीणि विशेषाधिवेशनानि परिषदः संघटितानि। तत्रैकम्—पण्डितवर्यस्य श्रीमतो विधुशेखरभट्टाचार्य-शास्त्रिमहोदयस्य महामहोपाध्यायपदप्राप्तौ, कलिकाताविश्वविद्यालये प्रधान-संस्कृताध्यापकपदप्राप्तौ चानन्दविशेषं प्रकाशयितुं महामहोपाध्यायस्य श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थमहोदयस्य साभापत्येन सौरज्यैष्ठस्य पञ्च-दशदिवसे निरपद्यत। द्वितीयश्च—सौरज्यैष्ठस्य विंशदिवसे परिषदोऽन्य-तमसहकारिसभापतेः कलिकाता-संस्कृतमहाविद्यालयीय-न्यायशास्त्रप्रधाना-ध्यापकस्य महामहोपाध्याय-कुञ्जविहारितर्कसिद्धान्तमहाशयस्य, परिषदो भूतपूर्वान्यतमसहकारिसभापतेर्विद्यासागरविद्यालये प्रधानसंस्कृताध्यापकस्य राधारमणविद्याभूषणमहाशयस्य, परिषदः कार्यनिर्वाहकसमितेः सदस्य-

भूतस्य कृष्णचन्द्रस्मृतितीर्थमहाशयस्य च लोकान्तरप्राप्तौ शोकप्रकाशार्थं तस्यैव महामहोपाध्यायस्य दुर्गाचरणसाङ्ख्यवेदान्ततीर्थमहोदयस्य साभाध्यक्ष्येण समपद्यत। तृतीयश्च—परिषदः परमहितैषिणोऽन्यतम-सहसभापतेः महामहोपाध्याय-शितिकण्ठवाचस्पतिमहोदयस्य परलोकगमनेन महामहोपाध्याय-श्रीफणिभूषणतर्कवागीशमहोदयस्य नायकत्वेन सौर-फाल्गुनस्य सप्तमदिने समघटत। सर्वेष्वेवाधिवेशनेषु विद्वांसश्च भूस्वामिनश्च साधारणजनाश्च साग्रहं सम्भूय यथोपयोगमानन्दक्षोभादिकं प्रकटयकुर्वन्।

(२) चतुष्पाठी—पण्डितप्रकाण्डानां परिषदाचार्याणां श्रीमतां सीतानाथसिद्धान्तवागीशमहोदयानाम् अध्यापनपाटवं बहूनेव विद्यार्थिनः परिषदं प्रति समाकृष्टानकार्षीत, आलोच्यवर्षे काव्य-व्याकरण-दर्शनादि-शास्त्रेषु त्रिंशदधिकाश्छात्राः कृतपरिश्रमा वर्त्तन्ते। आगामिनि वर्षे श्रीयुक्त-सिद्धान्तवागीशमहोदयानां साहायकार्थं श्रीयुक्तरामधनभट्टाचार्यकाव्यतीर्थः श्रीयुक्तजगदीशचन्द्रभट्टाचार्यकाव्यव्याकरणतीर्थश्च सहकार्यध्यापकपदे निर्वा-चितौ। २८ नं० अश्विनीदत्तरोड, इत्याख्यस्थानस्थिते परिषदः स्वकीये गृहे प्रतिष्ठितायां शाखाचतुष्पाठ्यामध्यापनभारः पण्डितप्रवरेषु श्रीमत्सु जानकीनाथसाहित्यशास्त्रिमहोदयेष्वर्पितो वर्त्तते।

विद्यार्थिनः खलु गुरुगृहमेत्य तत एव आहार्यं वासस्थानञ्च आसाद्य विद्याग्रहणसौकर्यं लभन्त इति सुप्राचीनेयं भारतीया रीतिः। साम्प्रतम् अध्यापकानां दारिद्र्यातिशयेन क्रमशो विलोपमापद्यमानाया अस्या रीतेः कथञ्चित् संरक्षणार्थं परिषत् प्रतिवर्षं छात्रेभ्यो यथाशक्ति वृत्तिं प्रददाति। परन्त्विदानीमपि प्रयोजनानुरूपार्थागमविरहाद् वृत्तेः परिमाणं वर्धयितुं नैव शक्नोति। अत्यन्तापेक्षितं छात्रावासनिर्माणं चिरादभीप्सितमपि नैव सम्भवति। अत्रार्थे वदान्यतमानां समवधानं दीयमानमभ्यर्थयामहे। चतुष्पाठीसाहायकविधौ कलिकाताकर्पोरेशन इत्याख्यसंसद् अस्मभ्यं चत्वारिंशदधिकां मुद्राणां द्विशतीं प्रायच्छत्, एतदर्थं तदधिकृताः पुरुषा अस्माकं धन्यवादान् अर्हन्ति।

( ३ ) ग्रन्थागारम्—ग्रन्थागारस्य परिपुष्टिः समुन्नतिश्च यावच्छक्ति विधीयेते। अन्यत्र दुष्प्रापा बहवो ग्रन्था अत्र वर्तन्ते। अनुसन्धान-निरताश्छात्रा अध्यापका अन्ये च विद्वांसः स्वाभिमतग्रन्थप्राप्तौ प्रायो वैफल्यं न भजन्त इत्यनल्पमिदं प्रमोदपदं परिषत्परिचालकवर्गाणाम्। परिषद्ग्रन्थानां सुविस्तृतं विवरणं यथा प्रकाशमुपागच्छेत्, तदर्थमस्माभिः प्रयत्यते। परम् अर्थकृच्छ्रनिबन्धनः प्रत्यूहः कथमप्यतिक्रमितुं न शक्यते। कलिकाता-कर्पोरेशन-इत्याख्यसंसदः परिषद् विगते वर्षे ग्रन्था-गारोन्नयनार्थं रौप्यकाणां सार्द्धषट्शतीं प्राप्तवती। अतस्तदधिकृतेभ्यो हार्दिकान् धन्यवादान् वितरामः।

( ४ ) ग्रन्थप्रकाशः—अर्थाभावेन ग्रन्थप्रकाशविधौ समुल्लेखार्हं किमपि कृत्यं निष्पादयितुं नाशक्नुम। तथाप्यत्र परिषत्सदस्यैर्नैः शयानैः स्थियते क्रियते च यथाशक्ति प्रकाशविधौ कोऽपि यत्नः। अस्मिन् वर्षे अध्यापक-श्रीचिन्ताहरण-काव्यतीर्थ एम, ए महोदयानां सम्पादनया महाप्रभोश्चैतन्य-देवस्य मातुलेन विष्णुदासठाकुरेण विरचितं मनोदूतं नाम दूतकाव्यं प्रकाशितमभूत्। सोऽयं दूतकाव्यसंग्रहस्य द्वितीयो ग्रन्थः।

अपरञ्च, वङ्गेतरविषयवासिनां बोधसौकर्यार्थं वङ्गभाषामयस्य 'मेघनाद-बध' काव्यस्यानुवादः श्रीयुक्तनित्यगोपालविद्याविनोदमहोदयेन सम्पादितः परिषत्पत्रिकायां प्रकाशितः, प्रकाश्यते च श्रीयुक्तशरच्चन्द्रचट्टोपाध्यायस्य कृति 'दत्ता'नामोपन्यासः श्रीमता उपेन्द्रमोहनसाङ्ख्यतीर्थमहोदयेनानूद्यमानः। अनुवादावप्येतौ पृथग् ग्रन्थावेवेत्यर्हत एव ग्रन्थप्रकाशविधावुल्लेखम्।

( ५ ) परिषत्पत्रिका—विंशतिवर्षान् यथारीति प्रचरद्रूपं संस्कृत-साहित्यपरिषन्नाम परिषदो मासिकं मुखपत्रं भारतवर्षीयनानाप्रदेशवास्त-व्यानां सुधियां निबन्धजातैः परिगुम्फितं विनोदयति संस्कृतरसास्वादलुब्ध-चित्तानां विदुषां चेतांसीति विदितमेव सर्वेषाम्। इयं पत्रिका कलिकाता-विश्वविद्यालयाध्यापकेन नानाशास्त्रेषु लब्धप्रावीण्येन महामहोपाध्यायपद-भाजा पण्डितप्रकाण्डेन श्रीमता अनन्तकृष्णशास्त्रिमहोदयेन सम्पाद्यमाना

बाहुल्येन तस्यैव लेखैरलङ्कृता संस्कृतपत्रिकानिवहेष्वनन्यविलक्षणां प्रतिष्ठाम् अर्जयन्ती वैशिष्ट्यं किमपि धत्त इत्यत्र नात्युक्तिरस्माकम् ।

( ६ ) रूपकाभिनयः—सुरभारतीं प्रति जनानामनुरागसञ्जननार्थं परिषदा तत्सदस्यै रूपकाणामभिनयो विधीयते । अद्य यावद् अष्टाविंशति-संख्याकानि नाटकप्रहसनान्यभिनीतानि । तेषु अनेकान्येवानभिनीत-पूर्वाणि । प्राचीननाट्यकलायाः समुत्कर्षसाधने सर्वत्रैव परिषत्सदस्या अपूर्वं नैपुण्यम् आविष्कृतवन्तः, येन वङ्गविषयेभ्यो बहिरपि तैरासादितः समादरातिशयः ।

( ७ ) प्रतिष्ठानान्तरयोगः—पूर्वेष्विव वर्षेषु विगते वर्षेऽपि पूर्ववङ्ग-सारस्वतसमाजाधीनपरीक्षा परिषदः परिचालनेन निरपद्यत । अत्रास्माकं धन्यवादान् वहन्ति काशीमवाजार-पलिटेक्निक-विद्यालयाध्यक्षाः, यतस्ते तद्विद्यालयभवने परीक्षास्थानव्यवस्थां विहितवन्तः । संस्कृत-एसोसियेशन इत्याख्यसंसदाऽपि परिषदो योगोऽस्ति । परिषदाचार्याः श्रीमन्तः सीतानाथ-सिद्धान्तवागीशमहोदयाः परिषद एव निर्वाचनं लब्ध्वा संस्कृत एसोसिये-शन इत्यस्य सदस्या वर्तन्ते । एते हि पण्डितवर्याः काउन्सिल इत्याख्य-समितेरपि सदस्या निर्वाचिताः । एतत्तु परिषदो महते गौरवाय, आशास्महे परिषदो गौरवं तत्र तत्र सभायां तैः सुरक्षितं स्यादिति ।

( ८ ) शास्त्रव्याख्या—मातृभाषायां शास्त्रार्थव्याख्याश्रवणसमुत्सुकानां तृप्तिविधानाय परिषद्भवने प्रतिसप्ताहं मातृभाषया शास्त्रव्याख्या प्रचलति, अत्राधिकृता वर्तन्ते विभिन्नशास्त्रेषु लब्धप्रवेशाः समासादितप्रावीण्याश्च श्रीमन्तो जानकीनाथसाहित्यशास्त्रिमहोदयाः । विगते वर्षे महाभारतीय-विराटपर्व व्याख्यायते स्म । तद्व्याख्यया समागतानां शास्त्ररसपिपासूनां सुधीजनानां महान् उपकारस्तृप्त्यतिशयश्च समजायेतामिति परिषदो महत् प्रमोदस्थानम् । मान्या महाभागाः, परिषदो विगतवर्षीया कृत्यावली भवतां सकाशे संक्षेपेणोपस्थापिता ।

साम्प्रतं देशव्यापिन्यर्थबाधा वर्तते । तेन च परिषदो योऽर्थागम

# संस्कृत-साहित्य-परिषद् एकविंशवर्षीयो महोत्सवः

व्यतीते सौराश्विनस्य द्वादशदिवसे सायं सार्धषष्ठवादनसमये युनिवार्सिटि इन्ष्टिट्युट् भवने संस्कृत-साहित्य-परिषद् एकविंशो वार्षिक-महोत्सवो महता समारम्भेण सुसम्पन्नोऽभूत्। माननीयस्य विचारपतेः श्रीमतः चारुचन्द्रविश्वास सि, आइ, इ, एम्, ए, बि, एल् महोदयस्य नायकत्वेनानुष्ठितायामस्यां सभायां सत्यप्यान्तरीक्षे विघ्ने प्रायः पञ्चशती सभ्यानां समवेता सभाकार्यं निरवाहयत्।

सुगायकेन श्रीमता विष्णुपददत्तेन गीतेनोद्बोधितायां सभायां परिषदोऽन्यतरसम्पादकेन श्रीमता अमरेश्वरठाकुर-वेदान्तशास्त्रिणा पठितं परिषद् एकविंशवर्षीयकार्यविवरणम्। सहकारिसम्पादकान्तरेण श्रीमता दीनबन्धु-साहित्यशास्त्रिणा चैकविंशवर्षीयाणां कार्यपरिचालकानां नामानि प्रकाशितानि। समनन्तरञ्च सभापतिभिः स्वर्गतस्य परिषदोऽन्यतमसभापतेर्महा-महोपाध्याय-भागवतकुमारशास्त्रिमहोदयस्य प्रतिकृतिरुन्मोचिता।

श्रीयुक्तकालीपदतर्काचार्यमहोदयेन सभापतेर्धन्यवादे प्रदत्ते सभाभङ्गो जातः। समनन्तरं परिषत्सदस्यैः श्रीहर्षकविकृतस्य 'नागानन्दम्' इत्यस्य राजमहेन्द्रविक्रमवर्मकृतस्य 'मत्तविलासम्' इत्यस्य चाभिनयेन सर्वे सदस्याः समनुरञ्जिताः।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| December, 1937. | १८५९-शकीये अग्रहायणे २०श-वर्षस्य ८म-संख्या | Vol XX, No. 8 |
|---|---|---|


## उपदेशपरम्परा


[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य, श्रीकाञ्चीकामकोटिपीठाधीशानाम् ]


( ५ )

### अस्माकं मतम्

लोके बहूनि मतानि वर्तन्ते। एकैकस्य मतस्यैकैकं नामास्ति। सर्वेषां मतानां नामानि मानवानवलम्ब्यैव वर्तन्ते। तत्तन्मतं ये य उपजानन्ति, तेषां तेषां नाम्ना तत्तन्मतं व्यवह्रियमाणं वर्तते। बौद्धमतं बुद्धोपज्ञम्, जैनमतं जैनोपज्ञम्। माहम्मदं मतं महम्मदोपज्ञम्। क्रैस्तवमतं क्रिस्तूपज्ञम्। पारसीके एकं मतमासीत्। तत् जातस्थराभिधैरुपज्ञातम्। तन्मतस्था अस्मद्देशे सांप्रतं वर्तन्ते। चीनदेशे कन्फ्यूषियस-इत्येतैरुपज्ञातं मतमस्ति। एवमेकैकमपि मतमेकैकावतारपुरुषैरेकैकस्मिन् काले उपज्ञातं वर्तते। बहून् जनान् उपदिश्य स्वात्मसात्कुर्वन्तो महात्मान एव भवितुमर्हन्ति। एवमपराणि मतानि सर्वाण्येकैकपुरुषाभिधानानि वर्तन्ते। अस्मन्मतस्थं बालं "त्वं किम्मतः" इति कश्चन पृच्छति चेत्, आङ्गल-भाषायां यद्यधीती, तर्हि हिन्दुमतमिति वदति ; अन्यथा तदपि न जानाति। शासनपत्रलेखकान यदि पृच्छामः, तर्हि शिवमतम्, विष्णुमतम्, इति द्वे मते वदन्ति। परन्तु ते अप्यवान्तरविभागावेव भवतः। ते अपि न मनुष्यनाम्ना प्रसिध्यतः। सर्वेषामेतेषां साधारणं नाम किमिति पृच्छाम-

श्चेत, किमपि न जानन्ति। हिन्दुमतमित्युक्ते पितामहं पृच्छामश्चेत्, तदचिन्त्यमेव वर्तते। एकं क्रैस्तवं बहुपरम्परातः पूर्वतनं पृच्छामश्चेत, स क्रिस्तुमतमिति वदति। तद्वद् अस्माकं प्राचीनं नामैकं नास्ति। वस्तुगत्याऽस्मन्मतस्य किमपि नाम नास्ति। अवान्तरविभागानां नाम वर्तते चेदपि तान्यपि भगवतो नाम्नैव वर्तन्ते, नतु मनुष्यस्य नाम पश्यामः। शिवभक्ता विष्णुभक्ताश्च सर्व एकस्य मतस्याधीना इति जानन्ति। तत् साधारणं मतं किम्? तस्य नाम किम्? इति पृच्छामश्चेत्, किमपि न जानन्ति। केचन सनातनधर्मः इति किञ्चिद् नूतनं नाम वदन्ति। तत् न प्राचीनं नाम। अस्माकं मतस्य नाम यदि तत् स्यात् पितामहीं पृच्छामश्चेदपि ज्ञातव्यम्, अन्त्यजं पृच्छामश्चेदपि ज्ञातव्यम्। तथा पृच्छामश्चेत, ते सनातनधर्म इति वदेयुर्वा? अतस्तद् नाम न समुचितमिति ज्ञायते।

हिन्दुमतमिति ये केऽपि नाम कृतवन्तः। तस्य कारणं वर्तते। अस्मदीयाः सिन्धुतीरेऽवर्तन्त। तं सिन्धुं देशान्तरस्था हिन्दुः इति प्रावोचन्। सिन्धुदेशं हिन्दुदेश इति वदन्ति स्म। एकस्य देशस्य पार्श्वस्थदेशो यः, तद्देशनाम्नैव तदनन्तरदेशस्यापि व्यवहरणं स्वभावः। उत्तरदेशात् यः कोऽपि विरागी यदि समागच्छेत "काशीब्राह्मण" इति वयं वदामः। केरलदेशस्य समीपे वर्तते कोङ्कदेशः। तत्रत्यान् कोङ्कन् पट्टर् इति केरलीया वदन्ति। 'तञ्जावूर्' 'तिरुच्चनाप्पल्लि' जनपदस्थानपि कोङ्कन्-पट्टर् इत्येव वदन्ति। देशान्तरीयाः सर्वेऽपि तेषां 'कोङ्कन् पट्टर्' एव। आन्ध्रदेशस्याव्यवहितपूर्वभागे वर्तते 'अर्वा' देशः, तमरवदेश इत्यपि वदन्ति। तदनन्तरदेशा अपि तेषामरवदेशा एव। 'तमिल' भाषामरवभाषेति यद् वदन्ति, तत्रापीदमेव कारणम्। निरर्थशब्द इति सांप्रतं व्युत्पादयन्ति। तत् असाधु। विरागिणामुत्तरदेशे चूर्णं ददते। अस्मद्देशे तेभ्यः किमपि न दीयते। ते उत्तरदेशं गत्वैकं गीतं गायन्ति—

इञ्जा पीपो करे तेलुङ्गी नहि कुजारात् सन्तन।

ते दादे नरेलु।

अस्य गीतस्यान्ध्रा 'इल्ले' (न) 'पो' 'पो' (गच्छ गच्छ) इति वदन्ति। घृतं पृच्छ्यते चेत् नारिकेलतैलं ददते इत्यर्थः। इल्ले पो पो इति द्राविडानां पदानि। आन्ध्रास्तथा वदन्तीति विरागिणो वदन्ति। तेषां समीपस्थ आन्ध्रदेशः। अतस्तदनन्तरदेशस्थानपि तथैव व्यवहरन्ति। एतद्वदेव सिन्धुप्रदेशं दृष्टवन्तोऽप्यस्माकं सर्वं देशं हिन्दुदेश इति, अस्मान् हिन्दव इति, अस्माकं मतं हिन्दुमतमिति च व्यवहर्तुमारभन्त। ततो हिन्दुमतमित्यस्माकं मतस्योचितं प्राचीनं नाम न।

एकैकमतस्था अपि किमपि स्वस्यैकं चिह्नं रक्षन्तो वर्तन्ते, अस्माकं यथा साधारणं नाम किमपि नास्ति, तथैव साधारणं चिह्नमपि नास्ति। नामरूपशून्यमस्माकं मतम्। हिन्दूनां किं चिह्नम्? केचन भस्म धारयन्ति। केचनोर्ध्वपुण्ड्रं (नामम्) धारयन्ति। केचन शिवालय-इत्युक्त्यैव नेत्रे पिदधते। केचन लिङ्गं धारयन्तो वीरशैवा भवन्ति। तेषां वैष्णवानां दर्शनं विषायते। एतावतां साधारणं लक्ष्म किमस्ति? शिखां लक्ष्मेति किं वदामः? अस्मिन् काले तद् वक्तुं न पारयामः। अपि च चीनदेशस्था अपि शिखां रक्षन्ति। अतस्तामेकं लक्ष्मेति न वक्तुं प्रभवामः।

एवं विना चिह्नं स्थीयते खलु! किं वा लक्ष्म वक्तुमर्हामि इत्यचिन्तयम्। एकं चिह्नमुपाजानाम्। विष्णुमन्दिरे रथं वहति हिन्दुरिति एकं प्रत्यभात्। तस्मिन् दिनेऽन्त्यजमारभ्य ब्राह्मणान् यावत् रथं वहन्ति। शिवालयरथ इति चेत् वैष्णवा नागमिष्यन्ति, तत एव वैष्णवानां देवालय इत्यवदम्। किमप्येकं चिह्नमवश्यं वक्तव्यं खलु? ततो लीलयेदं स्वल्पं चिह्नमवदम्। क्रैस्तवा माहम्मदाश्च रथं वोढुं नागमिष्यन्ति, न वा?

एकं संस्कृतकथापुस्तकमपठम्। तस्मिन् एकस्य राज्ञो राजधानी वर्ण्यमानाऽस्ति। तत्र राजधान्यां केचन माहम्मदवीरा आसन्। तानधिकृत्य वर्णनावसरे "अक्षतश्रोत्रयुग्माः" इत्युक्तमस्ति। तेऽविद्धकर्णाः इति

तदर्थः। तदा हिन्दवो विद्धकर्णा इति स्मरणमभवत्। इदमेकं लौकिकं लक्ष्म। एवं किमप्यस्वरसमेव लक्ष्म वक्तव्यम्, ननु स्वरसं साधारणं किमपि लक्ष्मास्माकमस्ति नाम। कुतो नास्ति? चिह्नं कुतो नास्ति? अपरेषां मतानां वर्तते खलु! इति कस्मिश्च समयेऽचिन्तयम्। अनन्तरं ममातीव सन्तोष आसीत्। महद् गौरवं प्रत्यभात्। नामवति मते न जाताः खल्विति सन्तोषः समुदेत्। विना नामावस्थानमेकं गौरवमिति भावस्सम-भवत्।

मतं नाम किम्? जन्मग्रहणस्य प्रयोजनं प्राप्तुमुपदिश्यमानो मार्गः। श्रेयसो यत् साधनम्, तदेव मतं नाम। पुस्तकेषु तत् धर्म इति नाम्ना कथ्यते। जन्मोत्तरितुं मार्गस्स धर्म एव। नाम किमर्थम्?

अस्माकं ग्रामे 'रामु' इति नामानश्चत्वारः पुरुषा आसन्—एकः कृष्णः, एक उच्चः, अपरोऽर्धदृष्टिः, इतरः गौरवर्णः स्यात्। तान् एकैकतया व्यवहारावसरे—करुप्पु ( कृष्णः ) रामु, नेट्टै ( उच्चः ) रामु, अन्ध ( अर्ध-दृष्टिः ) रामु, शिवप्पु ( गौरः ) रामु इति व्यवहरन्ति। समीपस्थं ग्राम-मेकदाऽगच्छम्। तत्रैक एव 'रामु' आसीत्। कश्चन मां 'रामुमानये'त्य-वदत्। अहमस्मद्ग्रामचिन्तया को रामुः? इत्यपृच्छम्। सः—'किं को वा रामुरिति? कति रामवो वर्तन्ते? वर्तते एक एवेत्यपृच्छत्। एकस्मिन्नेव रामौ सति न लक्ष्मापेक्षितमिति मम प्रत्यभात्।

अस्माकं मतमन्तरेण सर्वेषामपरेषां मतानि सर्वाणि यत्किञ्चिन्मनुष्या-भिधानानि। तस्मात् पूर्वं तन्मतं नासीत्। सर्वेषां तेषां मतानां जन्मपत्री गणिता वर्तते। एतावता सर्वेषां मतानामुत्पत्तेः प्रागण्यमस्माकं मतमा-सीत्। अस्माकं मतमेकमेव यदाऽसीत्, तादृशः कश्चन प्राचीनः काल आसीत्। तस्मिन् काले तस्य पृथग् नामसत्ता नापेक्ष्यते, न वा? अपरेषु मतेषु सत्सु पृथक् नामचिह्नं चापेक्ष्यते। मतमित्येकमेव यदासीत्, तस्य नाम मतमित्येव। इदं मतमिति पृथक् निर्देशमेव नापेक्षामहे। सर्व-प्रथमसुत्पन्नं मतं पृथग् नाम विनैव खलूत्पन्नं स्यात्। एतस्य चिन्तना-

यामेवास्मिन् मते जाताः स्म इत्यधिकृत्यैका गौरवबुद्धिर्ममोदेति स्म। बहोः कालादिदं मतमासीत्, इत्यत्र अस्यैकं पृथक् नास्तीत्येव चिह्नम्।

अस्य प्राचीनस्य मतस्य कालावधिर्नास्ति। अनेनोपज्ञातमिति यदि स्यात्, अवधिरुच्येत। वेद एतावतः कालात् पूर्वमुत्पन्न इति केचन नवीना विमर्शका वदन्ति। तेषामेवैकस्य मतमपरो नानुमन्यते।

तदेवमस्माकं मतस्य नामाभाव एव चिह्नम्। नामाभावस्तस्य प्राचीनतां व्यनक्ति। तथाप्यस्यैकं चिह्नं वर्तते। तत् किम्? वेदोक्तेषु श्रद्धैवास्माकं साधारणं चिह्नम्। या कापि जातिर्भवतु, वेदं श्रद्धधीत। अस्मिन् काले देशान्तरीयविद्याभ्यासोऽत्यतिष्ठत, इत्यस्माकं शास्त्राण्य-स्मदीयानाचारविचारांश्चाश्रद्दधाना काचन परिस्थितिः समागता वर्तते। अतिनीचजातिरपि किमपि कस्यचन वचनं विमन्यते चेत्, 'तत् किं वेदवाक्यम्?' इति पृच्छति। इयं प्राचीनोक्तिः वेदवाक्यस्य वश्यवद्भूत्वा सर्वे वर्तितुमर्हन्तीति ज्ञापयति। अस्मिन् काले केवलं सा प्राचीनोक्तिः प्राणिति, तद्विना, तात्पर्यं ज्ञात्वाऽनुतिष्ठतीत्येतत्तु नास्त्येव।

वेदे यदुक्तं वर्तते, तथाऽस्मन्मतस्थाः सर्वा अपि जातय आचरि-तुमर्हन्ति। अस्माकं माता वेदमन्त्रो नोच्चारणीय इति यदि वदेत्, तर्हि तदा-ज्ञानुसारमेव गन्तव्यम्। कुतो नोच्चारणीय इति न प्रष्टव्यम्। तथा प्रश्ने क्रियमाणे मातृभक्तिर्वर्तत इति मिथ्यैव। मातरि रजःस्वलायां त्वं कथ-मस्माभिस्सह न भोक्तुमर्हसीत्युक्तिः किं भक्तिः? वेदोक्तानुसारमाचरण-मस्माकं कृत्यमिति सर्वेऽपि ज्ञातुमर्हन्ति। सर्वकुलीनानामपि वेदे श्रद्धा-ऽपेक्ष्यते।

इदानीं लोके विद्यमानानि मतानि चत्वारि, अथवा पञ्च भवेयुः। तानि सर्वाणि किञ्चित्पुरुषोपज्ञानि। तेषु पूर्वं साधारणं मतमेक-मस्तीदेव स्यात्। तदेवास्माकं मतम्। नामाभावेनैवेदं प्राचीनमिति जानीमः।

पूर्वस्मिन् काले सर्वेषामेकं मतमासीत्। तन्मतमस्माकं मतमित्यु-

च्यते, तस्मिन् काले सर्वेऽपि लोका वेदविश्वासिन आसन्निति स्यात् किल ! तथास्थिते प्रमाणानि वर्तन्ते वा ! इति यूयं पृच्छेत ।

इदानीन्तनानि मतानि द्विसहस्रवत्सरमध्य एवोत्पन्नानि । ततः पूर्वं कानिचन मतान्याविर्भूय तिरोऽभवन्निति स्यात् । ख्रैस्तवमतात् पूर्वं यूथानां मतमासीत् । हिन्दुमतमिव ग्रीगमतं प्राचीनमिति वदन्ति । तद् विनष्टमेव । अस्माकं मतमेकमेव वर्तते । सांप्रतमस्यापि नाडीं परीक्षमाणा वर्तन्ते ।

विद्यमानेष्विदं प्राचीनं मतमिति यदि स्यात्, तर्हि तदानीमिदं जातिवैषम्यमासीद्वेति पृच्छेयत । एशुक्रैष्टो यूथैश्चिलवैरकाष्ठेऽताड्यत । स नीचजातीनां कूपस्थमुदकमपिबदिति श्रूयते । स एको दोष इति कथ्यते । ततः प्राचीनेऽपि समये जातिवैषम्यमासीदेवेति व्यक्तीभवति ।

राजकीयाः प्रयन्तेन तत्र तत्र भूमिं खनित्वा बहूनि वस्तून्यन्वीक्ष्य चरितानि लिखन्ति । ईजिपट् देशे कुत्रचन ख्रैष्टस्य जन्मनः अशीत्यधिकद्विशताधिकसहस्रवत्सरेभ्यः (१२८०) प्राक् एकं शासनं भूमितोऽलभ्यतेति श्रूयते । तच्छासनं द्वयोः राज्ञोः परस्परकृतसमयबन्ध * एव । तस्मिन् दैवसाक्ष्यप्रसङ्गे मित्रावरुणौ निरदिश्येतामिति श्रूयते, ततस्तस्मिन् काले तस्मिन् देशे वेदभाग आसीदिति ज्ञायते, नवा ? ईजिपट् देशस्थेषु प्राचीनेषु राजसु अनेके रामनामानोऽवर्तन्त † आफ्रिकासमीपे मटकास्कर् इति कश्चन द्वीपो वर्तते । तत्रत्यानां ग्रामाणां नामसु शते पञ्च-सप्ततिनामानि संस्कृतनामानि वर्तन्ते । आफ्रिकादेशे काचन महती मरुभूमिरस्ति । तस्याः ( सहारा ) इति नाम । मरुभूमयस्सर्वाः कदाचन समुद्रवासस्थानान्यासन्निति वदन्ति । सहारासु प्राचीनकाले जलवनवत्

* Treaty of Rameses II with the Hitlites. See H.R. Hall—Ancient History of the Near East, 1.1. 364 &c.

† Rameses I, Rameses II, Rameses III.

स्थितासु तासां तीरदेशे जना अवसन् * तत्रत्यानि नामानि संस्कृतनामानि रामनामानि च वर्तन्ते ।

भूगोलेऽधोभागेऽप्यर्धे एतादृशानि चिह्नानि वर्तन्ते। अमेरिकास्थे 'मेक्सिको' इति देशे नवरात्रसमये कश्चनोत्सवः प्रचलति । तस्य 'रामसीता' इति नाम[1]। तत्र यत्र यत्र खन्यते, तत्र तत्र गणेशविग्रहा लभ्यन्ते । तत्र स्पेयन् देशस्थाः प्रविश्य तं नाशयामासुः। तत्रत्याः प्राचीना जनाः आस्तिकाः। 'अष्टेक्स्' इति सांप्रतं तान् वदन्ति। तत्रापरोऽप्येको देशो वर्तते। स त्वतितरां सुन्दरो देशः। तस्य नाम पेरु ( 'Peru )' इति। अस्माकं देशस्य साक्षादधोभागे वर्तते। तत्र सर्वे सूर्यालय उपासते। विषावेव तेषामुत्सवः प्रचलति। तेषां नामानि 'इनकास्' इति सांप्रतं व्यवह्रियन्ते। इन इति सूर्यस्य नाम। तत आगतं तद् नाम। ते सूर्योपासकाः। अतस्तद् नामालभन्त ।

अपरमपि विषयं लीलार्थं वदामि। भगीरथो गङ्गामानयदिति चरितं सर्वं एव जानन्ति। सागराः षष्टिसहस्रं जना यज्ञाश्वं गवेषयन्तो भूमिं खनित्वा पाताललोकमगमन्। कपिलस्याश्रमेऽश्वं विद्यमानं दृष्ट्वा तमुपाद्रवन्। तस्य मुनेर्दृष्टिपातेन सर्वेऽपि भस्मसादभवन्। तस्मिन् भस्मनि भगीरथो गङ्गामवतारयामासेत्यपठाम। पाताललोकोऽमेरिकादेशः। कपिलस्य तपस्यास्थानं कपिलारण्यं नाम स्थानं तत्र वर्तते। मधुराम् 'मरुतै' इति 'कुतिरै' ( द्रविडभाषायामश्वपर्यायं ) पदं ( 'कुरुतै' इति च। विपरिणम्य व्यवहरणमिव तत् 'कालिफोरणिय' ( California ) इति व्यवहरणं कुर्वन्ति। तस्य समीपे ( Horse Isand ) हार्स ऐलाण्ड् इति आष् ( Ash ) ऐलण्ड् इति द्वीपश्च वर्तते। अश्वबन्धनस्थानम्, भस्मावस्थानस्थानं च तौ।

---

* See Encyclopaedia Brittanica, Vol. 23, Tit. Sahara.

1 See p. 56 of the text and plate 24 by T. W. F. Gann—The Maya Indians of Southern Yucation, North and British Honduras.

आष्ट्रेलियादेशे नग्नाया एकस्या जातेश्चित्रमेकमपश्यम्। नेपथ्यं गृहीत्वा तासु नृत्यन्तीषु प्रतिफलितं तच्चित्रम्। तस्याधोभागे 'शिवनृत्यम्' ( Siva dance ) इति लिखितमासीत्। पुनः किञ्चित् सूक्ष्मेक्षिकया-ऽपश्यम्। गृहीतनेपथ्यानामेकैकस्या अपि ललाटे तृतीयं लोचनमासीत्।

"ईस्ट् इण्डीस्" इति द्वीपसंघेषु एकस्मिन् जावा देशेऽस्माकं मतस्य प्राचीनानि चिह्नानि बहूनि सन्तीति युष्माकं सम्यग् ज्ञायते। तत्र पोनियो इति कश्चन द्वीपो वर्तते। तत्र शतगुणितमार्गशिलापरिमाणं दीर्घमेकं वनं वर्तते। तत् सर्वं मनुष्योऽद्य यावत् नापश्यत् इति वदन्त आसन्। तदेव वर्जिन् वनम् ( virgin forest ) इति व्यवहरन्ति। ब्रह्मसृष्टिमारभ्य मनुजदुष्प्रवेशाऽरण्यानी वर्तत इति तन्नाम सूचयति। तदरण्यान्यन्तः कतीनांचन शतमार्गशिलानामन्तरन्तः प्रविष्टे एका शिलाऽऽसीत्। तत्रास्माकं ग्रन्थलिप्यां लिखितमिवैकं शासनमासीत्। तस्मिन् पठ्यमाने अयं राजाऽमुना यज्ञेन ययाज। अस्मिन् स्थाने यूपस्तम्भं स्थापयामास। ब्राह्मणेभ्यः कल्पकवृक्षमदात्।" इति तत्र लिखितमदृश्यत[2]। एतानीव बहूनि प्रमाणानि सांप्रतं लभ्यमानानि वर्तन्ते। आङ्गलभाषायां विद्यमानेषु पुस्तकेष्विदमुक्तमस्ति। अस्माकं मतं पर्यहासयत् आङ्गलभाषा। सांप्रतम् एतावन्ति सर्वाण्यज्ञापयदपि सैवाङ्गलभाषा। अतो न किमप्यनादरणीयमिति ज्ञायते। विषयग्रहणपाटवेन दृश्यते चेत्, यस्मिन् कस्मिन्नपि कानिचन तत्त्वानि स्युरेव।

एवं बहुषु स्थानेष्वस्मदीयस्य मतस्यानुगुणानि चिह्नानि लभ्यन्ते, इत्यस्मदीया इतस्तत्रागच्छन्, ततोऽत्र समागच्छन्निति केचन वदन्ति। सर्वत्रा-स्मदीये धर्मे एव स्थितवति कस्माच्चित् स्थानात् स्थानान्तरं किमर्थं गन्तव्यम्? तत्र तत्रैवासन् तानि तानीति कुतो न ग्रहीतुं योग्यम्? इतोऽगमन्निति मिथ्या। तथा वक्तव्यमिति न नियमः। बहूनां द्वीपानां

---

2 Baron Humboldt quoted in Har Bilas Sarda—Hindu Superiority, p. 151.

गमनं न योग्यमित्यस्मदीयानां शास्त्रोक्तिविरुद्धं तदिति वक्तुं मा भैष्महि। तत्र तत्रैवासन इत्येव ग्रहीतव्यम्।

अस्मदीयो धर्मोऽस्मदीयानि शास्त्राणि चात्यन्तं यदि प्राचीनानि, अस्मदीयेषु शास्त्रेपूक्तानि सत्यान्येव खलु स्युः ? अस्मदीयेषु शास्त्रेषु सप्त समुद्रा अवर्तन्तेति वर्ण्यन्ते—दुग्धसमुद्रः, घृतसमुद्रः, दधिसमुद्रः, सुरासमुद्रः, इक्षुसमुद्रः, शुद्धोदकसमुद्रः, लवणसमुद्र इति। तेषु सप्तसु सांप्रतं लवणसमुद्र एवावशिष्य वर्तते। अपरान् अद्यापि हूणा न समीक्षितवन्त इत्येव वक्तव्यम्!

ईश्वरो लोकस्य सर्वस्यापि एकमेव धर्मं व्यवास्थापयत्। कलौ तं धर्ममत्र देश एव स्थातुं व्यवास्थापयत्। सर्वेषु लोकेष्वयं धर्म आसीदित्यासीत्। इदानीं चरितविमर्शकाः पूर्वं स्थितं कंचन परदेशं महान् हिन्दुदेशः ( Greater India ) इति वदन्ति। सर्वोऽपि लोक इन्द्यादेश आसीदिति मन्ये। इति महान् हिन्दुदेशः ( Still Greater India ) इति वदामि।

अयं भूलोकस्सप्तद्वीपवान्। 'सप्तद्वीपा च मेदिनी' इत्याचार्या अवदन्[1]। तेषु सप्तसु जम्बूद्वीपे भारतवर्षे भरतखण्डे वयं वर्तामहे। एवमेव प्रतिद्वीपमनेके वर्षा वर्तन्ते। प्रतिवर्षमनेके खण्डा वर्तन्ते। सर्वे द्वीपा मेरोर्दक्षिणे पार्श्वे वर्तन्ते। मेरुः सर्वेषामुत्तरे पार्श्वे वर्तते। द्वयोरपि द्वीपयोर्मध्ये एकः समुद्रो वर्तते। एवं सप्तसमुद्राणामष्टौ द्वीपा अपेक्ष्यन्ते न वा? तस्योत्तरपार्श्व एव मेरुरिति कश्चन वर्तते। मेरुशिखरे स्वर्गो वर्तते। मेरुं चन्द्रसूर्यौ परिक्रमेते। मेरोः परं किमपि नास्ति। जपमालायां मेरुरिति कश्चन रुद्राक्षो वर्तते इत्यस्ति। तमनतिक्रम्य मालां परावृत्य परावृत्य संख्यातव्यम्। अयमेकः संप्रदायः। मेरुं नातिक्रामेत्। इदं महामेरुमतिक्रम्य गन्तुं किमपि नास्तीति ज्ञापयति।

---

1 See Asiatic Researches, Vol, I, p. 426.

अस्मदीयपाठशालायां बालैः पठ्यमानानि पुस्तकानि हूणानां लिखितमनुसृत्य वर्तन्ते। ते—'युष्माकं भूमिर्गोलाकारा वर्तत इति न ज्ञायते। अपूपशिलावत् वर्तत इति जानीथ। वयमेव तत् अशिक्षयामेति वदन्ति[1]।' तस्य शास्त्रस्यास्माकं भाषायां भूगोलशास्त्रमिति ब्रूवते। तत् प्राचीनं पदमेव भूमिर्गोलाकारेति शिक्षयति, न वा? गणितशास्त्रे भूगोलः, खगोल इति पदे न प्रयुज्येते वा? अण्डमिति वयं वदामः। तस्यार्थः कः? पेशी। अतोऽण्डानि पेश्याकाराणीति वयं बहुभ्यो वत्सरेभ्यः प्रागेव वा जानीमः, इति तत्पदमेव प्रमाणयति, न वा?

अस्माकं भूलोकं यद्येकं जम्बीरफलं गृह्णीयाम्, तस्य शिर एव मेरुशिखरम्। तस्य शिरोभागस्य सर्वा अपि दिशो दक्षिणदिशा एव। उपर्युत्तरा चेत्, सर्वा दिशो दक्षिणा न वा?

"सर्वेषामपि वर्षाणां मेरुरुत्तरतः स्थितः"[2] इत्यपीदमेव ज्ञापयति। मेरुं सूर्यः परिक्रमते। तत् कथम्? अस्माकं सर्वेषां सांप्रतं सूर्य आकाशे शिरस उपरि संचरति। मेरौ स्थीयते चेत्, पार्श्वे एव स्यात्। तत एव मेरुं सूर्यः परिक्रमत इत्युक्तमस्ति। तत्र षड् मासा दिवा। षड् मासा रात्रिः। उत्तरायणे उत्तरास्यां सूर्यो वर्तते, इति तस्मिन् काले मेरौ प्रकाशो वर्तते। दक्षिणायने रात्रिरेव। इदमेवाधिकृत्य मेरुशिखरे वसतां देवानामेको वत्सर एकं दिनमित्युच्यते। एवमेव दक्षिणदिशाया अग्रभागो मेरोर्मूलम्। उत्तरपार्श्वस्य सुमेरुरिति नाम। अधो नरकं वर्तते। दक्षिणभागस्य कुमेरुरिति नाम। सुमेरुमारभ्य कुमेरुपर्यन्तं सप्त द्वीपाः, कुमेरुमारभ्य सुमेरुपर्यन्तं सप्त समुद्राश्च वर्तन्त इति दृश्यते। इदानीं विद्यमानं दृश्यते चेत्, तदसत्यमिति प्रतिभाति। सप्त द्वीपान् न पश्यामः। सप्त समुद्रा न सन्ति। एतदधिकृत्य किञ्चिच्चिन्तयामः।

मेरोरुच्चस्य साक्षादुत्तरास्यां ध्रुवनक्षत्रमस्तीति शास्त्राणि वदन्ति।

1 Wallace—The Malay Archipelago, pp. 44-45

2 Yūpa inscription of Mūlavarman of Koeti, Borneo.

परं तु सांप्रतं किञ्चिद् विपरिणतं वर्तते। पुनः पुनरपि विपरिणममानमेव वर्तते। कदाचन शिरोदेश आसीदिति स्यात्।

बम्भ्रमं (Top) वेगेन भ्रमति। तस्योच्चस्थाने मध्यस्थानं ध्रुवस्थानमिति कृत्वा चिन्तयामः। एकस्मिन् समये तत् ऋजु, अतिरश्चीनं भमितुमुपक्रमते। अनन्तरं तिर्यग् भ्रमति। तद्वद् भूमिर्बम्भ्रम्यमाणाऽस्ति। कदाचिद् ध्रुवनक्षत्रस्याभिमुखं समं भ्रमणमासीत्। तथा समं भ्रान्तवत्यां सत्याम् भूमिः समुद्रश्च समं व्यवस्थिते आस्तामिति स्यात्। तदानीमेव सप्त द्वीपाः सप्त समुद्राश्च समं व्यवस्थिता आसन् इति स्यात्। भ्रमणे किञ्चिदिव परिवर्तनमात्रेणाव्यवस्थिताः संवर्तेरन्। तदानीं सर्वेषु समुद्रेषु मिलितेषु केवलं लवणसाद्भवन्। सप्त द्वीपा अपि व्यपरिवर्तन्त। इदानीमपि विपरिवर्तमाना एव वर्तन्ते।

पुराणेषूक्ता इमे विषयाः सर्वेऽत्यन्तप्राचीनकाले स्थितामवस्थां सूचयन्ति। युगस्यादौ सर्वे ग्रहा एकस्यामेव पङ्क्तावासन्। युगारम्भः ज्योतिःशास्त्रीयेण गणितेन ज्ञातुं शक्येत। संकल्पवाक्येष्विमानि गणितानि सन्ति। इदानीं द्वितीयपरार्धं चलति। एकस्य ब्रह्मणः परार्धद्वयं जीवनकालः। चतुर्युगसहस्राणि ब्रह्मण एकं दिनम्। तथा शतं वत्सरा एकं परम्। अयं कलियुग एव चतुर्लक्षाधिकवर्षवान्।

"ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे।" (महानारायणोपनिषत्)।

इत्यत्र वर्णाश्रमधर्मान्, विना त्रुटिमनुतिष्ठन्ति चेद्, ब्रह्मसभायां प्रविशन्तीति कथ्यते। तेषां तथाऽवस्थानमेकस्य परस्यान्तं यावदेव। ब्रह्मणि तस्य परस्यान्ते मुक्ते सति तेऽपि मुक्तिं प्राप्नुवन्ति। जीवन्मुक्ता अत्रैव मुक्तिं लभन्ते। यथा धममाचरन्तो ब्रह्मलोके वसन्ति। अस्माकं कालसंख्यैवं कथ्यमाना वर्तते।

भूमिर्भ्रमतीति वयं नवनवतयाऽजानीमेति वदन्ति। अप्पय्यदीक्षिता इति केचन महान्त आसन्। सांप्रतं वयं भस्म रुद्राक्षं वा धारयामः

तेषामेव प्रयत्नस्य फलम्। ते चतुरधिकशतं पुस्तकान्यलिखन्, शिवोत्कर्षमस्थापयन्। विष्णुद्वेषेण ते न तथाऽकुर्वत। विष्णुभक्तिरिति नामग्राहं शिवभक्तिं नाशयित्वा शिवद्वेषस्य वर्धनं ते धिगकुर्वत। शिवद्वेषं न सहेमेति शिवोत्कर्षं स्थापितवन्तः। विष्णुद्वेषिणो यद्य-भविष्यन, तर्हि विष्णुमधिकृत्य नालिखिष्यन्। विष्णुमधिकृत्यापि कानि-चन पुस्तकान्यलिखन्।

तेषां महात्मनां सोदरस्य पौत्राः नीलकण्ठदीक्षितनामान इति केचन महान्त आसन्। ते 'तिरुमलै नायकानां मन्त्रिण आसन्। ते कुत्रचनाप्य-य्यदीक्षितानस्तुवन्। तत्र भूमिर्भ्राम्यतीत्यवदन्। तद्यथा—

"भूमिर्भ्राम्यति बुद्ध एव मरुति प्रत्यग्भ्रमोऽस्त्यङ्गतो
भ्राम्यन्त्येव सहाश्रयेण यदि वा ज्योतींषि सर्वाण्यपि।
आवर्तोऽयमपां भ्रमः परिचिता मूर्तिर्हरस्याष्टमी
या साऽस्त्यप्ययदीक्षितो जयति सा मूर्तिर्निरस्तभ्रमा॥" इति

ईश्वरस्याष्टमूर्तिरित्येकं नाम। भूमिः, जलम्, अग्निः, वायुः, आकाशः, सूर्यः, चन्द्रः, यजमानः इत्यष्टमूर्तयः। यजमान इति यागं कुर्वन्तं स्वामिनं वदति। ईश्वरस्याष्टसु मूर्तिषु सप्त मूर्तयो भ्राम्यन्त्यो वर्तन्ते। अप्पय्य-दीक्षित इति (यजमान) मूर्तिः केवलं न भ्राम्यतीत्यस्मिन् श्लोकेऽवर्णयत्। तेन श्लोकेन भूमिरपि भ्राम्यतीति ज्ञायते, न वा? आर्यभटो वराहमिहिर इत्यादयो गणितशास्त्रज्ञाः भूमिर्भ्राम्यतीति लिखन्ति स्म। अस्माकमपि प्राचीने सूर्यसिद्धान्ते भूमेराकर्षणशक्तिरस्तीत्यादिसदृक्षा बहवो विषया उक्ता वर्तन्ते। आकाशे कथमिमे ग्रहा अपतन्तस्तिष्ठन्ति? आकर्षणशक्त्यैवं तिष्ठन्तीति कथ्यते। एतादृशानतिदुरूहान् विषयान् युगान्तरेभ्यः पूर्वं विज्ञाय लिखित्वा रक्षितानि शास्त्राणि अवलम्बमानमस्मदीयं मतमति-प्राचीनमिति ज्ञायते। तदेवमेकस्मिन् काले सर्वत्रास्माकं मतमासीत्। सर्वेऽस्माकं देशा आसन्। अस्मभ्यः पृथग्भूता एव तत्र तत्र वसन्ति।

तदवलम्बनानि प्रमाणानि बहूनि वर्तन्ते, अद्याप्युपलभ्यमानानि भवन्तीत्येतदजानीम ।

एको दीपो वर्तते । तं परितः प्रतिसीरा बध्यमानास्ति । तस्यां प्रतिसीरायां पद्माकारमेकं पार्श्वं कर्तयामश्चेत्, भित्तौ प्रकाशः पद्माकारः फलेत्, समुदितस्य दीपस्य कश्चनांश एव तथा फलति । तां प्रतिसीरामपनयेमश्चेत् सर्वोऽपि प्रकाशः प्रसरति । तद्वदेवास्माकं मते केचनांशा एव ख्रैस्तमतम्, बौद्धमतम्, इत्यादिषु वर्तन्ते । सर्वेषु मतेषु विद्यमानान् सर्वानंशानवलम्बमानं प्राचीनं मतमस्मदीयं मतम् । तत एव तस्य न पृथग् नामास्ति ।

अस्माकं मतं यथा साधारणं मतम्, तथा संस्कृतभाषाऽपि साधारणी भाषा । अस्या अपि नाभिजनो वर्तते । आन्ध्रभाषा, तमिलभाषा, हिन्दीभाषेत्यादीनां स्वीयो देशो वर्तते । संस्कृतभाषाया देश एव नास्ति । इमां संस्कृतभाषां मृतभाषेति केचन वदन्ति ।

अस्माकं मातुर्मम पुरस्तात् एकः शिशुरासीत् । सा एकाऽन्तर्दृष्टिः । शिशुर्मृतः । तदर्थं सा न रोदिति स्म । मातुर्मय्यतीव प्रेम । कस्मिंश्चन दिनेऽहं तां दृष्ट्वा—"मातः ! ज्येष्ठो मृत इत्येतदर्थं त्वं नारोदीः । अहं मृतश्चेत्, किं रोदिष्यसि ? मा वा ? इत्यपृच्छम् । त्वमपि स इव पुत्र एव खलु ! स शरीरे मृतः, त्वं मनसि म्रियस्वेत्यवदत् । मृतमनस्कोऽहं भवेयमिति तस्या भावः । तद्वदेव संस्कृतभाषा मृता ।

स्वस्येवेति किञ्चित् स्थानं यदि स्यात्, तर्हि भीतिः स्यात् । सर्वेऽपि संस्कृतभाषाया देशाः । इदन्तनीषु लौकिकीषु सर्वासु भाषासु संस्कृतभाषा मिश्रिताऽस्ति, तासु प्रायेण संस्कृतमूला एव । अस्माभिर्व्यवह्रियमाणायां तमिलभाषायामसंख्येयानि संस्कृतपदानि मिश्रितानि वर्तन्ते । तमिलपद्यानि यदि स्युः, तस्य विवरणं संस्कृतानुबन्ध्येव वर्तते । कुट्टमिति तामलपदस्य दोष इति संस्कृतभाषयाऽर्थं वदामः । देशभाषासु कठिनानां पदानां संस्कृतपदैरर्थमुक्त्वा विशदीकुर्महे ।

मरणमिति किं नाम ? कस्य मरणं वर्तते ? शरीरमेव खलु म्रियते। तत् सजीवं वर्तते। पश्चाद् म्रियते। तस्मिन् निर्जीवे सति तद् म्रियते। जीवस्यापरो जीवः कुतः ? स सर्वदा मृत एव। संस्कृतभाषा सर्वासां भाषाणां जीवभूताऽस्ति।

एतादृशमस्मदीयमतम्, अस्मदीया भाषा च सर्वं लोकमभिव्याप्ताऽसीत्। अस्माकं मतस्य वेदः प्रमाणम्। सर्वाणि मतान्यस्माकं मतान्येव। सर्वाणि एकरूपाणि पुनरपि भवितुमर्हन्ति। विनाऽहंभावं प्रेम्णोच्यते चेत्, सर्वेऽस्माकमुक्तिं प्रेम्णा शृणुयुः। मनोऽप्येकीभवेत्। तदानीमिदं मतं यथापूर्वमखण्डं मतमेव भवेत्॥

---

# नन्दिकेश्वरकाशिका

[ महामहोपाध्यायानन्तकृष्णशास्त्री ]

इयं हि नन्दिकेश्वरकाशिकेति नन्दिकेश्वरकारिकेति वा प्रसिद्धा, सर्वैरेव वैयाकरणैः—

"नृत्यावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥"

इति कारिकोपक्षेपावसरे व्याकरणमपि तत्त्वज्ञानद्वारा मुक्तिपर्यवसायीति निरूपणप्रसङ्गेन च संगृह्यते। व्याकरणेन ज्ञेयं तत्त्वं शब्दतत्त्वमेव, नात्मतत्त्वमिति वेदान्तशास्त्रस्य व्याकरणस्य च न कोऽपि सम्बन्ध इति बह्वव एव मन्यन्ते। स्फोटवादो हि वैयाकरणानां बहुभिरेवाचार्यैर्निरस्यते। मण्डनमिश्रास्तु—ब्रह्मसिद्धौ—मङ्गलश्लोकव्याख्यावसरे—"अक्षरमिति शब्दात्मकतामाह" इति ब्रह्मणः शब्दरूपत्वपक्षमप्यर्थरूपत्वपक्षमिव स्वीकुर्वन्ति। केनोपनिषदो भाष्यावसरे शङ्करभगवत्पादा अपि स्फोटवादं माण्डूक्यभाष्यावसर इव समर्थयन्ति—अभिधानप्राधान्येन सर्वात्मत्वं निरूपयन्तः। शब्दार्थाभेदपक्षमेव समर्थयन्तो भर्तृहरिमहोदया अपि स्फोटवादसमर्थनावसरे शब्दकारणतया ब्रह्मणः शब्दरूपत्वमर्थकारणतया चार्थरूपत्वं च स्वीकुर्वन्ति। "उद्धर्तुकामः सनकादिसिद्धान्" इति शिवसूत्रजालस्योद्धारहेतुत्वं मन्वाना नन्दीश्वरकारिकैव सर्वेषामेतेषां सिद्धान्तस्य मूलमिति प्रतिभाति।

श्रीमहाभारते शान्तिपर्वणि सांख्ययोगोपक्षेपावसरे—पञ्चविंशतितत्त्ववादिनः, षड्विंशतितत्त्ववादिनः, सप्तविंशतितत्त्ववादिनश्चेति त्रैविध्यं सांख्यानां प्रतिपाद्यते। तत्र सप्तविंशतितत्त्वपक्षपातिनी नन्दीश्वरकारिका, यत्र—निर्गुणं ब्रह्म, सगुणं ब्रह्म, पुरुषः, प्रकृतिः, महत्तत्त्वम्, अहंतत्त्वम्, पञ्चतन्मात्राणि, पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च प्राणाः, मनः

इति तत्त्वपदमर्हन्ति। अयमेवाद्वैतवादो नाम। भगवद्गीतायां ज्ञानयोगे सांख्यशब्दप्रयोगस्याप्येतत्पक्ष एव तात्पर्यम्। सप्तविंशतिकारिकाभिरेव नन्दिकेश्वरकारिकायाः समाप्तिरप्यत्रैवानुकूला। अ इ उ ण् ऋ ऌ क् ए ओङ् ऐ औच् ह य व र ट् लण् ञ-म-ङ-ण-न-म् झ-भ-ञ् घ-ढ-धष् ज-ब-ग-ड-द-श् ख-फ-छ-ठ-थ च-ट-त-व् क-प-य् श-ष-स-र् ह-ल् इति चतुर्दशसूत्राणि शिव-ढक्कातो निर्गतानि सप्तविंशतितत्त्वनिरूपणप्रसङ्गेन—"अहमात्मा ब्रह्मे"ति महावाक्यमपि—"आदिरन्त्येन सहेते"ति प्रत्याहारविधया संगृह्णाति। तत-श्चाध्यारोपापवादन्यायेन ब्रह्मतत्त्वोपदेशनिरूपणपराणि ब्रह्मसूत्राणि परम-मूलानि शिवसूत्राण्येव। अथातो ब्रह्मजिज्ञासेत्यादीनि तु ब्रह्मसूत्राणि स्पष्ट-मेतदर्थनिरूपणपरत्वात् गौणान्येव ब्रह्मसूत्राणि। शङ्करभगवत्पादानां भाष्यमपि ब्रह्मसूत्राणां परमार्थगत्या शिवसूत्रविवरण एव पर्यवस्यति।

"अकारो ब्रह्मरूपः स्यात् निर्गुणः सर्ववस्तुषु।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥"

इति कारिकामवष्टभ्यैव मन्यामहे सुरेश्वराचार्याः—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानम्, तदुपाश्रित्य ब्रह्म कारणमुच्यते॥"

इति वदन्ति। अत्र—इकारेण चित्कला चित्प्रतिबिम्बोपाधिरविद्यैव नन्दीश्वरकारिकयापि मन्यते, अयमेवाद्वैतवादो नाम—यद् निर्गुणं ब्रह्मै-वाविद्याशबलितं प्रपञ्चोपादानं नाम, तच्चोपादानत्वं विवर्तविधयैव, न परिणामविधया। "सर्वं खल्विदं ब्रह्मे"त्यादि वाक्यानामयमेवाशयः। "जगद्रूप उण् ईश्वरः" इत्यपि तस्मिन्नेव पक्षे स्वरसं भवति। तथाच—अइउण् इत्यस्य तात्पर्यम्—निर्गुणं ब्रह्माविद्याशबलितं सत् व्यापकं सर्वत्रानु-स्यूतं जगदाकारेण विवर्तमानत्वात् जगद्रूपं भवति, सर्वप्रपञ्चाकारेण निर्गुणं ब्रह्मैवाविद्यासहकारात् विवर्तत इति निगदव्याख्यातमिदम्। तदेवं निर्गुणब्रह्मणः समष्टिमायासम्बन्धेनेश्वरस्वरूपता नामेति भगवत्पाद-सिद्धान्तोऽत्र संगृह्यते।

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्त्येन संयोगादहमित्येव जायते ॥"

इति कारिका तु—हकारस्याकारस्य च प्रत्याहारेणाहंपदार्थनिष्पत्तिरिति बोधयन्ती हकारार्थव्योम्नः उपलक्षणविधया पञ्चतन्मात्रपरत्वं तत्कार्यसूक्ष्मशरीरपरत्वं वा मन्वाना, सूक्ष्मशरीरोपहितं ब्रह्मैव जीवो नाम, नतु जीवो नामाहंपदार्थः सर्वदाऽहंरूपेणैव प्रतीयमानोऽन्योन्याध्याससापेक्षो वर्तते, ततश्चाहमर्थश्चैतन्यान्तःकरणयोः परस्पराध्यासनिष्पन्नो मिथ्यापदार्थ एव पारमार्थिकमुक्तिपर्यन्तस्थायीति भगवत्पादसिद्धान्तात् एतत्कारिकासिद्धान्तस्य च न वैषम्यलेशोऽपि । तथाच—शुद्धं चैतन्यं पारमार्थिकम्, तस्यैवाविद्यासम्बन्धेनेश्वररूपता, अन्तःकरणादिसम्बन्धेन जीवता नामेति तत्त्वंपदवाच्यार्थः, तत्त्वंपदलक्ष्यार्थश्चात्र संगृहीतप्रायः । चिच्चैत्ययोस्तादात्म्याध्यासेनाहंभाव इति तु तत्त्वम् । अत एव—"आद्यमन्त्येन संयोगादहमित्येव जायते ।" इति संयोगपदवाच्यान्योन्याध्यासरूपसम्बन्धादेवाहंतेति वर्ण्यते । अत एवात्र—पूर्वं ब्रह्मरूपत्वेनोपक्षिप्तोऽत्र प्रकाशरूपत्वेन परिगृह्यते । ततश्च स्फोटपदवाच्यो वा, अर्थस्वरूपो वा परमात्मा प्रकाशरूपोऽपीति सिद्धान्त एव परमतात्पर्यात् स्फोटाचेतनत्वपक्षमवलम्ब्यैव स्फोटवादनिरासो भगवत्पादादीनाम्, न तु तच्चेतनतापक्षं नन्दिकेश्वरकारिकासमर्थितमवलम्ब्यापि । उक्तं च जयन्तभट्टेन—स्फोटाचेतनत्वपक्षेणैव स्फोटवादनिरासोऽद्वैतिनाम्, तच्चेतनत्वे तु ब्रह्मवादाद् न विशेष इति वर्णयता । ततश्च शङ्करभगवत्पादानां ब्रह्मसिद्धिकारादीनां च कुत्रचन स्फोटवादनिरासः, कुत्रचन तत्समर्थनं च न परस्परविरुद्धमित्यपि जानीमः ।

युक्तं चैतत्—नामरूपाभ्यां व्याकरणं हि अर्थरूपत्वमिव ब्रह्मणः शब्दरूपत्वस्यापि स्वीकारं विना न निर्वहति । अतोऽर्थात्मना विवर्तमानस्य ब्रह्मणोऽवस्थाचतुष्टयमिव शब्दात्मना विवर्तमानस्याप्यवस्थाचतुष्टयं स्वीकर्तव्यम् । तत्र च शब्दात्मतामादाय—परा पश्यन्ती मध्यमा वैखरीत्यवस्थाचतुष्टयम्, अर्थात्मतामादाय तु जाग्रत्स्वप्नसुषुप्तितुरीयावस्था-

चतुष्टयमिति तु निष्कर्षः। तत्र शब्दात्मनोऽतिव्यक्तावस्था नाम स्थूलावस्था वैखरी जाग्रदवस्थास्थाने, मध्यमा तु सूक्ष्मावस्था स्वप्नावस्थास्थाने, पश्यन्ती नाम स्वयं तन्मात्रप्रकाशनात् शब्दप्रकृतिसम्बन्धमात्रात् सुषुप्त्यवस्थास्थाने, तस्या अपि निरासे तु तुरीयावस्थेति विवेकात् सर्वं श्लिष्टतरम्। अयमेवार्थः—

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता॥
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः।
सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता॥

इति कारिकाद्वयेनावगम्यते। स्वप्नजागरयोरेव सृष्ट्याविर्भावमासाद्य प्रवृत्तिरिति मध्यमावैखर्योरुक्तावस्थाद्वयत्वमर्थसिद्धमेव। इदं च कारणत्वमर्थात्मकस्येव स्फोटात्मकस्यापि ब्रह्मणः प्रकृतिसम्बन्धेनैव, न तु स्वत इति निरूपणार्थं तु—

"अकारं सन्निधीकृत्य जगतां कारणत्वतः।
इकारः सर्ववर्णानां शक्तित्वात् कारणं मतम्॥
जगत् स्रष्टुमभूदिच्छा यदा ह्यासीत् तदाऽभवत्।
कामबीजमिति प्राहुर्मुनयो वेदपारगाः॥
अकारो ज्ञप्तिमात्रं स्यात् इकारश्चित्कला मता।
उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः॥"

इति कारिकाः प्रवृत्ताः। एताभिरपि मायाकारणत्वेन ब्रह्मणः कारणत्वोपचार एव, न तु वस्तुगत्या ब्रह्मैव कारणमिति पूर्वोक्तवार्तिकसिद्धान्त एवानूद्यते। इयान् विशेषः—पूर्वत्रार्थात्मतापक्षेण तदुपपादनम्, सांप्रतमभिधानप्राधान्येनेति मण्डूक्यकारिकाया भगवत्पादभाष्येण साकं नन्दीश्वरकाशिकायाः सर्वात्मना साम्यम्।

अत्रेयं शङ्का समुदेति—यत् कथं वा मायाशबलमपि ब्रह्म सृष्टिस्थितिसंहारादि करोति, यदि संकल्पविशेषेण, तर्हि तस्य मानसकर्मत्वात् ईश्वरस्य

च मनसोऽभावात् तदसंभवेन न निर्वाह इति, तत्रेदमद्वैतिनां समाधानम्—यत् ईश्वरस्य मायाशबलस्यापि मायापरिणामिका वृत्तिरीक्षणादिपदवाच्या भवितुमर्हतीति। तत्र मायाया अवस्थाविशेष एव मनो नामेति मते मायापरिणामस्यापि मानसकर्मत्वं न विरुद्धमिति न दोष इति। अयमेवाशयो नन्दिकेशकारिकयापि प्रतिपाद्यते—

ऋलृक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत्॥ इति।

तथाच "तदैक्षत बहु स्यां प्रजायेय" "सोऽकामयत बहु स्यां प्रजायेय" "मत्तो ह्यभून्मनोरूपं लकरः परमेश्वरि!" इत्यादिश्रुतितन्त्रार्थनिरूपणपरैव शिवसूत्रगा—ऋलृक् इति प्रकृतकारिका मन्यते। तत्र च मायापरिणामत्वाविशेषेऽपि वृत्तिविषययोर्वृत्तित्व-वृत्तिविषयत्वाभ्यां विशेषोऽपि वर्तते। तत्र वृत्तिरेव वाक्, विषयस्त्वर्थ इति वृत्ति-वृत्तिमतोरभेदोऽपि न विरुद्ध इति मत्यैव शब्दार्थाभेदवादः।

मायेश्वर-परमात्म-कार्यप्रपञ्चानां बहूनामङ्गीकारेणाद्वैतहानिस्तु न भवति, मायापरिणामेष्वपि तदनुप्रविश्येति श्रुत्युक्तरीत्याऽधिष्ठानतयाऽनुवर्तमानत्वेन जीवेश्वरपरमात्मनां स्वरूपेण ऐक्यस्य कार्यप्रपञ्चानामधिष्ठानातिरेकेणाभावेन मिथ्यात्वेन चाद्वैतहानिशङ्काया अनवसरादित्यद्वैतसिद्धान्तः। अयं च सिद्धान्तः—'ए ओङ्' इति सूत्रार्थ इति निरूपयितुं प्रवृत्ता कारिका—

"ए ओङ् मायेश्वरात्मैक्यविज्ञानं सर्ववस्तुषु।
साक्षित्वात् सर्वभूतानां स एक इति निश्चितम्॥" इति

अकारोकारसमुदायस्यैकारस्य मायाशबलपरमात्मार्थः, स सर्ववस्तुष्वनुगच्छति, अकारोकारसमुदयस्य ओकारस्य सगुण-निर्गुणस्वरूपद्वयमर्थः, तयोरैक्यं च ङ् इत्यनेन बोध्यते। तथाच मायाशबल ईश्वरोऽन्तर्यामितया सर्वत्रानुस्यूत इतीश्वर एक एव, एवं सगुण-निर्गुणयोरपि सगुणाधिष्ठानत्वात् निर्गुणस्य तस्यैव परमार्थत्वात् सगुणस्य मिथ्यात्वाच्चैक्यव्यतिरेकेणेतराभावेनैक्यमिति शास्त्रार्थोऽत्र विवक्ष्यते।

तत्र मायाशबल ईश्वर ईक्षणक्रियायोगाद् विस्तारं प्राप्तो यदा, तदा सर्व-संभूतिरिति वेदान्तप्रक्रियां संग्रहीतुं सूत्रम्—ऐ औ च् इति निरूपणाय प्रवृत्ता कारिका—

"ऐ औ च् ब्रह्मस्वरूपः सन् जगत्स्वान्तर्गतं ततः ।
इच्छया विस्तरं कर्तुमाविरासीत् महामुनिः ॥" इति ।

उक्तं चेश्वरविमर्शिन्याम्—अकारेकारोकाराणां ह्रस्वदीर्घसंयोगात् सर्व-संभूतिरिष्यत इति । इच्छया जगद्विस्तारयितुमुद्युक्त इति तात्पर्यार्थः ।

तदेवं "सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।" इति वाक्यार्थः—अ इ उ ण् ऋ ऌ क् ए ओ ङ् ऐ औ च् इति सूत्रैः संगृह्यते । तत्र गुहाशब्देन समष्टिशरीराख्याया मायाया विवक्षणात् इपदेन तस्या ग्रहणेऽकारेण परमात्मनो ग्रहणेन च मायाशबलितस्य ब्रह्मणो ग्रहणात् गुहानिहि समष्टिरूपेण संगृहीतम् । ऋऌक् इत्यनेन तस्येक्षणादिसंकल्पः प्रति-पादितः, ए ओङ् इत्यनेन तस्यान्तर्यामित्वं निर्गुणेनैक्यं च प्रतिपादितम् । ऐ औच् इत्यनेन तस्यैव व्यष्टिप्रपञ्चाकारेणाविर्भावोन्मुखता प्रतिपाद्यते । तथा च—सद्रूपेण प्रवेशेन सत्यपदार्थः, अकारेण प्रकाशात्मताया विवक्षणात् ज्ञान-पदार्थः, सर्वकारणताबोधनद्वाराऽनन्तपदार्थश्च संगृहीतः । अवशिष्यते तु—प्रपञ्चाकारेणाविर्भावोन्मुखस्य तस्य केन केन रूपेणाविर्भाव इति निरूपणम् । यः—"तस्माद्वा एतस्मादात्मन आकाशस्संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः, अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधी-भ्योऽन्नम् । अन्नात् पुरुषः । इति वाक्यैः प्रतिपाद्यते । अतस्तेषां वाक्या-नामर्थतोऽनुवादार्थम्—ह य व र ट् ल ण् इति सूत्रद्वयम् ।

तत्र हयवरट् इति अग्नेरापः इत्यन्तस्य संग्रहपरम्, लण् इति तु—अद्भ्यः पृथिवीत्यारभ्यान्नात् पुरुष इत्येतदन्तस्य संग्रहणपरमिति प्रतिपादनार्थं प्रवृत्तं कारिकात्रयम्—

भूतपञ्चकमेतस्माद् हयवरण् महेश्वरात् ।
व्योम-वाय्वम्बु वह्न्याख्यभूतान्यासीत् स एव हि ॥

हकाराद् व्योमसंज्ञं च यकाराद्वायुरुच्यते ।
रकाराद्वह्निस्तोयं तु वकारादिति सैव वाक् ॥
आधारभूतं भूतानामन्नादीनां च कारणम् ।
अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ इति ।

पञ्चभूतानामेकेन सूत्रेण संग्रहे कर्तव्ये भूतचतुष्टयस्यैकेन सूत्रेण संग्रहणम्, पृथिव्यास्तत्कार्याणां चैकेनापरेण संग्रहणं मनुष्याधिकारत्वाच्छास्त्रस्य पार्थिवशरीराभिमानिनं जीवमेवावलम्ब्य जीवब्रह्माभेदः शास्त्रेषु प्रतिपाद्यते इति सूचनार्थमेव । अत एव ब्रह्मसूत्रेषु—"पृथिव्यधिकाररूपशब्दान्तरेभ्यः" इति—अन्नसृष्टिः पृथिवीसृष्टिमुपलक्षयतीति प्रतिपादितम् । यतः—पृथिवीसृष्टेः पर्यवसानं पुरुषेणैव भवति, अत एव—अन्नात् पुरुष इति पृथिवीसृष्टेरुपसंहारः । वाय्वादिसृष्टौ तु नैवमिति विशेषसूचनमेव—लण् इति सूत्रान्तरप्रयोजनम् । तथाच सृष्ट्यभिमुखं ब्रह्म येन क्रमेण स्रष्टुमारभत, तत्क्रमनिरूपणार्थं हयवरट् लण् इति सूत्रद्वयमिति निष्कर्षः । सति चैवं केवलपृथिवीसृष्ट्या न सृष्टिपर्यवसानम्, किन्तु पुरुषान्त-सृष्ट्यैवेति सूचनमेव लण् इति सूत्रान्तरप्रयोजनमिति भावः पर्यवस्यति । तदेतदाह विशदम्—

"आधारभूतं भूतानामन्नादीनां च कारणम् ।
अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥" इति ।

इतः परं तु पञ्चतन्मात्राणामाकाशादीनां गुणानां निरूपणमवश्यं कर्तव्यमिति तदर्थमिदं सूत्रम्—"ञ-म-ङ-ण-न-म्" इति प्रतिपादयतीयं कारिका—

"शब्दस्पर्शौ रूपरसगन्धाश्च ञ-म-ङ-ण-नम् ।
व्योमादीनां गुणा ह्येते जानीयात् सर्ववस्तुषु ॥"

इति । अत्र सर्ववस्तुषु इति वर्णनात् पञ्चीकृतावस्थैव पञ्चतन्मात्राणां प्रतिपाद्यत इति ज्ञाप्यते । सर्वथा तु—लण् इति सूत्रेणान्नमयस्य जीवस्य संग्रहे सति, तस्य स्थूलशरीराभिमानित्वेन जागरावस्थैवान्नमयवाक्यार्थं इति ञ-म-ङ-ण-नम् इति सूत्रेण सूच्यते ।

इतः परं तु तस्य स्वप्रावस्थापन्नस्योपक्षेपः कर्तव्य इति प्राणमय-मनोमय-विज्ञानमयकोशानां तैत्तरीयश्रुतौ प्रवृत्तानां निरूपणार्थं सूत्राणि—झ-भ-ञ्, घ-ढ-धष्, ज-ब-ग-ड-दश्, ख-फ-छ-ठ-थ-च-ट-तव्, इति। तत्र वर्गतुरीयवर्णाः कर्मेन्द्रियस्योपस्थापकाः, वर्गतृतीतवर्णा ज्ञानेन्द्रिय-पञ्चकस्योपस्थापकाः, वर्गद्वितीयवर्णाः प्राणेन्द्रियपञ्चकस्योपस्थापकाः, च-ट-त-वर्णा वृत्तित्रयात्मकान्तःकरणस्योपस्थापकाः, इति कपवर्जं वर्ग-पञ्चमवर्जं च सर्वेऽपि वर्गीयाः पञ्चप्राण-मनो-बुद्ध्यहंकार-दशेन्द्रियात्मक-सूक्ष्मशरीरमुपस्थापयन्ति।

तत्र कर्मेन्द्रियेषु वाक्पाण्योर्विशेषतः कार्यकारित्वम्, इति सूचनार्थम्—झ-भ-ञ् इति तयोः पृथक् सूत्रेण संग्रहः। प्रसिद्धं हि—विनापि वाक्-पाणिभ्यां पादपाः कर्म कर्तुमीशते, ज्ञानेन्द्रियाणां तु नैकस्येतरापेक्षेति समप्राधान्यात् एकेनैव सूत्रेण ज-ब-ग-ड-द-श् इत्यनेन संग्रहः। एतेन प्राणपञ्चकं वृत्तित्रयात्मकान्तःकरणं च व्याख्यानम्। सर्वमिदमभिप्रेत्येमाः कारिकाः—

> वाक् पाणी च झ-भ आसीद् विराड्पश्चिदात्मनः।
> सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते॥
> वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियमया हि ते।
> घ ढ-धष् सर्वभूतानां पादपायू उपस्थकः॥
> कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः।
> श्रोत्र-त्वङ्-नयन-घ्राण-जिह्वा-धीन्द्रियपञ्चकम्॥
> सर्वेषामपि जन्तूनामीरितं ज-ब-ग-ड-दश्।
> प्राणादि पञ्चकं चैव मनो बुद्धिरहंकृतिः॥
> बभूव कारणत्वेन ख-फ-छ-ठ-थ, च-ट-त-व्।
> वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्च वायवः॥
> मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः॥ इति।

अयं भावः—स्थावरादिषु विनापि वाक्-पाणी कर्मेन्द्रियाण्यपराणि विद्यन्ते,

एवमपि मनुष्यादय इव वाक्पाणिमन्तरा न स्थावरा वृक्षादयो जीवन्तोऽपि विशिष्य कार्यकारिणो दृश्यन्ते, अतः कर्मेन्द्रियत्रयस्य कुत्रचन, कुत्रचन कर्मेन्द्रियपञ्चकस्य सत्त्वमभिप्रेत्य झ-भञ् इति वाक् पाणिमात्रस्य घ-ढ-ध-ष् इति अपरस्य कर्मेन्द्रियत्रयस्य च निर्देशः। अन्यत् सर्वं समानम्।

पञ्चतन्मात्राणामष्टादशसूक्ष्मशरीरावयवानां चोत्पत्तिः प्रकृतित एव भवति, इति सर्वेषां तेषां कारणं प्रकृतिः ककारेण विवक्षणीया, सा च पुरुषेणाविविक्तैव कारणं भवतीति तदविवेकोऽपि संग्रहणीय इति प्रकृति-पुरुषयोरविविक्तयोः संग्रहार्थं सूत्रम्—क-प-य् इति। अनेन च प्रकृति-पुरुषाविवेको जगत्कारणमिति बोध्यत इति निरूपणार्थं कारिका—

"प्रकृतिं पुरुषं चैव सर्वेषामेव सम्मतम्।
संभूतमिति विज्ञेयं कपय् स्यादिति निश्चितम्॥" इति।

तत्र प्रकृतिः पञ्चतन्मात्राद्यात्मना परिणममाना त्रिगुणात्मनैव परिणमते, इति तदीयानां सत्त्वरजस्तमसां संग्रहोऽप्यत्रावसरप्राप्त इति तत्संग्रहार्थं सूत्रम्—श-ष-स-र् इति। तत्र कर्मेन्द्रिय-प्राणादिपञ्चकप्रयोजकरजोगुणः शकारेण, स्थूलप्रपञ्चप्रयोजकतमोगुणः षकारेण, ज्ञानेन्द्रियपञ्चकवृत्ति-त्रयात्मकान्तःकरणप्रयोजकसत्त्वगुणः सकारेण च संगृह्यते। तथाच यः सत्त्वादिगुणवशंवदो जीवः, तदृदृष्ट्यैव तन्मात्रादीनामष्टादशसूक्ष्मशरीरा-वयवानां सत्त्वम्, न तु तदतीतपुरुषदृष्ट्यापीति वेदान्तप्रक्रियासंग्रहोऽवश्य-कर्तव्य इति हल् इति सूत्रम्।

अत्र ह-शब्देन प्रत्याहारेणाहंपदार्थः, ल् इत्यनेनातीतत्वं च विवक्ष्यते इति अहमतीतोऽस्मीति वाक्यार्थो भवति। तदेतदाह—

"तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः।
अहमात्मा परो हल् स्यामिति शंभुस्तिरोदधे॥" इति।

तदेवं प्रकृतिः, महान्, अहंकृतिः, पञ्च तन्मात्राणि, ( मन एकत्वपक्षेण ) षोडश सूक्ष्मशरीरावयवाः, पुरुषः, सगुणं ब्रह्मेति षड्विंशतितत्त्वातीतः सप्तविंशो निर्गुणः परमात्मैवाहमिति सदाशिवो ढक्कानिनादव्याजेनोप-

दिशति। तदेतच्छ्रवण-मनन-निदिध्यासनैः साक्षात्क्रियमाणं सर्वेषां सत्य-मुद्धारक्षमं भविष्यति, इति युक्तमुक्तम्—"उद्धर्तुकामः सनकादिसिद्धानि"ति।

अत्र सनकादिसिद्धानां श्रवणाधिकारिणां निर्देशेन ज्ञाप्यते, न पञ्च-विंशतितत्त्वपक्षपातिनां सांख्यानां मते, षड्विंशतितत्त्वपक्षपातिनां योगिनामणिमाद्यष्टैश्वर्यसंपन्नानां मते वा समुद्धारसंभावना, किन्तु सप्त-विंशतितत्त्वपक्षपातिनां मत एव, सोऽपि न स्वप्रयत्नसाध्ययोगादिना भवितु-मर्हति, किन्तु—उपदेशमात्रेणैवेति ज्ञापनेन—"तं त्वौपनिषदं पुरुषं पृच्छामि" "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादि वेदान्तवाक्यार्थोऽपि संगृहीतप्रायः इति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति वाक्यमेव प्रथमया कारिकया संगृह्यते। सति चैवम्—अथातो ब्रह्मजिज्ञासा इत्यादीनामपि शिवसूत्रैरेकवाक्यता सिद्धा भवति।

अत्र—ई कामबीजं प्रथमसूत्रे इकारेण यतो गृह्यते, ततः प्रकृतेरावरण-शक्तिरपि स्वीकर्तव्येति सूच्यते। अत एव—"आवृतं ज्ञानमेतेन ज्ञानिनो-नित्यवैरिणा।" इति कामस्यावरणशक्तिरपि प्रतिपाद्यते। इति सर्वात्मना साम्यमद्वैतसिद्धान्तस्य शिवसूत्रार्थस्य च वर्तते। उपमन्युरपि नन्दिकेश-काशिकाव्याख्याता तत्र तत्र व्याख्याप्रसङ्गे आशङ्का-समाधानाभ्यां ब्रह्मसूत्राणां भगवत्पादानां चाद्वैतसिद्धान्तमेव व्यवस्थापयतीति नाधिकमत्र व्याप्रियामहे।

तदा तदा स्वनामधन्य-श्रीसच्चिदानन्दभट्टाचार्याणां शिवसूत्रेष्वेव सर्वाणि तत्त्वान्यन्तर्गतानि, ब्रह्मसूत्राणि भगवत्पादभाष्यं च यदि तद्विरुद्धानि, तर्ह्यप्रमाणान्येव भविष्यन्तीति सूचनासु अस्माकमपि तादृशमैकमत्यं श्रीनन्दिकेश्वरकाशिकादर्शनपर्यन्तं नासीत, सांप्रतं तु प्रकृतपुस्तकदर्शना-नन्तरं तु परमो विश्वासस्तेषां विचारमार्गे सञ्जात इति एतत्पुस्तकप्रकाशनेन स्वीयसिद्धान्तं प्रमाणितवन्तस्ते सत्यमेव धन्यवादार्हाः।*

---

* पुस्तकप्राप्तिस्थानम्—Metropolitan Printing and Publishing House, Upper Circular Road, Calcutta.

# धर्ममीमांसायां प्रतिवादः *

[ निबन्धकः—श्रीज्ञानेन्द्रमोहनशर्मा ]

संस्कृत-साहित्य-परिषत्पत्रिकायां पण्डितप्रवरेण श्रीमता गोपालकृष्ण-वेदान्ताचार्येण लिखिता 'धर्ममीमांसा' अधुनापि प्रकाश्यते। तस्यास्तु मीमांसाया यस्तावदंशः प्रकाशितः, तमेवांशमवलम्ब्य एष प्रतिवादः।

मीमांसाकारेण श्रीमता गोपालकृष्णेन प्रधानतस्त्रिविधायाः खलु वैद्यजातेरुत्पत्तिर्वृत्तिश्च निरूपिता। यथा ( १ ) ब्राह्मणक्षत्रियाप्रभवो मूर्द्धाभिषिक्तः ( २ ) ब्राह्मणवैश्याप्रभवः अम्बष्ठः ( ३ ) अश्विनीकुमारप्रभवो वैद्यश्चेति। एते खलु वैद्या जात्या ब्राह्मणेतरा वर्णसङ्कराश्चेति मीमांसक-गोपालस्याभिमतम्। वक्तव्यञ्चात्र—

इह खलु भारते वर्षे वैद्यनाम्नो जातिविशेषस्य ब्राह्मणेतरस्य कुत्रापि न विद्यते अस्तित्वम्। सर्वत्रैव ब्राह्मणाश्चिकित्सकवृत्तयः। ये च वङ्गेषु वैद्या इत्यभिधीयन्ते, तेऽपि न हि जात्या ब्राह्मणेतराः। ते खलु ब्राह्मण-महामहीरुहस्य एव शाखाविशेषा इत्यग्रे प्रतिपन्ना भविष्यन्ति। शास्त्र-निर्द्दिष्टो वैद्यः सर्वत्र वैद्य एव, न तत्र कश्चिद् भेदस्यावसरोऽपि। तस्मात् सर्वत्र विद्यमानेभ्यो वैद्येभ्यः कथं वङ्गीयवैद्यानां पार्थक्यम्? अस्ति चेत् पार्थक्यं, तत् सर्वथा मीमांसाकारेणैव प्रतिपादयितव्यम्, अन्यथा का नाम श्रद्धा अर्वाचीनवचने प्रेक्षावतामिति।

इह खलु भारते सर्वत्रैव विशुद्धा एव ब्राह्मणाश्चिकित्सावृत्तिमाश्रित्य वैद्यशब्देनाभिधीयन्ते। वङ्गेष्वपि तादृशा एव। यदि नाम कुत्रापि एत-स्यन्यथा स्यात्, तर्हि स खलु वैद्यो नहि शास्त्रनिर्द्दिष्टं वैद्यत्वमर्हतीति

---

* विषयेऽस्मिन् सम्पादकमतमतः परं संख्यान्तरे प्रकाशयिष्यते।

वक्तुमुचितम्। सत्यपि वैद्यत्वे नहि ब्राह्मणत्वमिति शास्त्रविरुद्धं वचनम्। अपि चेत् मीमांसकगोपालेन वङ्गेषु वैद्यनाम्ना परिचितां जातिमुद्दिश्य शास्त्रानुसारतस्तस्या एव उत्पत्तिं वृत्तिञ्च निरूपयितुं कुतः स्यात् प्रयत्नः ? सोऽपि अपास्त एव। नहि तेन स्वकल्पितत्रिविधवैद्येषु वङ्गीयवैद्यः कतमस्तदपि न प्रदर्शितम्। न ज्ञायते न वा श्रूयते वङ्गीयवैद्येषु त्रिविधो भेदः। तर्हि कथं स्वीकर्तव्यं वङ्गीयाः खलु वैद्यास्त्रिविधस्यैव वैद्यस्यान्तर्भावतामर्हन्तीति।

मीमांसाकारस्य मतानुसारतो यदि अनुलोमजा मातृवर्णा भवेयुस्तर्हि मूर्द्धाभिषिक्ताः खलु वैद्या वर्णतः क्षत्रियाः, अम्बष्ठा नाम वैद्याः वैश्याः, तथाश्विनीकुमारजा ब्राह्मणा एव ब्राह्मणमातृकत्वादिति। मर्त्या हि देवानामनुलोमा विज्ञेयाः। कथितञ्च—गणकस्तथाग्रदानीयो नाम ब्राह्मणो वंशवंशतो विशुद्धब्राह्मणरूपेण जातौ कर्मदोषाच्च पतितौ निन्दितौ च इति। एतेनापि वैद्या ब्राह्मणजातावेवान्तर्भावमर्हन्ति। यदि नाम 'तुष्यतु दुर्जनन्यायेन'—त्रिविधा एव वैद्या मीमांसकमतानुसारतः स्वीकृताः स्युस्तर्हि वङ्गीयवैद्यानां को नाम वर्णः ? तत् केन निरूपयिष्यते ?

अथ नैतावता मीमांसकगोपालस्य धर्ममीमांसा निरस्ता। उक्तञ्च ब्रह्मवैवर्तपुराणे,—अश्विनीकुमारतो जातेन वैद्येन शूद्रगर्भजाता ये ग्राम्यगुणाभिज्ञा मन्त्रौषधिपरायणास्तेऽपि वैद्यास्तथा तैरेव शूद्रायां जाता ये व्यालग्राहिणस्तेऽपि वैद्याः। परन्तु वैद्यवर्णनप्रसङ्गक्रमेण मीमांसकप्रवरस्तत्र तूष्णीमास्थाय पुराणकर्तुस्त्रुटिं संशोधयितुं तानपि व्यालग्राहकान् वैद्यनाम्नाभिहितवान्। तस्मात् मूर्द्धाभिषिक्ताम्बष्ठाश्विनीकुमारजा एव पञ्चवैद्याः वैद्यशब्देन उल्लिखिताः प्रबन्धकारेण इति बोद्धव्यं भवति। अपिच तेन "वैद्यजाति"रिति शब्दोऽपि व्यवहृतः, परन्तु एतेषु वैद्येषु कतमो नाम वैद्यो वैद्यजातिताम् अर्हति, तन्न निर्दिष्टमिति विचित्रम्। तर्हि किं वैद्यजातिशब्देन सर्वा एव वैद्या बोद्धव्याः ? सर्वे च ते जात्या समाना एव ? तेन रचिता वैद्यकृशरा ( खिचुड़ी ) न केवलं दुष्पाच्या अमेध्यापि।

श्रीमता प्रबन्धकारेण—महर्षेरुशनसो नाम्ना यानि खलु वचनान्युद्धृतानि,—न दृश्यन्ते तानि 'वङ्गवासी'मुद्रणालयमुद्रितोशनःसंहितायाम्, अतोऽप्रामाणिकान्येतानि वचनानीति वक्तुं सुकरमेव। अप्यस्ति किञ्चिद्वैद्यविद्वेषकारणं मीमांसकस्य, यत् तेन भावप्रकाशे वैद्याम्बष्ठयोरेकत्वं प्रतिपादितमित्युक्तम्। यच्चापि तेन वैद्यजातेः क्रियालोपमधिकृत्य विष्णुपुराणवचनमुद्धृतं तदपि न दृश्यते तत्र। यानि खलु शास्त्रवचनान्युद्धृतानि तत्रभवता आचार्यपादेन, तानि कुतो लब्धानीति ग्रन्थ-संस्करणाध्यायश्लोकांशसमुल्लेखपुरःसरमुद्धर्त्तव्यमिति स्मारणं शोच्यमेव।

अस्त्यतोऽपि शोचनीयम्,—यत् स कानिचिदनार्षवचनान्याश्रित्य जातेरधिकारनिरूपणे आर्याणां शाश्वतं प्रामाणिकं च शास्त्रं वेदं विहाय अहमिकया वेदविरुद्धं मतमवलम्ब्य धर्ममीमांसाच्छलेन वैद्यानां धर्मनाशे बद्धपरिकरः। अन्यथा कथं तेन शास्त्रवचनव्याजेन स्ववचनमपि प्रक्षिप्तम्? यतस्तेन उशनोवचनमुद्धृतम्,—

यथा—

"विधिना ब्राह्मणः प्राप्य नृपायान्तु समन्त्रकम्।
जारः सुवर्ण इत्युक्तः सोऽनुलोमद्विजः स्मृतः॥"

धर्ममीमांसाकारेणात्र "प्राप्येति" पदस्याकाङ्क्षानिवृत्तिर्न कृता, परन्तु कथं "जार"शब्दः परिगृहीतः? तस्य समाधानं न कृतम्। अप्यस्ति काचित् स्पृहा जातशब्दं स्वेच्छया विसर्ज्य वैद्यान् निन्दयितुं जारग्रहणे? समन्त्रसविवाहजातः पुत्रः कदापि जारजशब्देन नाभिधीयत इति स्मारयितव्यः? अहो भाग्यम्।

मीमांसाकारेण—"अनुलोमासु मातृवर्णाः"—इति विष्णुवचनमुद्धृत्य ब्राह्मणात् वैश्यपत्न्यां जातस्याप्यम्बष्ठस्य संकरत्वं तथा वैश्यत्वं प्रतिपादयितुं प्रयत्नः कृतः। तर्हि "माता भस्त्रा पितुः पुत्रो येन जातः स एव सः" इत्यस्य खलु विष्णुवचनस्य का गतिः? का वात्र मीमांसा? न खलु तेन "अनुलोमासु मातृवर्णाः"—इति वचनस्य तात्पर्यमवगतमिति

सुस्पष्टमेव। तथाच भारतेऽनुशासनपर्वणि दृश्यते—"ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। एतेषु धर्मो विहितो ब्राह्मणस्य युधिष्ठिर। वैषम्यादथवा लोभात् कामाद्वापि परन्तप। ब्राह्मणस्य भवेच्छूद्रा न तु धर्मार्थतः स्मृताः॥ (४५ अः) "तिस्रो भार्या ब्राह्मणस्य, द्वे भार्ये क्षत्रियस्य च। वैश्यः स्वजात्यां विन्देत तास्वपत्यं समं भवेत्।" (४४ अः) [ समम् इति प्रत्येकशो वर्णविचारे बोद्धव्यम् ] "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्नसंशयम्। क्षत्रियायाञ्च यः पुत्रो ब्राह्मणः सोऽप्यसंशयम्। तथैव ब्राह्मणश्च स्याद्वैश्यायामपि ब्राह्मणात्।" "अब्राह्मणन्तु मन्यते शूद्रापुत्रमनैपुणात्। त्रिषु वर्णेषु पत्नीषु ब्राह्मणाद्ब्राह्मणो भवेत्॥" (युधिष्ठिर उवाच) "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्नसंशयः। क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि। कस्मात्तु विषमं भागं भजेरन्नृपसत्तम? यतस्तु तिसृणां पुत्रास्त्वयोक्ता ब्राह्मणा इति" (४७ अः)। अपिच शब्दकल्पद्रुमेऽपि एतदेव सूत्राकारेण कथितं यथा,—"ब्राह्मणीक्षत्रियावैश्यासु ब्राह्मणाज्जातो ब्राह्मण" इति। अत एव वैधानुलोमविवाहे मातृवर्णपितृवर्णयोरेकत्वप्रतिपादनात् मातृवर्णाभिधानेन पितृवर्णत्वमेव बोद्धव्यम्। अन्यथा ब्राह्मणस्य क्षत्रियापत्नीतो वैश्यापत्न्याः पार्थक्ये सति तज्जातास्तनयाः कदापि न ब्राह्मणाः स्युः, तर्हि महाभारतवचनानि प्रलपितान्येवोन्मत्तस्य भवेयुरिति। श्रीमता स्ववचनसमर्थनायावतारिता युक्तिः यथा—ब्राह्मविवाहादन्यत्र विवाहे जायापत्योर्न जायत एकत्वम् तथा ब्राह्मविवाहः सवर्णासम्भव एवेति। असम्यग्दर्शी मनुस्त्वाह—"चतुरो ब्राह्मणस्यादीन् प्रशस्तान् कवयो विदुः" (३।२४) तथा "ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः"॥ (३।३९) इति। अत्र मीमांसकस्य मीमांसावचनश्रवणे आग्रहः स्वाभाविक एव। परञ्चास्माकं कौतूहलम्—तत्रभवता आचार्यपादेन मूर्द्धाभिषिक्तस्य चाम्बष्ठस्य वर्णाधिकारनिर्णयप्रसङ्गे कथमेतानि स्पष्टेभ्योऽपि स्पष्टतराणि भारतवचनानि यत्नतः परिवर्ज्यानार्षालीकवचने महती श्रद्धा।

प्रदर्शिता ? अथ चेत् नैतानि कदापि तस्य दृष्टिपथमागतानीत्युपेक्षितानि, तर्हि शास्त्रमविज्ञाय अहमिकया धर्ममीमांसायां कृतः प्रयत्नः साहसमात्र एव।

अथ विज्ञवर्येण स्मार्तरघुनन्दनस्य शिष्यतामास्थाय वैद्यान् शूद्रवदतिदिष्टान् प्रतिपादयितुमपि स्वीकृतः सुमहान् क्लेशः। तथाहि शुद्धितत्त्वे रघुनन्दनो मनुवचनरूपेणाह,—"इदानीन्तनक्षत्रियाणामपि शूद्रत्वमाह मनुः। + + एवञ्च क्रियालोपाद्वैश्यानामपि तथा अम्बष्ठादीनामपि जातिप्रसङ्गादुक्तम्।" वस्तुतस्तु मनुः पौण्ड्रकोड्रद्राविडादिदेशवासिनां क्षत्रियाणां नामान्युल्लिख्य तेषामेव वृषलत्वप्राप्तिं निरूपितवान्, नतु आर्यावर्तवासिनामिति। एतेन अम्बष्ठादीनामपि वृषलत्वमपास्तम्। तथाच मनुः आर्यावर्तादन्यत्रवासिनो ब्राह्मणवंशजान् वृषलरूपेण परिगृह्य दस्युरूपेण निर्दिदेश (१०।४५)। तर्हि कथमत्र मौनमास्थाय श्रीमान् क्षत्रियादीनामिव ब्राह्मणानामपि वृषलत्वप्राप्तिमुक्तवान्, तत् कोऽभिधास्यति ?

अथ कलाविह ब्राह्मणानुद्दिश्य शास्त्रवचनानि धर्ममीमांसाकारेण यान्यनुद्धृतानि तानि यथा, श्रीमद्भागवते—"क्षीयमाणेषु देहेषु देहिनां कलिदोषतः। वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम्॥ "शूद्रप्रायेषु वर्णेषु—" इत्यादि। अत्र वर्णेषु ब्राह्मणादिषु वर्णेषु शूद्रतुल्येष्वित्यर्थः। तथाच महानिर्वाणतन्त्रे—"विप्राः शूद्रसमाचाराः सन्ध्यावन्दनवर्जिताः। कदाहाराः कदाचारा दुर्वृत्ताः पापकारिणः॥ + + + ब्राह्मणचिह्नमेतावत् केवलं सूत्रधारणम्॥" इत्यादि। अथ देवीभागवते,—"पूर्वं ये राक्षसा राजन् ते कलौ ब्राह्मणाः स्मृताः। असत्यवादिनः सर्वे दाम्भिका जनवञ्चकाः।" तथाहि पराशरः,—"अग्निकार्यपरिभ्रष्टाः सन्ध्योपासनवर्जिताः। वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः॥" यदि नाम मीमांसकः ब्राह्मणः स्यात्तर्हि तस्याधुना वर्णो वर्णयितव्य एव सत्यदृष्ट्या शास्त्रदृष्ट्या चेति। दृश्यते च मनुसंहितायां,—"स्वकर्मणाञ्च त्यागेन जायते वर्णसङ्करः (१०।२४)।" तथा—"परधर्मेण जीवन् हि सद्यः पतति जातितः (१०।९७)।" अपि दृष्टिपथमागतमेतच्छास्त्रवचनं श्रीमतो गोपालस्य ? आगतञ्चेन्न क्षत्रियादीनाम् अम्बष्ठादीनाञ्च वृष-

लत्वं प्रतिपादयतस्तस्य कीदृशी खलु आकृतिरिति प्रश्नः । अथापरोऽपि प्रश्नः —कलौ ब्राह्मणादन्यत्र क्षत्रियवैश्ययोर्लुप्तत्वं दृष्ट्वा यत् रघुनन्दनवचनम्— "युगे जघन्ये द्वे जाती ब्राह्मणः शूद्र एवचे"ति, यदि अवितथं स्यात्तर्हि वङ्गदेशादन्यत्र वर्तमानानां क्षत्रियाणां तथा वैश्यानां का गतिः ? ते हि अद्यापि क्षत्रियास्तथा वैश्या इति तत्रत्यैर्ब्राह्मणैः शास्त्रपारगैरनुमोदिता यथाविधि शास्त्राचारमनुचरन्ति। अपि तेषामाचारः शास्त्रविगर्हितः पण्डिताश्च पतिता ये तान् क्षत्रियादीन् स्ववर्णानुरूपाणि धर्म्याणि जातकर्मादीनि च कारयन्ति ? यदि रघुनन्दनवाक्यमेवापावृतमोक्षद्वारं स्यात्तदा वङ्गादन्यत्रार्यस्थाननिवासिनः सर्व एव निरयगामिनः । अत्र कः सन्देहः ।

( क्रमशः )

---

साङ्गवेद-विद्यापीठे अर्थसाहाय्यम्

तत्रभवतां जगद्वरेण्यानां स्वर्गतानां गुरुजीपादानां श्रीश्रीबालानन्द-ब्रह्मचारि-महाराजमहोदयानां स्मृतिमुपलक्ष्य तदीयप्रधानशिष्येण श्रीश्रीमोहनानन्द-ब्रह्मचारि-महाराजमहोदयेन "साङ्गवेद-विद्यापीठ"स्य साहाय्यार्थं शतं रौप्यकाणि प्रेषितानीति।

# वंगीयविद्वत्सम्मेलनस्य

## कलिकाताकेन्द्रीयमहाधिवेशन-कार्यविवरणी

विगतसौराग्रहायणस्य तृतीयदिवसात् पञ्चमदिवसपर्यन्तं विविध-सद्गुणैकनिलयाशेषसम्मानभाजन-न्यायाधीश-स्यार-श्रीयुक्तमन्मथनाथमुखो-पाध्याय एम. ए., बि. एल., के. टि. महोदयानामाध्यक्ष्येण कलिकाता-संस्कृत-साहित्य-परिषद्भवने सुसम्पन्नं कथित-महाधिवेशनम्। तत्र प्रथमदिनं दैवानुष्ठानार्थं, द्वितीयं महाधिवेशनार्थम्, अन्त्यं च दिनं परिशिष्टकार्यार्थं विनिर्दिष्टमासीत्। महासभायान्तु निम्नलिखिता मनीषिणो यथासमयमुपेत्य सभाकृत्यमशेषं सम्पादयामासुः। मः मः दुर्गाचरण-सांख्यवेदान्ततीर्थाः, डाः अमरेश्वरठाकुर-वेदान्तशास्त्रिणः एम. ए., पि-एइच. डि., पण्डितप्रवरा अन्नदाचरणतर्कवागीशाः, पः प्रः कालीपद-तर्काचार्याः, पः प्रः दीनबन्धु-साहित्यशास्त्रिणः, भिषगाचार्य-कविराज-ज्योतिषचन्द्र-सरस्वत्यः, पः प्रः वासुदेव-तर्कतीर्थाः, पः प्रः लक्ष्मीकान्त-सांख्यतीर्थाः, पः प्रः तारानाथ न्यायतर्कतीर्थाः, पः प्रः यज्ञेश्वर-न्यायतर्कतीर्थाः, पः प्रः कालीकण्ठ-काव्यतीर्थाः, पः प्रः वनमालि-वेदान्त-तीर्थाः एम. ए., पः प्रः हरिदास-तर्कसिद्धान्ताः, पः प्रः भवदेव-काव्य-व्याकरणतर्कतीर्थाः, पः प्रः कृष्णकान्त-पुराणशास्त्रिणश्चापरे च राष्ट्रीय-पण्डितपरिषदः सुगृहीतनामधेयाः प्रान्तीयसदस्याः। विषयिसदस्येषु पुनः

एम. ए. वि. एल. इत्युपाधिकश्रीयुक्तनरेन्द्रनाथशेठ महोदयानाम्, उद्भटसागर इत्युपाधिमतां श्रीयुक्तपूर्णचन्द्र दे महोदयानां, एम. ए. इत्युपनाम विद्वद्बान्धवश्रीयुक्तरामकृष्णचक्रवर्तिप्रमुखाणाञ्च सभास्ताराणां नामान्युल्लेखयोग्यानि। पण्डितवरेण्यानां डाः अमरेश्वर-वेदान्तशास्त्रि-महोदयानां प्रस्तावक्रमेण ज्योतिषशास्त्रिमहोदयानां समर्थनेन च कौसुम-माल्यादिभिरलङ्कृताः संवृताश्च सभापतिमहोदयाः सम्मेलनाध्यक्ष-श्रीहरिदास-देवशर्मणा प्रदत्तं वाचितञ्च "श्रद्धाभिनन्दनम्" समुचितविनयप्रदर्शनपूर्वं गृहीत-वन्तः। ततस्तदनुमत्या सभायाः कार्यसूचिक्रमेण च अभ्यर्थनासमितिसभापति-पण्डितप्रवर-श्रीयुक्तकालीपदतर्काचार्यमहोदयैः सुविस्तृतं गम्भीरार्थप्रतिपादकं स्वकीयमभिभाषणं प्रवाचितम्। तदनन्तरं सभापतिमहोदयानां विशेष-निर्देशेन सम्मेलनाध्यक्ष-तर्कसिद्धान्तमहोदयैर्वङ्गीयविद्वत्सम्मेलनस्याष्टादश-वार्षिककार्यविवरणी समुपन्यस्ता वाचिता समनुमोदिता च समाधिष्ठित-महोदयैः। सभापतेरभिभाषणप्रसङ्गेन न्यायाधीशमहोदयाः प्राप्ताभिनन्दन-मधिकृत्य वङ्गीयविद्वत्सम्मेलनस्य उद्देश्यप्रशस्तिसूचकं सहानुभूतिपूर्ण-मभिमतं प्रकाश्य एवंविधसभायाः सभापतित्वं स्वकीयमतीव गौरवावह-मित्यादिभिः प्रियशतैर्वचोभिरभिनन्दितवन्तः सभाकर्तृपक्षीयान् समवेतांश्च सभास्तारान्।

अतः परं भारतीयप्राचीनशास्त्ररक्षामूलकं चतुष्पाठीरक्षामूलकम् उत्सृष्ट-वृषरक्षोपयोगि च प्रस्तावजातं श्रीयुक्तवेदान्तशास्त्रि-साहित्यशास्त्रि-ज्योतिष-सरस्वती-डाः ज्ञानेन्द्रनाथ-सुप्रसिद्धव्यवहाराजीव-उषाकान्तप्रमुखमनीषिगण-समुपन्यस्तं यथायथसमालोचनपुरःसरं सभाक्षेत्र एव गृहीतम्, राष्ट्रीय-विशेषसहायतालाभार्थं काचन प्रतिनिधिसमितिश्च स्थिरीकृता। अथ धन्यवादादिप्रदानानन्तरं सभासमाप्तिर्जातेति शम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| January, 1938 | १८५९-शकीये पौषे<br>२०श-वर्षस्य ९म-संख्या | Vol. XX, No. 9 |
|---|---|---|

## प्रशान्तरत्नाकरम्

नाटकम्

श्रीकालीपदतर्काचार्यप्रणीतम्

( नान्दी )

नीलनलिनमञ्जुलतनुरतनुचापधारी
कर्बुरकुलधूमकेतुरनुगतहितकारी ।
हित्वा नृपपदमतिघनभीषणवनचारी
जयति जयति सीतापतिरखिलदुरितहारी ।

अपि च

यस्यासीमगुणैरधारि सुतरां शाखामृगैर्वश्यता
यं ध्यायन्ति नरामरासुरवराः सर्वार्थकल्पद्रुमम् ।
यो लोकत्रयभव्यसाधनकृते नानास्वरूपोऽभवत्
सोऽयं राघवकुञ्जरो विजयते ज्योतिः परं श्यामलम् ।

नान्द्यन्ते

सूत्रधारः—अलमतिप्रसङ्गेन। आदिष्टोऽस्मि नवरूपकप्रयोगदर्शन-कुतूहलिन्या परिषदा, यथा नवीनकविनिबद्धेन केनापि रम्यरूपकेण सम्भाव्यतामेष समाज इति। तत् केन वा तथाविधेन रूपकरत्नेन भवितव्यम्? (स्मृतिमभिनीय) आं दृष्टम्, अस्ति नातिचिरमेव केनापि कविना समुपहृतमस्मासु 'प्रशान्तरत्नाकरं' नाम रूपकरत्नम्, तेनैव तथाभूतेन शक्योऽयं समाजो रञ्जयितुम्। यत्र खलु—

सुगमः शब्दसम्भारः प्रयोगानुगुणक्रमः।
नानाभावसमुल्लासः प्रीतिहेतुः पदे पदे॥

तदिदानीं पारिपार्श्विको द्रष्टव्यः। तत् कथं नु खलु तं पश्यामि?

नेपथ्ये पारिपार्श्विकः—(संवृतस्य कवाटस्य शृङ्खलां संघट्टयन्) भाव, भाव, आः! कथमद्यापि संवृतः कवाटः?

सूत्र—अये, एष पारिपार्श्विकः स्वयमेव यथाकालं प्राप्तः! तदस्य द्वारमुद्घाटयामि। (तथा करोति)

पारिपार्श्विकः (प्रविश्य)—भाव, एषोऽहमभिवादये। कथमद्यापि संवृतः कवाटः?

सूत्र—मारिष, प्रातःप्रभृति भिक्षुभिः समुद्वेजितस्य दुर्भिक्षविक्षुभिते जनपदे कवाटसंवरणमन्तरेण नास्त्यन्यो निस्तारोपायः!

पारि—साम्प्रतं दिवसस्य चतुर्थे यामे पश्चिमाचलसन्निहिते सूरे कुतो वा भयं भिक्षुभ्यः, येनैवमनुष्ठीयते?

सूत्र—मारिष, न जानासि गतिं भिक्षूणाम्।

यदा जनपदे भिक्षा प्रतिद्वारं सुदुर्लभा।
तदा यामस्य नियमं पालयन्ति न भिक्षवः॥

पारि—आं ज्ञातम्!

(नेपथ्ये)—'भो अयमहं भिक्षार्थी, देहि भो भिक्षाम्'।

सूत्र—मारिष, श्रृणोषि ? अथ साम्प्रतं पश्यसि कथमस्यामपि वेलायां संवृतकवाटस्तिष्ठामीति ?

पारि—अथकिम्, ज्ञायते। तत् को नु खल्वेष दिनावसाने भिक्षते ?

सूत्र—भवतु, पश्यामि, ( दृष्ट्वा ) आम् एष रत्नाकरो नाम ब्राह्मणः

बलवत्पीनकायोऽपि मानं निर्वास्य दूरतः।
प्रतिद्वारमटन भिक्षामभ्यापतति मामितः ॥

तदहमपि तथैव दैन्यं गतः किं नु खलु करिष्ये ? ( स्मृत्वा ) आं दृष्टम्, मारिष, एहि पक्षद्वारकेण संगीतशालामभिगम्य रत्नाकरादात्मानं रक्षावः। एष हि—

भिक्षाकर्पटसंशोभिस्कन्धसन्धिः सुदुःखितः।
क्षणादूर्द्ध्वमिहागन्ता विलम्बेन कृतं ततः ॥

पारि—तथा। ( निष्क्रान्तौ )

[ इति प्रस्तावना ]

( ततः प्रविशति भिक्षाकर्पटशोभितस्कन्धो रत्नाकरः )

रत्ना—भो अयमहं भिक्षार्थी, देहि भो भिक्षाम्! (नेपथ्यमुखमालोक्य) अहह! कथमेतावपि पुरुषौ मां भिक्षार्थिनमुपलभ्य निर्दयमेव पलायितौ ? अहो लोकवृत्तम्! अहो मे दुर्गतस्य भाग्यमहिमा!

गेहेषु गत्वा धनिनां समेषां सम्प्रार्थितास्ते लवमात्रभैक्ष्यम्।
केनापि हा हा न कृताऽनुकम्पा वृथैव सर्वं दिवसं श्रमो मे ॥

धनिकाः खलु दीनानक्षिपातमात्रेणापि नानुकम्पन्ते, तदीयपरिवारास्ततोऽपि मदोद्धताः परुषया वाचा दीननिवहान् व्यथयन्तस्तृप्यन्ति। तत् क एष लोकसंव्यवहारो नाम ?

येनैव भूतेन समृद्धिभाजां विनिर्मितं सृष्टिकृता शरीरम्।
तेनैव किं दीनगणस्य कायो न निर्मितस्तेन महामहिम्ना ?

किञ्च

अन्तःकरणतत्त्वस्य शक्तिरैश्वर्यशालिनाम् ।
दीनानां मानसीं शक्तिं पराभूय न वर्द्धते ।

तथापि धनिकाः सर्वतो हीनान् दीनान् मन्येरन्नित्यत्र किं वा वीजं विधिनिसृष्टादर्थवैभवादन्यत् ? स्मरामि हन्त स्मरामि प्रतिदिवसं पथि क्रीडतो धनिकतनुजैरलङ्कृतैर्दीन इति धिक्कृतस्य वत्सस्यात्रेयस्य मे सास्रं दुःखान्धकारमलिनं वदनम् ! तथा स्मरामि धनिकपत्नीगणैः सुमहत्या सम्पदा परिपूजितेन देवायतनगुरुणा तदादरव्यापृतेन दैन्यादेव प्रतिरुद्ध-प्रवेशायाः प्रियाया माधव्या जनन्याश्च मे गभीरदुःखनिवेदनवैशसम् !

दरिद्रस्य खलु,—

मैत्रीं छिनत्ति सुचिरन्तनबान्धवोऽपि,
याच्ञाभयेन परिधावति दूरमार्गे ।
मूढोऽपि वित्तसहितो विदुषां वरेण्यो
दीनो विचित्रमतिरप्यवमानपात्रम् ॥

अपि च

आढ्यानां येन दोषेण समाजो नैति विक्रियाम् ।
तेनैव वत दीनानां समाजपरिवर्जनम् ॥

तदत्र वैषम्ये दीनानां दैन्यविधाता विधिरेव सुतरामधिक्षेपमर्हति ! हा हत-विधे, निष्करुण,

यदि दुःखाय जीवानां जन्म सृष्टाः कथं नु ते ।
एवं वैषम्यनैर्घृण्ये न युज्येते पितुस्तव ॥

अथवा क एष कर्मप्रभावसन्निधाने विधिर्नाम ?

जीवाः स्वकर्मविहितं फलमाश्रयन्ते
तस्माद् बहिर्विधिरलं न फलं प्रदातुम् ।
तेनैव चित्ररचना जगतो निरूढा
हेतुर्विचित्र इति कार्यगणो विचित्रः ॥

पुत्रो—हा हा ! नातः परं शक्यं चिन्तयितुम् ! यद् भवतु तद् भवतु, लक्षपतिगृहमेव गच्छामि, अथ यदि तत्रापि नाभिमतलाभस्तदा ! तदा ॥ अथवा अलमद्यापि मर्यादाभङ्गभयेन, स्वजनानां जीवनार्थं—

बलेनैव ग्रहीष्यामि तस्य लक्षपतेर्धनम् ।
स्वजनानां विपन्नानां रक्षा कार्या यथा तथा ॥

तदेष तत्रैव गच्छामि । ( गन्तुमुद्यतः )

( ततः प्रविशति भिक्षुवेशेन गायन्ती सुमतिः )

गीतम्

जीव गुणाकर सुचरितमनुसर खलतां परिहर वह बहुमानम्,
भौतिककाये दुरितसहाये मा कुरु मा कुरु गौरवदानम् ।
विधिविपरीतं विधिमनु भीतं मानसमधिकुरु लसदवधानम्,
वरमिह मरणं सुचरितशरणं तदपि वरं नहि पापविधानम् ॥

( निष्क्रान्ता )

रत्ना—( विस्मयमभिनीय ) अये, का नु खल्वेषा !

प्रसादयति चित्तं मे देवतेव शरीरिणी !
यस्याः सङ्गीतझङ्कारैः प्लावितं गगनान्तरम् ?

अहो साधु उपदिशति, तत् धिङ् मां वृत्तभङ्गव्यवसायिनम् !

यत्नेन तावद् यदरक्षमादौ वृत्तं महत् कष्टमपि प्रपन्नः ।
तदेव हा हा क्षणमात्रकेण त्यक्तुं प्रवृत्तोऽस्मि विमूढचेताः !

तत् किमिदानीमनुतिष्ठामि ? न शक्यते जीवता क्षुधया परिपीड्यमानानां स्वजनानां प्रत्यक्षमेव मरणमीक्षितुम् । तत् किमिदानीमनुतिष्ठेयम् ? किमनुतिष्ठेयम् ? ( स्मृतिमभिनीय ) आं दृष्टम् ! गायन्त्या प्रतिषिद्धं भौतिके काये गौरवं हास्यामि, तदिदानीम्,—

वरं विशुद्धवृत्तस्य मरणं मे क्षणान्तरे ।
न जातु वृत्तभङ्गे न जीवनं पापसङ्कुलम् ॥

हा तात, हा मातः, हा प्रिये माधवि, हा वत्स आत्रेय, युष्मान् परित्यज्य क्वापि लोकान्तरे गमिष्यामि, वृथैवायं कायो यः क्षुधाविशीर्णानां चरमं श्वासं मुञ्चतामपि बान्धवानां न प्रतिकर्तुमलं दुःखस्य ! तत्

अकालहीनं वपुरेतदद्य त्यक्त्वा परं लोकमुपाश्रयेयम्।
यतः सुहृत्पालनशक्त्यभावप्रसूतलज्जां विनिवर्त्तयेयम् ॥

तत् केनोपायेन समीहितं साधयामि ? ( विचिन्त्य ) आं दृष्टम् ! इहैव न्यग्रोधे आत्मानमुद्बध्य दुःसहां दुःखज्वालां निर्वापयिष्यामि ! क्व नु खलु पाशं लप्स्ये ? ( विचिन्त्य ) आम्, एष भिक्षाकर्पट एव पाशो भविष्यति । तदलं विलम्बेन यावदिदानीमेव वृक्षमारुह्य कण्ठे पाशं योजयित्वा स्वं समीहितं सम्पादयामि । ( यथोक्तं सम्पादयितुमुपक्रमते )

( नेपथ्ये )

कः कोऽत्र, परित्रायतां परित्रायतां मामनाथां साहसिकेन तस्करेणाभिभूयमानाम् ।

रत्ना—( श्रुतिमभिनीय ) अये, अदूरे योषित इवार्तप्रलापः श्रूयते ? तत् किन्नु खल्विदम् ?

( नेपथ्ये )

हा हा एष दुष्टतस्करः पादपान्तरितां मामचिरेणाक्रमिष्यति, हा हा ! अशरणास्मि ! कः कोऽत्र, परित्रायतां ! परित्रायताम् !!

रत्ना—( वृक्षात् सहसा अवतीर्य ) अये, एषा कापि योषिद् दुष्टेन तस्करेण पराभूयते ! धिक् साहसम् ! रत्नाकर, किमद्यापि विलम्बसे ?

एषा कुलाङ्गना काचित्तस्करेणाभिभूयते ।
पञ्चेन्द्रियसमायुक्तस्त्वं माध्यस्थ्येन वर्तसे ?

तदलमतः परमपि प्रतीक्षणेन—

अचिरादस्य मूढस्य कण्ठं निष्पीड्य बाहुना ।
बलवानबलां रक्ष शौर्य्यं सार्थकमस्तु ते ॥

( गच्छन् पुनः प्रतिनिवृत्तः ) अथवा अदण्डेन न प्रस्थातव्यम् ! तत्

क नु खलु दण्डः? ( इतस्ततो दृष्ट्वा ) आम्, एषा पादपशाखा दण्डो भविष्यति। ( पादपशाखां गृहीत्वा ) एष साम्प्रतं गच्छामि।

( निष्क्रान्तः )

( ततः प्रविशति पादपान्तरितविग्रहां योषितमाक्रमितुमुपक्रान्तः पुरुषः )

पुरुषः—सुन्दरि, अलमद्यापि द्रवानेन स्वपरित्राणप्रयत्नेन, व्यर्थं परिश्राम्यसि! एषोऽहमिच्छामात्रेणैव त्वां ग्रहीतुं शक्नोमि, तथापि सान्त्वेनानुनीयसे, सत्वरमात्मानमर्पय, नातः परमपि मां परिश्रमं लम्भयेथाः।

स्त्री—भद्र, प्रसीद, एषा तव पादयोः पतामि, प्रसीद, अनुमन्यस्व मां निर्विघ्नगमनाय।

पुरुषः—निष्फलः प्रलापः, न मुच्यसे।

स्त्री—यद्येवम्, कथय, किमस्माज्जनात् काम्यते?

पुरुषः—अलङ्काराः।

स्त्री—कुतो मे दीनाया अलङ्काराः?

पुरुषः—अस्त्येवैतत् रौप्यमयं वलययुगमम्, रौप्यमयी मेखला, सुवर्णमयञ्च कुण्डलयुगलम्।

स्त्री—एतेषां परिहारे निराभरणा पत्युरशिवसूचिका भवेयम्।

पुरुषः—आः! दुर्विनीते, लोहवलयमात्रकेण साभरणा भूत्वा पत्युः शिवमुद्घोषय, तत् सत्वरं प्रतिपादय, यदि श्रेयः कामयसे?

स्त्री—हा हा! अशरणास्मि, तत् का गतिः? गृहाण ( अलङ्कारान् शरीरादुन्मोच्य दूरतः क्षिपति )

पुरुषः—( क्षिप्तानलङ्कारान् चिनोति )

स्त्री—अपि नाम अस्मिन्नवसरे पलायिष्ये? अथवा शूरतमादस्मादेतावता न शक्यं पलायितुम्, तदशरणाया मे नास्ति दैवादृते शरणमन्यत्। भगवति कात्यायनि, प्रसीद।

( क्रमशः )

---

# धर्ममीमांसायां प्रतिवादः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीज्ञानेन्द्रमोहनशर्मा ]

अथ वैद्यवृत्तिनिरूपणाय श्रीमता—"अम्बष्ठानां चिकित्सित"मिति मनुवचनमुद्धृतम्। परन्तु मनुरम्बष्ठपदेन मातृदोषदूषिताकन्यातः अर्थात् कुमारीतो जातानामपसदाम्बष्ठानां ( १०।६।८ ) तथा 'चिकित्सित'पदेनाश्व-गवादीनामेव चिकित्सायाः परिग्रहणं कृतवानिति मीमांसाकारस्य बुद्धे-र्विषयतां न गतमिति शोच्यम्। मनोरेतस्यैव वचनस्य अव्यवहितपूर्व-वचनम्—"ये द्विजानामपसदास्ते निन्दितैर्वर्त्तयेयु"रित्यादिवचनं "अम्बष्ठानां चिकित्सित"मित्यस्य तथाविधेनैव अर्थेन सङ्गच्छते, अन्यथा सङ्गतेरभावः। अत्र तु वैद्यस्य पुण्यतमा चिकित्सा न प्रतीयते।

द्विविधः खल्वम्बष्ठः सदसद्भेदेन। तत्र विधिविहितजातः पूर्वस्तथा-ऽविधिविहितोऽवरः। यदुक्तं मीमांसाकर्त्रा—"वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते"—इति—सोऽपि किमपसदतां याति? यदि अत्रापि अपसदत्वं तर्हि किं नाम सार्थक्यं वैधविवाहस्य? यत्र हि अवैधविवाहस्तत्रैवापसदस्या-वसरः। एतदपि वेदयितव्यं भवतीति भाग्यम्। अथवा स्वेच्छया सदसतो-रम्बष्ठयोर्भेदमपलाप्य प्रवृत्तिवशाद् निबन्धकारेण सदेवासच्छब्देन निर्दिष्टं न वेति स एव जानाति। नहि युक्तिशतेनापि घटं पटयितुं शक्नोति कश्चित्। वैद्या जात्या ब्राह्मणाः, ब्राह्मणेतरा वा इति वङ्गेषु विवादो बहोः कालादेव प्रचरति, परन्त्वधुनात्र वैद्याः सत्यपि ब्राह्मणभ्रुवप्रातिकूल्ये स्वमर्यादामधिकृत्य स्वे महिम्नि विराजन्ते न वेति किमविदितमस्ति निबन्धकस्य? वैद्यानां गोत्रप्रवर्तका ये ऋषयः, येषां नाम्ना वैद्याः स्वपरिचयं प्रदाय गौरव-

मनुभवन्ति, तेषां नामान्यपिनाम धर्ममीमांसाकर्त्तृ: कदाचित् श्रुतिपथ-मागतानि ? यदुक्तं महामहोपाध्याय-श्रीमता भरतेन "चन्द्रप्रभायां" वैद्यकुल-पञ्जिकायां—"यस्य यस्य मुनेर्यो यः सन्तानः स स विश्रुतः। तत्तद्-गोत्रादिना वैद्यः श्रेष्ठाद्यो हि स्वकर्मणा" इति,—तत एव वैद्याः स्वस्व-ब्राह्मणत्वं प्रतिपादयन्तो गोत्रप्रवर्त्तकर्षेर्नामोल्लेखपूर्वं संकल्प्य धर्म्याणि पैत्र्याणि च कर्माणि कुर्वन्ति कार्यन्ते च सद्ब्राह्मणैः। ये हि वैद्यानां वैश्यत्वं प्रतिपादयितुं यतन्ते, ते किं न जानन्ति वैश्यानां नास्त्यधिकारो वेदाध्यापने ? वैद्या यदि ब्राह्मणेतराः स्युस्तर्हि कथं वैद्यानाम् आयुर्वेदस्य अध्यापनेऽप्यधिकारः ? अप्यस्ति कश्चिदायुर्वेदस्य वेदत्वे सन्देहः ?

अथात्र प्रसङ्गतः संक्षेपेण वैद्याम्बष्ठयोः परिचयः प्रदीयते। न हि अम्बष्ठशब्देन तथा वैद्यशब्देन चिकित्सकानां तथा जात्या वैद्यानामव-बोधः कार्यः। आसीदार्यावर्त्ते अम्बष्ठो नाम कश्चिद् देशविशेषः। तत्र ये केचिन्निवसन्तिस्म, त एव अम्बष्ठाः। परन्तु तद्देशवासिनो ब्राह्मणा एव अम्बष्ठशब्देन विशेषिता आसन्। अपि च अम्बष्ठ इति शब्दः चिकित्सकेष्वपि। यथा मेदिन्यां तथा विश्वे,—"अम्बष्ठो देशभेदेऽपि विप्राद्वैश्यासुतेऽपि च।" भानुजीदीक्षितस्त्वाह "अम्बे तिष्ठतीति अम्बष्ठः। सुपिस्थ इति कः। अम्बाम्ब इति षत्वम्।" यो हि आतुरे पितृवत्तिष्ठति रोगान् निराकर्तुं स एव अम्बष्ठस्तस्मात् चिकित्सकस्यापि अम्बष्ठ इति संज्ञा। नैतावता विज्ञायते अम्बष्ठशब्देनैवावबुध्यते वैद्यः। एको हि शब्दो बहूनेवार्थान् प्रतिपादयितुं शक्नोतीति सर्वजनपरिज्ञातमेव। ये चाधुना वङ्गेषु वैद्यशब्देनाभिधीयन्ते, ते पूर्वम् अम्बष्ठदेशवासिनो ब्राह्मणा एव आसन्। अथ ते तद्देशं परित्यज्य सरस्वतीनदीतीरे वासं कुर्वन्ति स्म। एवञ्च ये पूर्वमम्बष्ठास्त एव सारस्वता जाताः। न हि सर्व एव अम्बष्ठा ब्राह्मणाः सरस्वतीतीरे वासञ्चक्रुः तेषु केचन सिन्धुतीरमासाद्य वासं कुर्वाणाः सैन्धवा इत्यभिहिताः। अथ त एव सारस्वताः सैन्धवाश्च अम्बष्ठा ब्राह्मणा बौद्धराजेन समानीता मगधे तथा गौडाधिपतिना समानीता

गौडे निवसन्तः सम्पूजिताः स्ववृत्या वर्तन्ते स्म। अत एवाह महामहोपाध्यायो दुर्जयः,—

"ब्रह्मावर्त निवासिनां वंश्या ये ह्यग्रजन्मनाम् ।
सरस्वतीसरित्तीरे स्थिताः सारस्वता हि ते ॥
सिन्धुतीरं तथाश्रित्य सैन्धवाः परिकीर्तिताः ।
सारस्वतप्रसूतत्वात्तेऽपि सारस्वता द्विजाः ॥
तेषां वैद्यकुले जाताः सर्वविद्याविशारदाः ।
आयुर्वेदे कृताभ्यासाः प्रकृष्टाः कुलकर्मसु ॥
आर्यावर्तात् समानीय गौडे च मगधे तथा ।
वैद्याः सारस्वता विप्रा बौद्धराजेन स्थापिताः ॥" इत्यादिः ।

तथाच सारस्वतकुलप्रदीपे—

"वैद्यवंशसमुत्पन्ना ब्राह्मणा वेदपारगाः ।
चिकित्साकुशलाश्चापि सुदक्षा याजने तथा ॥
श्रेण्या सारस्वतास्ते च सर्वे विष्णुपरायणाः ।
आर्यावर्तात् समागम्य जह्नुकन्याकूलेऽवसन् ॥
विप्राः सारस्वता वैद्या विष्णुगुप्तमहामतेः ।
उपदेशेन नीतास्ते पुत्रदारगणैः सह ॥"

पुनश्च—

"अम्बष्ठदेशतश्चैते गौडमण्डलमागताः ।
अम्बष्ठदेशवासित्वादम्बष्ठाश्चापि ते स्मृताः ॥"

यथाच वाजसनेय-काण्वशाखीय-ब्राह्मणकुलप्रदीपे—

"गौडदेशस्थिताश्चैते वैद्यनाम्ना सुविश्रुताः ।
शाखीया द्विविधाः प्रोक्ताः सारस्वताश्च सैन्धवाः ॥
श्रेण्या सारस्वताः सर्वे विज्ञेया ब्राह्मणाश्च ते ।
जात्या वैद्या न विज्ञेया नाम्बष्ठजातयोऽपि च ॥

त्रिजातिरिति वैद्यानां विप्रेषु ज्ञातिगौरवात् ।
प्राणिभिः पूजनीयत्वाद्वृत्तेः पूज्यतमा तथा ॥
चिकित्सा-कुलवृत्तित्वाद्वृत्त्या जातिप्रवर्तनात् ।
वैद्यजातीति नाम्ना ते बौद्धराजेन स्थापिताः ॥
यावदेवं कृता पूजा बिम्बिसारनृपेण च ।
तावत्ते वैद्यजातीति लोकैरिह प्रकीर्तिताः ॥
ज्ञेया वृत्तिस्तु वैद्यानां चिकित्साध्यापनादिका ।
नृपधर्माश्रयश्चापि इति चौशनसी स्मृतिः ॥
क्षत्रधर्माश्रयो वैद्यो ब्राह्मणः क्षत्रिय इव ।
अतः स ब्रह्मक्षत्रियो लोकैरिति निगद्यते ॥
मूर्द्धनि स चाभिषिक्तत्वात् क्षत्रियोऽपि प्रकीर्तितः ।
मूर्द्धाभिषिक्तराजन्यौ शब्दौ ह्येकार्थवाचकौ ॥"

अलमतिविस्तरेण ॥

एवमेव वैद्यशब्देनापि नहि चिकित्सापराणां वङ्गीयवैद्यानामवबोधः कार्यः । अत्र च उशना—

"सर्ववेदेषु निष्णातः सर्वशास्त्रविशारदः ।
चिकित्साकुशलश्चापि स वैद्यस्त्वभिधीयते ॥"

तथाच महर्षिरात्रेयः—

"विद्यासमाप्तौ भिषजस्तृतीया जातिरुच्यते ।
अश्नुते वैद्यशब्दं हि न वैद्यः पूर्वजन्मना ॥"

अपि च विष्णुसहस्रनामसु तथा वटुकभैरवस्तोत्रे भगवन्तौ हरिहरौ वैद्यशब्देनाभिहितौ दृष्ट्वापि कथं मीमांसकस्य वैद्ये विमतिः स्यादिति विचित्रम् । अपि तेन चक्षुषाऽपि वेदा न दृष्टाः ? नाप्यधीतानि पुराणादिकानि ? इति सुधीभिर्विचार्यम् ।

# जगदीशचन्द्रवसुवियोगाष्टकम्

[ निबन्धकः—पुरीसंस्कृतमहाविद्यालयाध्यापक-श्रीआनन्दमहापात्रः ]

जगदीशस्तथा चन्द्रो वसु नाम धरातले ।
त्रयमेतत् त्रयीवाऽऽदौ कस्य नावश्यकं भवेत् ॥१॥

रक्षको जगदीशो हि यदि न स्यात् कुतो वसु ।
वस्वभावेन चन्द्रोऽपि नैवाऽऽह्लादकरो भवेत् ॥२॥

अत एतत्त्रययुतं यस्य नाम स्थितं क्षितौ ।
तस्य विच्छित्तिरद्यत्वे नाप्यवद्या निगद्यते ॥३॥

नाहं तस्य जगत्प्रियस्य सुचिरं ज्ञानानुरक्तस्य च
विश्वे नश्वरतां स्मरामि किमहो ! श्रीविश्वनाथः स्वयम् ।
नो मृत्युञ्जयतां प्रयाति न हि चेत्तत् किं वदामोऽधुना
दायादो विशदान्वयोऽपि सहजं दायं मृतावृच्छति ॥४॥

कुमुदस्य मुदं दधाति नो सकलस्यैव कलाकरो विधुः ?
कमलं भरतावनौ स्थितः समलं स्यादिति को वदेद्बुधः ॥५॥

शब्दब्रह्मपरायणो गुणवतामोजस्विनां श्रेयसा-
माधारो धरणीधरः प्रतिभया भास्वानिवात्युज्ज्वलः ।
यो देशस्य च केशवो निगदितो विज्ञानमानादिभि-
स्तेन श्रीजगदीशचन्द्रवसुना जेजीय्यतामव्ययम् ॥६॥

नगानां वीक्ष्य जडतां दया यस्यालया गिरा ।
उत्तिष्ठेति च भद्रं भो इत्यवादीत् सुधाकिरा ॥७॥

यः पाश्चात्त्यदिशं सुधाकरसमोल्लासेन बोधोदयो-
च्छ्वासेनोच्छलितां चकार महता माहात्म्यमत्युन्नतम् ।
तस्यैवोत्तमदेवसङ्घमजुषः को वर्णयेद् वर्णकै-
रल्पं कल्पलता फलं दिशति किं तेनाद्य धन्या धरा ॥८॥

# ब्राह्मीतिवृत्तम्

[ निबन्धकः —श्रीप्रफुल्लकुमार-वेदान्ततीर्थः ]

का हि ब्राह्मी ? किं मूलम् अस्याः ? कुतश्च प्रभवति ? तद् अहं विवक्षुरस्मि अस्मिन् प्रबन्धे। पुरा किल आर्या ब्रह्मावर्तम् अधितष्ठुः, वेदा वै तेषां धर्मे अर्थे कामे मोक्षे च निदर्शनम् आसन्। वेदाः द्विधा एव स्युः। मन्त्रस्तथा ब्राह्मणं च। मन्त्राणां या व्याख्या तद् ब्राह्मणम् इति। तत्र ब्राह्मणेषु या भाषा श्रूयते सा तदानीं ब्राह्मीति गीयतेस्म। तस्माद् वेदो हि मूलम् अस्याः। ये वै आर्याः, सरस्वती तथा दृषद्वतीति नदी-द्वयस्य तीरभूमिषु अभिजातास्तेषां वेदविद्यासु सम्यक् परिदृष्ट्या क्रिया-कलापेषु च कुशलतया तत्तत्स्थानेषु इयं ब्राह्मी विदिताऽसीत्। अथ यदा कुरुक्षेत्रादिविभिन्नदेशेषु ते किल प्रसूतिं लेभिरे तदा एषा भारतीति नाम्ना ख्यातिमाप।

अधुना या संस्कृतभाषा आख्यायते, ब्राह्मी हि मूलं तस्या अपि। इयं ब्राह्मी किल भारतेषु गृहमेधिनां तथा तपोवनेषु ऋषीणां च व्यवहार-कारणं बभूव। अहो ! महर्षिकुले सञ्जाता अपि वयम् अधुना नितरां दरिद्रतया न जानीमः किं स्विद् अस्माकं ध्येयं किमुत वा हेयमिति। ततो हि दिवसाद् दिवसम् अधिगच्छामो निम्नतरां स्थितिं परिवर्तमानस्य जगतः। अस्य किं प्रतिषेधकं तच्चिन्त्यं मनीषिभिः। यद्धि युगे युगे विवर्तनं परिदृश्यते कालचक्रस्य तत्र केचिदूर्द्ध्वं केचिच्चाधो विलोक्यन्ते। का बाधा विधिशेषाणाम् ? तद् य इह रमणीयचरणा रम्यां योनिमापद्येरन्, ये ह वै तद् आत्मानम् अभिजानन्ति पूर्वजन्मनां सुकृतिवशात् ते हि पराभवकारणम् आपादयन्ति तदितरेषाम्।

एषा हि नियतिः, कालप्रवाहो वा विश्वनियन्तुः। अहो ! धिग् नो

दरिद्रतां यत् सर्वरत्नाकरस्य हिरण्यगर्भस्य पटच्छायाम् अधितिष्ठन्तोऽपि वयम् न विद्मस्तत्कारणं ततोऽस्माकं स्वपदच्यवनं परिलक्ष्यते ।

भोः, भोः, ब्राह्मणमानिन् ! सम्भूय समुत्तिष्ठ । स्वात्मानं प्रबोधय । एतां ब्राह्मीं विद्धि । एनाम् एव सततम् उपास्स्व ।

इयं हि नो ब्रह्मगुहां प्रविश्य सञ्चितमलं च विधूय पुनरग्निस्फुलिङ्ग इव निर्गच्छति सह मनसा वाक्सरणीं समारुह्य ।

यो हि एनां वेत्ति अग्निर्वै स भवति । अग्निर्यथा दारु प्रविश्य तन्मयस्तथा हि स एषु लोकेषु । अविदित्वा वै एनां स याति अधोऽधोलोकान् ।

स वाव ब्रह्मविदां वरिष्ठः यो ब्राह्मीं वाचं किल लभते । एतस्यां तु वाचि खलु सर्वा वै विद्याः प्रहिताः स्युः पूर्वसूरिभिः । एनां तु लब्ध्वा नहि कश्चित् शोचति किं नु मयाऽसाधु कृतम् ? किं वा न साधु ?

एषा हि विधृतिर्लोकानां या तु ब्रह्मविद्भिरभिष्टूयते । इति शं प्रार्थये भवतु नः ॥ इति ।

एधि भवन् ब्राह्मीं वाचं शृणु । को वै जानाति तत्कारणं येन हि इदं विश्वं विततम् अग्निरिव दाहेन ।

अथ यदि तत्र विविदिषा जायते, वाचः खलु संयच्छ, स्वात्मानं सन्धत्स्व कोऽयम् अस्मि इति । तथा हि वाक्यं भवति । अहं खलु सत्यं वदेयम्, मिथ्या खलु न वदेयम् । विषयस्तु विषवद् वर्ज्यो यावद् विद्या न जायते तावत् स एव निपातयेद् विद्यार्थिनं महाव्रताद् ।

यो यस्य वै तद् आत्मानम् अभिजानाति स किल ब्रह्मस्वरूपतां विन्दते ।

लोका वै तम् अनुधावन्ति कोऽसौ ? कोऽसौ ? कस्य कुले ह जातस्तत्रभवान् । एधि भगवन् मा गाः, अस्मान् त्रायस्व त्रायस्व इति ब्रुवाणाः । ये ह वै न जानन्ति ते शश्वत् शोशुच्यन्ते हा हताः हा हताः स्मः । आहुश्च किं स्विद् वयं कर्त्तारः, किं स्वित् श्रोतारः

इति। अथ यस्य हि जन्मान्तरीयं तत्कृतपुण्यम् फलाभिमुखं भवति स इमां ब्राह्मीम् अभिजिज्ञासितुं तद्वेत्तारं याचते। यथा ज्वलच्छरीरः सहसा जलाशयमन्तरा प्रविविक्षुः सर्वं महामूल्यं रत्नभूषणं परित्यज्य जलम् एवानुसन्धत्ते केवलम् एवं हि स, तद्गुरुं श्रुतिसम्पन्नम् अभिजिज्ञासते। स्मरति च इयं हि ब्राह्मी यत्र निहिता ह वै आत्मविद्या विदुषां प्रतिपत्तये। मनीषिभिर्हितः पन्था नान्यः कश्चन विद्यते।

य एष उ तद् आत्मानं साधु कर्मणि योजयति सुकृतं तस्य फलं भुङ्क्ते। अथ दुष्कृतं वा स एव असाधुकर्मणा। एवं यदि स ब्राह्मीशुश्रूषया गुरुकुले सतीर्थैः सह द्वादशसंवत्सरान् अभिनिर्वर्तते, तर्हि आप्तकामः स ब्रूते—सोऽहमस्मि, सोऽहमस्मि इति। अपि च अहम् वै अग्निरस्मि अस्य लोकस्य सन्दीपयिता, कृतं ह वै मया सर्वं यत्तु कर्त्तव्यम्, ज्ञातं वै मयाऽस्ति यत्तु ज्ञातव्यम्, प्राप्तं हि मया यल्लोकेषु प्राप्तव्यमस्ति। इति शं भवतु नो विद्यार्थिनाम्।

एधि भवन्मा त्यक्षीः पन्थानम् येनास्माकं पितरो ह याताः स हि पन्थाः श्रेयान्। न जातु पितृगौरवमपास्यति कश्चन बुद्धिमान्। भोः सौम्य, महतः पुत्रो महीयान् भवान् अपि विद्यया स्वपदवीमालभेत। न जातु गन्तुम् अर्हति भवान् अनार्यजुष्टमार्गेण। भोः, संशृणुध्वम् भूदेवाः। यदि वयम् हिताहितकर्मसु विचारदक्षा न भवेम केन खलु वयम् अहितम् अत्ययाम ?

# सुरभारतीदशाविमर्शः

[ निबन्धकः—श्रीवटुकनाथभट्टाचार्यः एम् ए. वि एल. ]

जानन्त्येव भवन्तोऽधुना वङ्गेषु परिशोच्यां संस्कृतविद्याया दशाम्। प्रमाणञ्चेत्तत्रापेक्ष्येत, वामनस्य प्रांशुलभ्यफललिप्सोरुद्बाहुत्वमिव, मादृशस्यैष प्रयास एव तत् सुष्ठु प्रकटयेत्। भारतीयजनानां चेद्विद्यते किमपि वस्तु गौरवास्पदं, चतुःषष्टिकलाकलापालङ्कृतं चतुर्दशविद्योपबृंहितं संस्कृतवाङ्मयमेव तदिति निःशङ्कं ख्यापयितुं शक्यते। परन्तु कालप्रभावात्, ख्यात्या गुणैर्विभवैश्चाढ्यानां तथानादरात्, भीतभीतेव गृहकोणमात्रशरणेव, ह्रीवशादवगुण्ठितसर्वावयवा कुलयोषिदिव सैषाधुना संस्कृतभारती कथं कथमपि प्राणान् धारयति। वेदेषूद्भवो यस्याः, वाल्मीकि-कृष्णद्वैपायनकृतपुराणेषु क्रीडामयं यस्याः शैशवम्, भास-कालिदास-भवभूति-श्रीहर्ष-माघकवीनां महाकाव्यरूपकनिबन्धेषु सावलीलं यस्या नृत्यं हरति प्रसभं चेतांसि सहृदयानाम्, राजर्षिजनकादिसभासु विचारयन्त्यद्वैततत्वम्, धर्माधिकरणेषु निर्णयन्ती व्यवहारपदानि, नैमिषाद्यरण्येषु वसिष्ठाद्याश्रमेषु च ध्यायन्ती परमं तत् पदम्, देवायतनेषु स्तुवन्ती हरिहरहेरम्बादिदेवगणम्, या पुरा विरेजे गौरवमयी—विलोकयतस्तस्या अवस्थामिदानीन्तनीं न दूयते कस्य वा चेतः सचेतसः। सत्यामपि निखिलेऽधुना भारतवर्षे संस्कृतभारत्या एवमवस्थायाम्—अन्तिमकोटिमधिरूढा वराक्या दशाऽस्मद्देशेषु, स्पष्टमेवैतत् परिदृश्यते।

> अङ्ग-वङ्ग-कलिङ्गेषु सौराष्ट्र-मगधेषु च।
> तीर्थयात्रां विना गच्छन् प्रायश्चित्तेन शुध्यति॥

इति यत् स्मर्यते, बहोः कालादार्यनिवासविस्तारात् तदस्मद्देशेष्वासीदलब्धावसरमेव। परन्तु कालेऽस्मिन् प्रवर्तमाने पुनरपि सर्वथा तदक्षरशः

प्रयोगमर्हतीति क्लिश्यन्त्येव मानसानि संस्कृतविद्यानुरागिणाम् आर्यगौरवानुध्यानपराणाम्। चिरादेवाक्षिप्यते स्म संस्कृतभाषया नालापक्षमा विद्वांसोऽपि वङ्गीयाः। प्रचलति च परिहासवचः—"अस्माकूनां नैयायिकेषामर्थनि तात्पर्यं शब्दनि कश्चिन्ता"। अधुना पुनस्तदस्माकमपाटवम् उत्तरोत्तरं वर्द्धत एव। गतासुरेव सुरभारतीति भणन्ति केचन शाब्दिकाः। परन्तु वाग्मिप्रवराणां गोवर्द्धनमठाधीशानां श्रीमद्भारतीकृष्णतीर्थमहोदयानाम् अन्येषामपि शङ्कराचार्यपदभाजां पीठाधिष्ठितानां स्वामिपादानां तथा वङ्गेतरप्रदेशीयानां विदुषां निपीयते कर्णरसायनं यदा वचोवैभवं तदाऽयं मृतापवादो जनन्या वितथ एवेत्यनुभूयते। अद्यापि जम्बूद्वीपनिवासिनां पञ्चत्रिंशत्कोटिमितानाम् अन्तः संख्यया, सम्पदा, विद्याचारित्रादिगुणमहिम्ना च वर्तते प्राधान्यं वर्णाश्रमधर्माभिमानिनामेव। एतेषामाजन्ममरणान्तं संस्कारकर्मसु, दैवपैत्र्यानुष्ठानेषु, दीक्षा-प्रायश्चित्तादिषु च प्रतिपाल्यन्ते शास्त्रोपदिष्टा इतिकर्तव्यताः, मन्त्राश्चोच्चार्यन्ते श्रुतितन्त्रपुराणाहृता देवभाषामयाः। ये पुनस्तावद् भावाः प्रतिनियतं जनमानसेषु स्फुरन्तो दुःखेषु तान् सान्त्वयन्ति, सुखेषु संसृतेरनित्यतां स्मारयन्ति, परितापं शमयन्ति, शमनभयं वारयन्ति—रामायण-महाभारत-भागवतादिपुराणेभ्यो गीतोपनिषद्भ्यः, संस्कृतकाव्यनाटकादिग्रन्थेभ्यो महापुरुषरचितस्तवेभ्यः, श्रीमच्छङ्कराचार्य-भर्तृहरिप्रभृतिप्रणीतवैराग्यश्लोकनिवहेभ्य एव समुद्भूतास्ते संस्मर्यन्ते। एतद्देशीयजनगणमनोबद्धमूलस्य धृति-क्षमादिदशलक्षणस्य धर्मस्य, प्रेमभक्तिप्रपत्तिरूपोदात्तवृत्तिनिचयस्य तथास्तिक्यस्य बीजानि संस्कृतवाङ्मये निहितान्येवेति न केनापि विसंवदितुं शक्यते।

न वयमधुना सम्यगुपलभामहे कीदृश आसीत् संस्कृतविद्याया विभवः समृद्धिश्च व्यतीतेऽनतिदूरेऽपि काले। कीरैरिवास्माभिरुच्चार्यते प्रायशोऽशेषसम्पत् खलु सुरभारतीति। परन्तु विहाय कतिचन संस्तुतान् विषयान्, न प्रसरति दृष्टिरस्माकं विषयान्तरेषु, न वा लगतेऽस्माकं मानसं तेषु। न सम्यगस्माभिः पार्यते धारयितुं यत् सत्यमेव कृत्स्नो हि लोको

बुद्धिमतां धियो विषयः। श्रूयते तावदासन् पण्डितप्रकाण्डाः अचिर-प्रस्थिते समये ये खलु न केवलं व्याकरण-साहित्य-स्मृति-मीमांसा-न्याय-दर्शनेषु परन्तु सर्वेष्वेव विषयेषु लौकिकालौकिकप्रयोजनसाधनेषु प्रकटयामासुः परमं नैपुण्यम्। अत्रोदाहरणमधिगतं पितृचरणेभ्यः किञ्चनोपाहरामि। आसीद्वाराणस्यामविच्छिन्नविद्वत्सम्प्रदायसमुद्भासितायां सकलविद्याविलासस्थल्यां साक्षात् परापरतत्त्वाकरहरपुर्यां कश्चिद्विपश्चिद्धूरीणोऽहोबलनामा। अथैकस्मिन् अहनि स ददर्श पथि समासीनं पादुकारचनानिरतं कञ्चन चर्मकारं बहुनायासेनापि चर्मशकलद्वयं योजयितुम् अशक्नुवन्तम्। लक्ष्यीकृत्य वितथमस्यासकृत् प्रयत्नं समुपसृत्यैनम् ऊचे कुशाग्रधियाऽहोबलेन—एवं प्रकारेण प्रयोज्या सूची, ददूभ्यां धारणीयञ्च चर्मशकलयुगलम्। यथोपदेशम् आरब्धं सीवनमनेन चर्मकारेण लब्धञ्च श्रमसाफल्यमनायासेनैव। अथापरेद्युः उपागमदयं काशीनरेश-प्रासादं मध्याह्नसमये। कृष्णकायः शीर्णतनुरपि विपश्चिदयं परं सम्मानभागासीद् राजकुले। उपस्थितमात्रो राजसकाशं त्वरितं नेतव्यः—प्रागेवैवं प्रददेऽनुज्ञा काशीनरेशेन गुणपक्षपातिना। तामनुसृत्य भृत्या एनम् अन्तःपुरे भोजनव्यापृतस्य राज्ञः सकाशं निन्युः, आसनञ्च परिग्राहयामासुः। तत्रोपविष्टोऽहोबलशर्मा निपुणं लक्षयामास केन क्रमेण नरेन्द्रेण उपयोगोऽकारि अन्न-व्यञ्जन-पिष्टक-लड्डुक-पायसादीनां चर्व्यचोष्यलेह्यपेयानाम्। परिसमाप्ते चाह भूपतेर्भोजनव्यापारे "नायं समीचीनो भवद्भिरनुसृतः क्रमः—न वा पाकशास्त्रानुमतः। "कथं वा भवितुमर्हति" इति सकौतुकं पप्रच्छ नरपतिः। अहोबलेन प्रत्युक्तम्—यदि तावदनुमन्येत महाराजेन स्वयमेवागत्यैकस्मिन्नहनि निष्पाद्य पाकप्रक्रियां निर्देक्ष्यामि कथं वा विभिन्नपदानां युज्यते ग्रहणम्। ओमित्याह स्मितवदनो राजा। अथावधारिते वासरेऽहोबलेन यथोक्तं चक्रे। तन्निर्देशानुसारतः सम्पाद्याहारव्यापारं लब्ध्वा च परमं परितोषभरम् अगमत् परां कोटिं विस्मयस्य काशीनरेशः, विभवहीनस्य शास्त्रव्यसनिनो विद्वद्वरस्य शाकान्नभोजिनो बहुध

प्रशशंस च राजोपयोगिनानापदसंयुतपाकक्रियानैपुण्यम्। साम्प्रतमपि प्रतीच्यरीत्याऽधिगतविद्या जिज्ञासवो जना अत्रत्या अनत्रत्याश्च सङ्गीत-स्थापत्य-चित्र-किमिति-विद्या-सूल्यायुर्वेदप्रभृतीनधिकृत्यानेकान विषयान्, ईहन्ते भारतीयप्रज्ञाफलान्याहर्तुम्—भवन्ति कृतकृत्याश्चाविष्कृत्य बहूनि तत्त्वान्यनर्घ्याणि। सार्द्धशताब्द्याः पूर्वम् आधुनिकविचित्रयन्त्रादीनाम् आविष्कारात् प्राक् सर्वेष्वेव पृथ्व्यामवस्थितेषु देशेषु प्राच्येषु प्रतीच्येषु च व्यवर्तत समैवावस्था। नासन् वाष्पीययानानि, नोत्पेतुर्नभसि विमानानि, न तडिच्छक्त्या सन्देशप्रेषणं स्थानात् स्थानान्तरगमनं वा सम्बभूव। राष्ट्रेषु चासीद् राज्ञामनियन्त्रिता प्रभुता सर्वतोमुखा। तदानीं शिल्प-कलाज्ञानविज्ञानदर्शनधर्मादिषु व्यराजत सर्वोपरि भारतवर्षमेव। प्रदीपः सर्वविद्यानां भेत्ता च सर्वतमसां संस्कृतभाषानिबद्धः शास्त्रसमूह एवासीत्। आनर्ह च विश्वकोपपदवीं यथार्थतो वाङ्मयम् एतदेव। सर्वथा प्रमाणीक्रियते स्म च मनुवचनम्—एतद्देशप्रसूतस्य सकाशादग्र-जन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ इति।

येयं संस्कृतविद्याया उपवर्णिताऽवस्था मया, सा कथमापतिता, प्रति-कार्या वा सा नवा—तदधुना सुधीभिरवधेयम्। उच्यते हि—राजा कालस्य कारणम्। वर्तेत चेद्राजपुरुषाणामाग्रहो देवभाषाप्रोत्साहने—तदैवमवस्था नैवापतिष्यदिति स्फुटम्। परन्तु अस्माकमनुपचीयमान-मौदास्यम् अघटयदेनां दशामित्यपि स्वीकार्यम्। न विद्यते संस्कृतविद्यायां पाश्चात्त्यानां समादरलेश इति न। वेदादिनानाग्रन्थमुद्रापणे, तन्मर्म-प्रकाशने च को वा न जानाति प्रतीच्यानां प्रयासप्राचुर्यम् अर्थव्यये चाकार्पण्यम्। त एव प्रवर्तमाने काले वर्त्मकर्षकाः, वयं पुनरधन्या गतानु-गतिकाः। परन्तु प्राचीननिबन्धेभ्यो नानानर्घ्यरत्नाहरणे यादृगेतेषाम् अभिनिवेशो न तावद् अधुना लोकेषु संस्कृतशिक्षायाः प्रसारे विस्तारे वा। अथवा न तत् सम्भवति, न च सङ्गच्छते मानवप्रकृत्या। अपि च स्वजातीयैः कर्तव्ये कर्मणि विजातीयानां साहाय्यकं लाघवमेव व्यनक्ति,

शिथिलयति च पुरुषकारम्। परन्तु परिहाय राष्ट्रप्रदत्तं साहायक-मवगणय्य वा तल्लोकशिक्षा प्रसरितुं क्षमते—नैतत् कुत्रापि कदापि वा दृष्टचरम्। संस्कृतेतरविद्याविस्तारे, तत्प्रोत्साहने च भारतीयानां राजपुरुषाणां विशेषतो वङ्गदेशीयानां यादृगानुकूल्यं न तादृक् संस्कृतविद्या-परोक्षणे इति—वार्तावहपत्रपाठकानां सुविदितमेव। प्रवर्तिताऽस्मद्देशेषु नवीना शासनव्यवस्था—समर्पिता प्रकृतीनां करेषु राष्ट्रपरिचालनो-पयोगिनी प्रभुता सर्वतोमुखा, उपाहृतं राजपुरुषैः श्वेतद्वीपनिवासिभि-र्भारतीयेभ्यः स्वाराज्यमेवम् उद्घोष्यते दिशि दिशि वार्ता तावदुल्लासकरी। प्रदेशान्तरेषु प्रजातन्त्रोपनाम परिवर्तनमिदं राष्ट्राधिकृतं कथमनुभूयते जनैः, प्रजानां दुःखाय सुखाय वा तत् परिणंस्यते—नेति ज्ञायते। परन्तु गौडमण्डलेऽस्मिन् स्वराज्यप्रवर्तनात् संस्कृतविद्यायाः परिपोषो भवितेति आशासितुं न शक्यते अनिमीलितनेत्रेण, अस्तब्धबुद्धिना वा केनापि। माध्यन्दिनदिनकरमरीचिजालमिव प्रोज्ज्वलं पुरतो भाति कारणम्। वङ्गीयव्यवस्थापकपरिषदि न हिन्दूनां परन्तु तदितरेषामेव बाहुल्यं सद-स्यानाम् प्राधान्यञ्च। ग्रामेऽस्मिन् मुषलोदूखलसंघाते संवृत्ते, न सम्भवति ग्रामान्तरीयाणां शिरोवेदनम्। संस्कृतशिक्षाप्रसारो वर्णाश्रमिणामेव कल्याणाय कल्पितुमर्हति। तेषामेव युज्यते संरक्षणे विस्तारे चैतस्याः स्वाभाविकोऽभिनिवेशः न तु भिन्नधर्मावलम्बिनां भाषान्तरेण निर्वाहित-संलापादिकर्मकलापानां विजातीयानाम्। अथ यदुच्यते गण्डस्योपरि विस्फोटकस्तस्यैव दृष्टान्ततां भजते वङ्गभूमिः। मण्डलान्तरापेक्षया विरल-तर एवासीत् प्रदेशेऽस्मिन् संस्कृतविद्यायाः प्रसारः। अधुना पुनरुपचीय-मानो राजपुरुषाणामनुग्रहाभाव एव सम्भाव्यते। किं करोतु, विपदनुवर्ति-विपज्जालैः परिगता मन्दभाग्या सेदानीम्—एतदेव तद्रसिकानां कथयति मर्माणि। को नामोपायोऽवलम्बनीयस्तस्याः सञ्जीवनाय, संरक्षणाय चेति भवद्भिरन्यैश्च निपुणमवधार्यतां विद्वद्भिः। (क्रमशः)

---

# धर्ममीमांसा

(पूर्वानुवृत्ता)

[निबन्धकः—श्रीगोपालकृष्णवेदान्ताचार्यः, एम. ए]

यानानां ये च वोढारस्तेपाञ्च परिचारकाः ।

शूद्रवृत्त्या तु जीवन्ति न क्षात्रं धर्ममाचरेत् ॥ इति ।

'द्विजत्वं प्रतिषिध्यत' इति सूतानां पुराणेष्वधिकाराद् उपनयनाभावेऽपि द्विज इत्यभिधानं भवति, रथकाराणान्तु मातुश्चौर्यदोषात् पुराणेऽप्यधिकाराभावः द्विज इत्यभिधानप्रतिषेधश्च इत्यर्थो विज्ञापितः। श्रवणे तु दोषो नास्त्येव। अयन्तु रथकारो याज्ञवल्क्योक्तान्माहिष्यात् करण्यामुत्पादिताद्रथकाराद् भिन्न एव। उपनयनसंस्कारेण तस्य द्विजत्वप्रतिपादनात्, अस्य तु द्विजत्वप्रतिषेधादनयोरुत्पत्तिप्रकारभेदाच्च। यानानां वोढारस्त्वत्र सूता एवाभिधीयन्ते सूतानामश्वसारथ्यमित्यनेन मनुना तेषां वृत्तिकथनात्। तेन सूतानां परिचर्यैवैषां वृत्तिरिति। मागधजात्युत्पत्ति वृत्तिप्रकारञ्चाहोशना यथा—

ब्राह्मण्यां वैश्यसंसर्गाज्जातो मागध उच्यते।

वन्दित्वं ब्राह्मणानाञ्च क्षत्रियाणां विशेषतः ।

प्रशंसावृत्तिको जीवेद् वैश्यप्रेषकरस्तथा ॥

चाण्डालजातेर्वृत्तिमाह स एव यथा—

ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ।

सीसमाभरणं तेषां कार्ष्णायसमथापि वा ॥

वध्रीं कण्ठे समाबध्य झल्लरीं वापि कक्षतः ।

मलापकर्षणं ग्रामे पूर्वाह्णे परिशुद्धिकम् ॥

नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते ।

पिण्डीभूता भवन्त्यत्र नो चेद् वध्या विशेषतः ॥ इति ।

वैश्यात् क्षत्रियायामुत्पादितानामायोगवादीनां वृत्तिमाहोशना यथा—

नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ।
तन्तुवाया भवन्त्येते वसुकांस्योपजीविनः ।
नृपायां वैश्यतश्चौर्यात् पुलिन्दश्चेति कीर्तितः ।
पशुवृत्तिर्भवेत् तस्य हन्याद् वा दुष्टसत्त्वकान् ॥

इति । पुक्कसादिजातेर्वृत्तिमाह स एव यथा—

नृपायां शूद्रसंसर्गाज्जातः पुक्कस उच्यते ।
सुरावृत्तिं समारुह्य मधुविक्रयकर्मणा ।
कृतकानां सुराणाञ्च विक्रेता पाचको भवेत् ॥ इति ।

कृतकानां गुडशर्करादीनामित्यर्थः । एवञ्च नृपायां शूद्रतश्चौर्याज्जातो रजक उच्यते इति । वैदेहकादीनां वृत्तिमाहोशना यथा—

वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः ।
अजानां पालनं कुर्यान्महिषीणां गवामपि ॥
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् ।
वैश्यायां शूद्रतश्चौर्याज्जातश्चक्रीच उच्यते ॥
तैलपिष्टकजीवी तु लवणं भावयेत् पुनरिति ।

तैलपिष्टकजीवीति तिलसर्षपादिपेषणेन जीवन्तीत्यर्थः । भावयेदुत्पादयेत् । वृत्तिसाम्येऽपि वैदेहकेभ्यो गोपा भिन्ना एव उत्पत्तिप्रकारवैषम्यात् । तथाच गोपानामुत्पत्तिप्रकारमाह पराशरो यथा—

क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः ।
स गोपाल इति ज्ञेयो भोज्यो विप्रैर्न संशयः ॥ इति ।

उग्र-गोपालजात्योरेकत्वेऽपि वृत्तिभेदात् संज्ञाभेद इति मन्तव्यम् । वर्णासु सङ्करजातिभ्य उत्पन्नानामपि वृत्तिमाहोशना यथा—

सूताद् विप्रप्रसूतायां सुतो वेणुक उच्यते ।
नृपायामेव तस्यैव जातो यश्चर्मकारकः ॥
चाण्डालाद् वैश्यकन्यायां जातः श्वपच उच्यते ।
श्वमांसभक्षणं तेषां श्वान एव तु तद्धनम् ॥

आयोगवस्य विप्रायां जातास्ताम्रोपजीविनः ।
तस्यैव नृपकन्यायां जातः सूनिक उच्यते ॥
सूनिकस्य नृपायान्तु जात उद्बन्धकः स्मृतः ।
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्युत । इत्यादि ।

मनुः सामान्येनैषां वृत्तिमाह यथा—

सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम् ।
वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ॥
मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ।
मेदान्ध्रचुञ्चुमद्गूनाम् आरण्यपशुहिंसनम् ॥
क्षत्त्रुग्रपुक्कसानान्तु बिलौकोवधबन्धनम् ।
धिग्वनानां चर्मकार्यं वेणानां भाण्डवादनम् ॥
चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ।
वसेयुरेते विज्ञाना वर्तयन्तः स्वकर्मभिः ॥
चण्डालश्वपचानान्तु वहिर्ग्रामात् प्रतिश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्द्धभम् ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ इत्यादि ।

त्वष्टिः काष्ठतक्षणम् । चुञ्चुर्मद्गुश्च वैदेहकवन्दिस्त्रियोः ब्राह्मणेनोत्पादितौ बौधायनोक्तौ । वन्दिस्त्री च क्षत्रियेण शूद्रायामुत्पादिता बौधायनोक्ता ज्ञेया । बिलौकवधबन्धनमिति बिलनिवासिगोधादिवधबन्धनमित्यर्थः । विज्ञानाः विज्ञातिचिह्नं धारयन्त इत्यर्थः । भिन्नभाण्डेषु भग्नपात्रेषु अपपात्रेषु वा । परिव्रज्या भ्रमणशीलत्वम् । एकस्मिन् स्थाने बहुदिनानवस्थानमित्यर्थः । विस्तरस्तु उशनआदिस्मृतिषु द्रष्टव्यः । इति ॥

---

# *नाट्यविलासः

[ निबन्धकः—वि. ए.-व्याकरणतीर्थोपाधिक-श्रीदेवीप्रसादगुप्तः ]

त्रिलोकपालिकां वन्दे पुरारिहृदयप्रियाम् ।
राकाचन्द्रप्रभासारां त्रिपुरां देवतां गिराम् ॥१॥

अयि सकलकलासु प्रौढलीलाविलोला
विविधबुधकुलेन्द्राः ! काव्यलक्ष्मीप्रियाश्च ।
मधुररसविलासे साम्प्रतं रूपकाणां
सततसदयचित्ताः कर्णमत्रैव दत्त ॥२॥

ऋचः साम्नः सारं सरसमपि चाथर्वणं याजुषञ्च
समाकर्षं कर्षं नवविरचितः प्रीतये देवतानाम् ।
रसैः सान्द्रः सोऽयं भरतमुनिना पावनो नाट्यवेदो
हरन् नित्यं पूतं सहृदयमनो मङ्गलं नो विदध्यात् ॥३॥

वाणीं प्रणम्य त्रिपुराभिधानां सतां मुदे नाट्यविलासमेतम् ।
देवीप्रसादाद् विदुषां विधेयो देवीप्रसादो विदधाति गुप्तः ॥४॥

नाट्यं केऽपि यमीयमादिविषयात् संवादसूक्तात् परे
यज्ञाङ्गाच्च महाव्रतादिविधितः प्राहुः पुराऽजायत ।
यद्रामायणभारतादिषु तथा पातञ्जले दृश्यते
केचित् पुत्तलिकाप्रदर्शनमिदं सन्दर्शयन्त्युक्तिभिः ॥५॥

इदं तदिह रूपकं दशभिरेव रूपैर्युतं
चिराद्धरति मानसं रसविदां सतां सन्ततम् ।

---

* कलिकाताविश्वविद्यालयसंस्कृतसमितेः द्वितीयाधिवेशने पठितोऽयं प्रबन्धः

अथ प्रथितकीर्तयः कविनृपास्तु पृथ्वीगताः
क्रमेण समयादिभिः प्रकलिताः सुसंक्षेपतः ॥६॥

भरतः

सुरसरस्वति ! कः कुसुमाञ्जलिः प्रथमरूपकपुष्पचयैः कृतः ।
त्रिपुरदाहडिमो न विराजते मुनिवरो भरतस्तु चकार यम् ॥७॥
ततस्तु ते ते कृतिसेवकाः कति प्रपूजयामासुरिदं पदाम्बुजम् ।
न तद्विजाने जननि ! प्रभुर्नवा चिरात् प्रभृत्यस्मृतनामकीर्तने ॥८॥

अश्वघोषः (A. D. 78)

अयमुदयति पूर्वं बुद्धभक्तोऽश्वघोषः
शकनरपतिवर्याच् श्रीकनिष्कस्य मित्रम् ।
कावरनिरतिहीनः शिक्षयन् बौद्धधर्मं
'क्षयमयति हि कार्यं कारणध्वंसमात्रम्[1]' ॥९॥
'तस्थौ नापि ययौ न' यः कविवरो नन्दो[2] यथा रीतिषु
नो वा दर्शितवांश्च 'बुद्धचरिते' प्रौढैः परां चातुरीम् ।
'सारीपुत्र'कथाङ्कित 'प्रकरणं' तद्वेलया खण्डितम्
नोपेक्ष्या प्रतिभान्विताऽस्य कविता 'वज्रस्य[3] सूची' यथा ॥१०॥

भासः (about A. D. 300)

ललितमधुरहासो भाति भासो भवत्या
धवलितधरणीकां धारयञ्छुभ्रकीर्तिम् ।
जयति जगति वह्निक्षेपणादप्यदग्धा
द्विगुणितशुभकान्तिर्नाटिका स्वप्न[4]पूर्वा ॥११॥

---

1. सौन्दरानन्द XVI, 25     2. सौन्दरानन्द III, 42

3. वज्रसूची । ( यथा वज्रसुची नापलपितुं शक्या तद्वदश्वघोषस्यापि रससान्द्रा कविता । )

4. भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ [ राजशेखरः ]

भानोः कराऽप्युदयनं चलितस्य कान्तां
　　पद्मावतीं सपदि न स्फुटयाञ्चकार[1] ।
यत् साम्प्रतं स खलु वासवहस्तदत्तै-
　　राच्छादितो घनघनैर्विरहार्तिभिर्वा ॥१२॥

त्रयोदशानां तव नाटकानां स्थितिर्विरुद्धा न हि साऽभविष्यत् ।
अपाहरिष्यद् यदि तं न विघ्नं पतिर्गणानां स्वयमेत्य भूमौ ॥१३॥

शूद्रकः ( B. C. 500 ? probably 3rd. Cent. A. D. )

तव तनयवरोऽयं शूद्रको रुद्ररूपो
　　विविधरसविचित्रं ताण्डवं लास्ययुक्तम् ।
कृतशकटिक[2]लीलो बालगोपालवद्वा
　　सकलशठचरित्रं स्पष्टमाविश्चकार ॥१४॥

चूताङ्कुरे राजति चारुदत्तः करः शरेऽयं मकरध्वजस्य ।
वाताः प्रवान्त्येव वसन्तसेना धूताः प्रवालैः सह कामिसार्थाः ॥१५॥

कालिदासः ( 380-455 A. D. )

कविकुलपतिरेष प्राभवत् कालिदास-
　　स्तरुणसुरगिरोऽयं मान्मथो वा विलासः ।
शकनृपतिशताब्दे गुप्त[1]गुप्ते चतुर्थे
　　समदमदनलीलां पप्रथे कान्तवृत्तः ॥१६॥

काव्यादर्शे स हि दिनपतेरन्वयो नाशहीनः[2]
स्कन्दः प्रीत्या कुसुमरचनैर्मन्दमन्दं प्रवृष्टः ।
लब्धा कान्ता ललितकविता ब्रह्म साक्षात्[3] कृतञ्च
कस्तत्तुल्यो विरहिसुहृदां सर्वगो मेघदूतः ॥१७॥

(क्रमशः)

---

1. स्वप्नवासवदत्तम् IV 4　　2. मृच्छकटिकम्
3. चन्द्रगुप्त II　　4. रघुवंशः ।
1. मेघदूतः I 47 तत्र स्कन्दं etc. अत्र चन्द्रगुप्तपुत्रः स्कन्दगुप्तो ध्वन्यते ।

# वृद्धव्यवहारः

सुचिरं प्रोष्य प्रत्यागतस्तरुणः कश्चन ब्राह्मणकुमारः कुलवृद्धम् अभिवादयितुं प्राप्तः। अविरतज्वरेण कृशतनोरस्य द्विजसूनोर्वदनमण्डल-मलङ्कुर्वद् वर्तमानं विशालं गुम्फगुच्छयुगलं वृद्धस्य दृष्टिं नात्यक्रामत्। प्राचीनभावानुबद्धहृदयो वृद्धस्तमागतं कृतप्रणाममाशिषा संवर्ध्य प्रावोचत्—आयुष्मन्, अपि कुशलं ते, दिष्ट्या बहोः कालात् परं दृष्टः श्रीमान् आशिष-माशासानैरस्माभिः, कच्चित् क्षेमेणातिवर्तितस्ते प्रवासकालः ?

युवा सविनयमवादीत्—आर्य, कुशलं मे प्रायः सर्वत्र युष्मत्प्रसादात्, परं कियन्ति वर्षाणि यावदविरतप्रवर्तिना ज्वरेणातितप्तस्य मे सम्पद्यमानमपि सुखान्तरं न क्षमते मनसस्तोषमुत्पादयितुम्।

वृद्धः—( अङ्गुल्या गुम्फं निर्दिश्य ) अपि नाम कोऽप्युपशमः सम-सादितः सन्तापस्य श्रीमता वदनमण्डलमण्डनायमानेनामुना वस्तु-विशेषेण ?*

---

* पञ्चाशद्वर्षेभ्यः पूर्वमपि विगीत आसीत् श्मश्रु विनाकृतौ गुम्फौ भारतीयब्राह्मण-समाजेषु, विशेषतो ग्रामेषु। परतश्च नगरप्रवासादिना नागरीयोऽपि स नियमो ग्रामीणविदामी-मपि पदं करोति। अत एव नगरप्रत्यागतो युवा वर्षीयसा ग्रामवृद्धेनैवं कृतस्तिरस्कारः।

# ग्रन्थनिकषः

**कारकचक्रम्** श्रीमद्भवानन्दसिद्धान्तवागीशप्रणीतम्, श्रीमन्माधवतर्कालङ्कारविरचित"माधवी"ति प्रसिद्धटीकया सहितम्। कलिकातास्थ-राजकीयसंस्कृतमहाविद्यालयन्यायशास्त्राध्यापक-श्रीयुततारानाथन्यायतर्कतीर्थ-कृतटीप्पनीवङ्गानुवादाभ्यां समुपेतम्। बाग्‌वाजार-निवेदितालेनस्थित २०।१ संख्यकच्छात्रपुस्तकालयात् प्रकाशितम्,। मूल्यं सपादरूप्यकम्।

नैयायिकमूर्द्धन्या भवानन्दसिद्धान्तवागीशभट्टाचार्याः सुविख्यातन्याय-निबन्धकर्तॄणां जगदीशतर्कालङ्कारपादानामध्यापका आसन्। जगदीश-तर्कालङ्काराः खलु गदाधरभट्टाचार्यचरणानामभ्युदयारम्भसमये प्रवीणे वयसि वर्तमाना नवद्वीपं भूषयामासुरिति नैयायिकसम्प्रदायपारम्पर्यविदां प्राचीनन्यायाध्यापकप्रवराणां चरणसरोजसेवावसरे तेषां वदनकमलेभ्यः समाकर्णितम्। एवं च शब्दशक्तिप्रकाशिकाव्युत्पत्तिवादादिग्रन्थेभ्यः पुरातनोऽयं ग्रन्थः सरलसरलया भाषया निबद्धः शाब्दन्याये व्युत्पित्सूनां परमोपकारक इति सर्वेषां पण्डितजनानां सुविदितोऽयं विषयः। श्रीमन्माधवतर्कालङ्कारपादाश्च यद्यपि गदाधरभट्टाचार्यप्रभृतिभ्योऽर्वाचीना-स्तथापि नातिनवीनाः सुव्युत्पन्नाश्च नवद्वीपमधिकृत्य विराजमाना आसन्। अस्ति च तेषां शक्तिवादेऽपि "माधवी"ति प्रसिद्धा भावगम्भीरा नाति-विपुलायतना टीका, या वङ्गविषयाद्बहिरपि विद्वद्वर्यैराद्रियमाणा दृश्यते। तैरेव प्रणीतेयं "माधवी" "कारकचक्रा"श्रिता मूलग्रन्थाभिप्रायोद्घाटने मूलग्रन्थयोजनायामपेक्षितार्थप्रतिपादने च सरलया भङ्ग्या व्याप्रियमाणा सहृदयानां प्रमोदभरं सम्पादयन्ती व्युत्पित्सुजनानामतीव हृदयङ्गमा वरीवर्ति। श्रीयुतपण्डितवर्य-तारानाथन्यायतर्कतीर्थमहोदयाः सम्प्रदायशुद्धां न्यायविद्यामुपासीनाष्टिप्पनीयोजनेन विषमस्थलेषु परिष्कुर्वाणा मूलटीकयो-रभिप्रायविशेषान् न केवलं छात्राणामुपकाराय श्राम्यन्ति स्म; भविष्यति

तदीयव्यापारेणान्येषामपि केषांचन परमसाहाय्यकमिति सम्भाव्यते। मूलं टीका चेति द्वयं देवनागरलिप्या मुद्रितम्। सर्वथा ग्रन्थोऽयं सर्वेषां सज्जनानामादरणीयतामर्हतीति सप्रमोदमुद्घोषयामः।

परीक्षकः—श्रीहाराणचन्द्रशास्त्री

**स्तवसमुद्रः**—सम्पादकः—वि० ए, कविभूषण-काव्यरत्नोद्भट-सागरोपनामकः श्रीपूर्णचन्द्र दे। प्राप्तिस्थानम्—गुरुदासचट्टोपाध्यायः एण्ड सन्स २०३।१।१ कर्णओयालिश् ष्ट्रीट, कलिकाता। मूल्यम्—रूप्यकद्वयम्।

सुविदितमिदं विद्यावतां सर्वेषामेव यद् बाहुल्येन संस्कृतभाषामयः स्तवनिवहो वरीवर्ति साधकसम्प्रदायानां स्वस्वकीयाराध्यदेवतासु भक्तेः परां काष्ठां प्रकाशयन् भारतवर्षेषु। यत्साहाय्येन साधकधुरन्धरा निखिल-सुखैकनिदानं निरायासमेव प्रत्यक्षीकृतवन्तः स्वाभीष्टदेवविशेषस्य चरण-कमलम्। किमिहास्ति जगति दुर्लभं तेन कल्पवृक्षमहिम्ना स्तोत्रनिवहेनेति प्रायेणाद्यत्वेऽपि हिन्दुधर्ममात्रावस्थितस्य जनगणस्य गेहेषु संदृश्यते स्तोत्र-रत्नानामधिकः समादरः।

स्वाभीष्टसाधकेष्वपि दुरूहेष्वेषु संस्कृतभाषामयेषु स्तवादिषु असंस्कृतज्ञ-तया कदाचिज्जना वीतश्रद्धा भवेयुरिति अपेक्षितंवासीदेषां बङ्गभाषामयी काचन मधुरमधुरा प्रतिकृतिः। निःशेषिता सेयमपेक्षा साहित्यरसिकैस्तत्र-भवद्भिः स्तवसमुद्रं नाम ग्रन्थरत्नं प्रवाहरूपेण सम्पादयद्भिः कविभूषण-महोदयैरिति समधिकं प्रमोदविशेषं प्रतीमः।

"स्तवसमुद्रे"ऽस्मिन् सम्पादकेन बङ्गानुवादविषये तथा किमपि नैपुण्य-माविष्कृतं यथा आपामरसाधारणानाम् उपकारः सम्पद्येत। छन्दो-व्याकरणपाठान्तरादिष्वपि सुमहानेव यत्नः प्रदर्शितस्तत्रभवता।

मन्ये यदि उत्तरोत्तरमित्थं प्रवाहरूपेणायं स्तवसमुद्रः प्रकाशितः स्यात्, तदा समुद्र इव रसधारया समग्रं जगत् प्लावयिष्यतीति शम्।

परीक्षकः—श्रीरामधन काव्यतीर्थः

---

# भजनम्

[ निबन्धकः—स्वर्गत-पण्डितप्रवर-कालिदास-विद्याविनोदः ]

कृष्णार्जुनं यमुपदेशमभाषथास्त्वं
तं धारयामि हृदये बत देहि शक्तिम्।
दुःखं यथा मरणयातनया न मे स्यात्
तत्-त्वं विधेहि करुणाकर हृन्निवास ॥१॥
नाम्नैव ते सकलपापजदुःखमोहा
नश्यन्ति शास्त्रवचनं न मृषा कदाचित्।
लोकद्वयस्थितिरहो हरिनामशक्त्या
तन्नाम विस्मृतिपथं न हि यातु जातु ॥२॥
त्वं दीननाथ करुणामय कृष्ण विष्णो
व्याप्तोऽसि चित्तगगने ननु देहभाजाम्।
तत्त्वं वसन् हृदि कथं बत निर्दयोऽसि
नो चेद् ददासि मम वाञ्छितवृत्तिमद्य ॥३॥
वेदान्तशास्त्रपरिशीलनलब्धतत्त्वो
यो ब्रह्मभावमुररीकुरुते स्वदेहे।
हा-हन्त भागवतशास्त्रविलोकनेन
दासीकृतस्तव हरे स हि कालिदासः ॥४॥
ब्रह्माण्डमानवगणा ननु यस्य दासा
हा लेख्यपत्रविधिना व्रजराजपुत्र।

---

* मृत्योः प्राक् पञ्चदशदिनाभ्यन्तर एवेदं तत्रभवता लिखितमिति तन्निरूपितया दिनसंख्यया प्रतीयते ॥सं॥

कृष्ण स्वयं त्रिभुवनेश्वरतामुपेत्य
दासीकृतो वद कथं बत राधिकायाः ॥५॥
प्रेमाकरो य इह गौरहरिः कलौ स
प्रेमावतार इति सर्वजनैः स्तुतोऽभूत् ।
श्यामञ्च रूपमपहाय गृहीतगौरो
गौराङ्गनामभजनात् कलिमुक्तिदाता ॥६॥

---

## पूर्ववङ्गसारस्वतसमाजाधीना परीक्षा

सेयं परीक्षा आगामिषु सौरफाल्गुनस्योनत्रिंश-त्रिंशद्दिवसयोः सौरचैत्रस्य प्रथमदिने च तेषु तेषु परीक्षाकेन्द्रेषु परिगृहीता भविष्यति। एतदर्थमावेदनञ्च—आगामिसौरमाघस्योनत्रिंशदिवसमन्तरा "आर्माणीटोला, ढाका" इत्यनया सूचनया पूर्ववङ्गसारस्वतसमाजसम्पादकानां समीपे प्रेषणीयम्। तत्र शुल्कव्यवस्था चेत्थम्—प्रथमपरीक्षायां चतुष्पाठीस्थच्छात्राणाम् अष्टौ आणकाः। आङ्गलविद्यालयस्थानां रूप्यकम्। मध्यपरीक्षायामुपाधिपरीक्षायां च चतुष्पाठीस्थानां छात्राणां शुल्कमेव नास्ति। आङ्गलविद्यालयीयानां पुनर्मध्यपरीक्षायामेकं रूप्यकम्, उपाधिपरीक्षायां रूप्यकद्वयम्। आवेदनपत्रस्यादर्शं ( १७ नं आर. जि. कर राड् श्यामबाजार ) संस्कृत-साहित्य-परिषद्यपि लभ्येत।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| February, 1938. | १८५९-शकीये माघे<br>२०श-वर्षस्य १०म-संख्या | Vol. XX, No. 10 |
|---|---|---|


## परिषदो भूमिलाभः

प्रेयांसः पाठकमहोदयाः, उपदीकृतं परिषदे किञ्चन चिरायापेक्षितं भूमिखण्डम् आवेदनपरम्परोदीरितदानशौण्ड्यया श्रीमत्या नगररक्षा-समित्येति निवेदयतां कदम्बकोरकायन्ते नः शरीराणि, विकाशि-तामरसायन्ते मानसानि, दुर्दिनकुमुदायन्ते च नेत्रश्रियो हर्षेण । सम्भावयामः, सुप्रभात-मिवाद्य सुरभारत्याः, प्रसन्नतया लघिमानमिवाप्नुवन्ति मानसानि परिषत्-सदस्यानां भवताम्, वीतप्रायमिव मानसं सन्तापं तत्रभवतोः श्रीमद्-अमरेश्वरठाकुरवेदान्तशास्त्रिणः श्रीमद्-यतीन्द्रनाथवसुजस्य च सम्पादकयोः फलितञ्च मनोरथं सर्वेषां सुरसरस्वत्युन्नमनजातस्पृहाणां विदुषाम् ।

व्यतीते सौरमाघस्य सप्तदशदिवसे परिषत्सदस्यानामावेदनक्रमेण निर्धारितं कलिकातानगररक्षासमित्यधिकृतैः, यत् संस्कृत-साहित्य-परिषदो गृहनिर्माणार्थमेकं पञ्च'काठा'त्मकं भूमिखण्डं नवनवतिवत्सराणां कृते रौप्यकखण्डमितेन नाममात्रेण वार्षिक-करेण देयमिति । महत्या 'राजा-दीनेन्द्रनारायण-ष्ट्रीट्' इत्याख्यरथ्याया हृदयस्थानमिव साम्प्रतिक-कलिकातानगर्याः पूर्वोत्तरकोणतो वर्त्तमानं यामिनीभूषणाष्टाङ्गायुर्वेदमन्दिरस्य दक्षिणं भागमलङ्कुर्वत् तदिदं भूमिखण्डं स्पृहणीयतममेवेत्यत्र नास्ति नः

संशयलेशोऽपि। परिषदश्चिरस्वत्वास्पदीभूते सत्यपीतो बृहत्तरे भूम्यन्तरे अभिमतदेशवर्तितामात्रगुणगरिष्ठेनानेनैव भूमिखण्डेन परिषदं भूमिमतीं मन्यन्ते निपुणधियः।

एतदर्थञ्च के नाम धन्यवादानर्हन्तीति प्रतिपत्तिविमूढा एवानेके वर्त्तन्ते। किं तावद् वर्षिष्ठानामपि परिषत्कर्मणे यविष्ठवदुत्तिष्ठमानानां सभापति-पादानां श्रीमतां म-म-दुर्गाचरणसाङ्ख्यवेदान्ततीर्थानामदीनसत्त्वाः प्रतिपत्तयः ? आहोस्विच्चिराद् अजस्रं परिश्राम्यताम् अन्यतरसम्पादकानां श्रीमताम् अमरेश्वरठाकुरवेदान्तशास्त्रिमहोदयानां कुशलाः कार्यक्रमाः ? किं वायुष्मतां वयसा कनीयसामपि विद्यया चारित्र्येण चातिवृद्धानां स्वभावसुन्दराणां श्रीमदशोकनाथवेदान्ततीर्थानाम् अन्येषाञ्च श्रीमद्दीनबन्धुसाहित्यशास्त्रि-श्रीमद्रामकृष्णचक्रवर्त्ति एम्. ए. प्रमुखाणां कार्यनिर्वाहकसमितिसदस्याना-मुत्साहमहिमानः ? उताहो मन्त्रिपदमधिरूढैः श्रीमद्भिः सनत्कुमाररायचतुर्धुरीणैः परिचालितानां नगरपालसभाधिकृतानामशिथिलाः सदिच्छा-परम्परा इति। वयन्तु कारणकूटकृतान एव कार्योत्पादान अवधारयन्त आदावतिवृद्धायै ईश्वरेच्छायै, तदन्वर्वाचीनेभ्यः सर्वेभ्य एवैतेभ्यः सहस्रशो धन्यवादान वितरामः, ब्रूमश्च—नैतावता भूमिलाभमात्रेण कृतार्थम्मन्यैर्भवद्भि-रत्यन्तमुदासितव्यम्, अस्तीदानीमपि कृत्यशेषः, नहि भूम्यामेव परिषदासितुं क्षमते समपेक्षते च गृहम्, तत्रापि भवतामुत्साह एव निदानमिति।

मान्याः परिषत्सदस्यमहोदयाः, अन्ये च सुरभारतीप्रणयिनो धनिक-धुरीणाः, निःस्वैर्द्विजैः परिपालितेयं परिषद् दैवादासितवती काञ्चन गृहनिर्माणोपयोगिनीं भूमिम्, परं तत्र गृहनिर्माणमत्यन्तव्ययापेक्षं विना भवतां कृपाकटाक्षपातमात्मलाभाय नैव क्षमिष्यते, तदत्र सनिर्बन्धं भवन्तोऽनुनीयन्ते क्रियतामत्र गृहनिर्माणविधौ यथापेक्षितं यत्नः, येन चिराय परगेहोषिता भवतां जननीकल्पा सुरभारती स्वगृहवाससुखमनु-भवन्ती गुर्वीभिराशीर्भिर्भवतः समेधयेदिति शम्।

---

# प्रशान्तरत्नाकरम्

[ श्रीकालीपदतर्काचार्यप्रणीतम् ]

पुरुषः—सुन्दरि, एते गृहीताः ।

स्त्री—अथेदानीं मुच्यतामबलाया मे पन्थाः, यावद् निराबाधा स्वगेहं गत्वा पत्या सह मिलिता भवामि ।

पुरुषः—अयि निष्करुणे, कथमेतावन्मात्रकेणैव इमं जनं वञ्चयित्वा गन्तुमीहसे ? अहो काठिन्यं स्त्रीहृदयस्य !

स्त्री (स्वगतम्) अहह ! यदेवाशङ्कितं तदेव दुष्टेन प्रस्तुतम् । भवत्वेवं तावत् । (प्रकाशम्) भद्र, किमेवं वदसि, किं वा ममापरं सन्निहितं, यदतः परमपि कामयसे ?

पुरुषः—अयि अरसिके, कथं प्रबुद्धापि स्वप्नं नाटयसि, प्रसीद, एतत्त्वदीयं कुसुमसुकुमारं लावण्यं समीक्षमाणः सुतरां कामेन परवशः कृतोऽस्मि, तदस्य कृपया प्रतीकारं कर्तुमर्हसि ।

स्त्री—मूढ, निर्मर्याद, दुष्टस्वभाव, साम्प्रतमेतावन्तमवधिं समारूढोऽसि, न ते रसना छिद्यते ?

पुरुषः—भद्रे, सान्त्वेनानुनीयसे, प्रसीद । (किञ्चिदुपसर्पति)

स्त्री—धिक् अपध्वस्तोऽसि, मूढ, दूरमपसर । (अपरपादपान्तरालं गच्छति)

पुरुषः—प्रगल्भे, अद्यापि क्षेमं ते उपदिशामि । मदीयं चित्त-मविलम्बितमनुवर्तेथाः (उपसरति) ।

स्त्री—भद्र, भद्र, रक्ष विनयम्, रक्ष मर्यादाम्, मा मामनाथाम् अशरणां निर्जने समासाद्य परिभवितुमर्हसि । हा हा ! तथापि न शाम्यति ! हा हा दूषितास्मि, परिभूतास्मि, अनेन दानवहतकेन । कः कोऽत्र ? परित्रायतां परित्रायतां मामनाथां वनोपकण्ठे !

पुरुषः—सुन्दरि, मुग्धासि, इह आक्रोशन्तीं त्वां न कोऽपि शृणोति। ( उपसृत्य गृहीत्वा बलेनाकर्षति )

स्त्री—हा हतास्मि !

पुरुषः—हाः ! हाः !! हाः !!! न कोऽपि शृणोति !

( ततः प्रविशति सहसा रत्नाकरः )

रत्ना—मूढ ! दुर्मनुष्य, एष ते कृतान्तः शृणोति ! ( कटिदेशे दण्ड-प्रहारं करोति )

पुरुषः—हा हतोऽस्मि ( पतितः परावृत्य कथञ्चित् पश्यन् स्वगतम् ) अये ! को नु खल्वेष निर्जने वनप्रान्ते कृतान्तसमः प्राप्तः ?

रत्ना—मूढ, सुष्ठु पतितोऽसि, तत् यावदहं जननीमिमां स्वं गेहं प्रति यथागतं प्रेषयामि, तावत् तथैव तिष्ठ, यदि पदात् पदान्तराय स्पन्दसे, तदा कृतान्तमेव क्षणमात्रकेण द्रक्ष्यसि ।

पुरुषः—अहो शौर्यम् ! अहो साहसम् ! एकेनैव दण्डप्रहारेण भग्नेव मे कटिः प्रतिभाति ! ( प्रकाशम् ) आम् ! पराभूतोऽस्मि, तत् का गतिः ?

रत्ना—एवमिदानीं मार्गे पतितोऽसि। मातः साम्प्रतं निराबाधा स्वगेहं प्रति प्रतिनिवर्त्तस्व। अपगतं ते दुर्मनुष्यकृतं भयम्, एष दुरन्तवृत्तः परतो मया द्रक्ष्यते।

स्त्री—भद्र, कृतज्ञतया आवर्जिताया मे वाचो न प्रसरन्ति ! भद्र, देवतास्ते सर्वतः स्वस्ति करिष्यन्ति, यदहमेवम्भूता निःशरणा त्वया रक्षिता।

पुरुषः—( स्वगतम् ) यावदेतौ कथाव्यासक्तौ, तावदलङ्कारानेनेन मूषिकौतुकरेण अन्तरयामि ( तथा करोति )।

रत्ना—आर्ये, मा मैवम्

मया विपन्ना भवती न रक्षिता
दैवेन रक्षा विहिता तवानघे।
मनुष्यशक्तिः कियदेव साधयेद्
दुःखं सुखं वा नियतेर्वशं गतम्।

स्त्री—तत्रापि भवानेव द्वारीकृतो दैवेनेति भवन्तमभिनन्दामि ! किं वा बहुना, यद्यस्ति लेशमात्रमपि सुकृतं मे, तदा तत्फलं त्वय्येव संक्रान्तमिच्छामि । अपि च भद्र, यदि नान्यथा मन्यसे, तदा अनेन सबलात्कारं गृहीताः स्वल्पका अपि मे अलङ्कारास्तवैव सन्तु इत्यभ्यर्थये ।

रत्ना—अये, अनेन मूढेन आर्याया अलङ्कारोऽपि बलात्कारेण गृहीतः ? तद् न केवलमेष कामवृत्तः, परम् अर्थवृत्तोऽपि ? अहो भिन्नः किलानेन तस्करतया समं कामस्य विरोधः ! तथाहि—

ये तस्करास्ते नहि काममुग्धा ये काममुग्धा नहि तस्करास्ते ।
विभाति चौर्येण समं न कामः सता च कामेन न चौर्यसिद्धिः ॥

तदत्र विचित्रः किल द्वयोरेकत्र समावेशः !

अथवा

क्षणे क्षणे चित्तविवर्तनं नृणां न भावधारा सदृशी चिरस्थिरा ।
विचित्रसंसारगतिप्रभाविताः शरीरिणो यान्ति गतिं पृथग्विधाम् ॥

तन्नास्त्यत्र विस्मयावकाशः । ( प्रकाशम् ) मूढ, न केवलं काममभिसन्धत्से ? किन्तु अर्थमपि ? तत् दीयन्तामस्या आर्याया बलात्कारेण गृहीतपूर्वा अलङ्काराः ।

पुरुषः—अलङ्कारा इति ? कुतः खल्वलङ्काराः ? एषा लोहवलयमात्राभरणा मया आसादिता ।

स्त्री—नहि, नहि, एष मिथ्या प्रलपति, गृहीता एवानेन ममालङ्कारा ये विवाहकाले मात्रा विसृष्टाः ।

पुरुषः—भद्र, मिथ्यैषा ब्रवीति, मम निग्रहार्थमेवास्या निपुणाया एष प्रबन्धः ।

स्त्री—धिक् ! व्रीडितास्मि !

रत्ना—मूढ, निर्मर्याद,

वित्तस्य क्षणभङ्गुरस्य लघुनो लाभाय यः साहसाल्
लोकप्राणहरोऽसि तस्य खलु ते सत्ये प्रतिष्ठा परा ।

या साध्वी कुलजा सतां पथि रता सत्याश्रया सन्ततं
तस्या हन्त वचः कथं नु वितथं जायेत मृत्यावपि ॥

तदलं छलेन, आर्यैषा ब्रवीति, दीयन्तां सान्त्वेन।

पुरुषः—इह सान्त्वे परुषे वा न कश्चिद् विशेषः।

रत्ना—( स्वगतं ) कथमयं निश्चयेन तथा ब्रवीति, अये संशयं प्राप्तोऽस्मि। ( विचिन्त्य ) अथवा अलं संशयेन,

मातेव ललिताकारा देवतेव शरीरिणी।
नैषा मिथ्यानुषङ्गस्य पात्रतां गन्तुमर्हति ॥

( प्रकाशं ) आर्ये, कथय, के के भवत्या अलङ्काराः, ये मूढेनानेन बलाद् गृहीताः।

स्त्री—रजतमयं वलययुगलम्, रजतमयी मेखला, सुवर्णमयं कुण्डलद्वयञ्च।

रत्ना—एतावन्त एव ?

स्त्री—अथ किम्। भद्र, एतावन्त एव पर्याप्ता मे दीनायाः! एतेऽपि विवाहकाले मात्रैव प्रतिपादिताः! तदनेन प्रसङ्गेन पत्युरवस्थाविशेषं स्मृत्वा खिन्नास्मि।

रत्ना—आर्ये, किमेवं दैन्यं वहसि ? पश्य,—

व्याददाति महाभीमं वक्त्रं दुर्भिक्षराक्षसः।
तद्वक्त्रे विनिविष्टानां सर्वेषामद्य सा दशा ॥

स्त्री—भद्रस्य मातृबहुमानेन गौरवं गमिता किञ्चिदिव वक्तुमिच्छामि।

रत्ना—आर्ये कथ्यताम्।

स्त्री—यदत्र भद्रः 'सर्वेषामद्य सा दशा' इति सामान्यतो ब्रवीति, तदिदं न मे दृढं रोचते।

रत्ना—आर्ये, कथमिव ?

स्त्री—कथमिति ? किं वात्र प्रष्टव्यम् ? नागरिका धनिकाः स्वच्छन्दमाहारं विहारञ्च कुर्वन्तः प्रतिपदं रमन्ते। धनिकानां कलत्राणि विचित्रा-

लङ्कारसमलङ्कृतानि धनमदेन पन्थानं नमयन्तीव परिक्रामन्ति, तेषां वित्तमदमत्ताः सन्ततयो विचित्रपरिच्छदाभरणा दीनानां दीनाः सन्ततीः क्लेशयन्त्यो वाचा च कर्मणा च निरन्तरमेव परिभवन्ति। अपि नाम विलोपं गतानि तेषां गृहे तौर्यत्रिकविजृम्भितानि, ह्रासं गता वा लेशमात्रेणापि विलासव्यवहाराः? तत् कथमेवं भवान् ब्रवीति?

रत्ना—( स्वगतं ) अहो एषापि परसम्पदा परितप्यते? सत्यमेवैषा प्रस्तौति,

कपर्दकसमा कोटिर्व्यसने यस्य दृश्यते।
स जीवनार्थं भिक्षूणां न प्रदत्ते कपर्दकम् ॥

अहो, वित्तमत्तता धनवताम्, स्मरामि, हन्त स्मरामि, क्रीडां गतस्य मे वत्सस्यात्रेयस्य दारिद्र्यादेव धनमदमत्तैरमात्यकुमारैः कृतं कठोरं पराभवम्! येन दुर्मनायमानः क्रीडाप्रियोऽपि वत्सो मे क्रीडानिवृत्तिमात्मना समाश्रितः। हा वत्स आत्रेय,

महता भाग्यदोषेण रत्नाकरगृहं श्रितः।
परेषां सम्पदा येन सततं परितप्यसे ॥

( अश्रु मुञ्चति )

स्त्री—कथमार्यो बाष्पं विसृजति? तत् किन्तु खल्विदम्?

रत्ना—न किञ्चिदेतत्!

स्त्री—आर्य, सुतरामपराद्धास्मि, येन निर्विचारमुपक्रान्तेन दुःखनिवेदनलाघवेन भवन्तं दुःखाकृतवती। तदलमनेनाप्रकृतेन।

रत्ना—अये, किं नाम सम्प्रति प्रकृतम्? ( विचिन्त्य ) आं स्मृतम्! अरे पुरुष! कथय, क्व ते अलङ्काराः?

पुरुषः—भद्र, किमेवं पिष्टपेषणेन? न सन्त्येव मय्यलङ्काराः, तत् कथं दीयन्ताम्।

रत्ना—मूढ, रत्नाकरः खल्वहम्, तावता वृथैव मां वञ्चयितुमिच्छसि? यदि कल्याणं कामयसे, प्रत्यर्पयालङ्कारान्।

स्त्री—अये, एष रत्नाकरः, यस्य दैन्यं गतस्यापि सौजन्यप्रभवां कीर्त्तिं समुद्घोषयन्ति पौरजानपदाः ! अथवा कुतः खलु सुधाकरादन्यतः पीयूषवृष्टिः ?

पुरुषः—नास्त्येव मय्यलङ्कारः, तथापि यदस्ति, गृह्यताम् !

रत्ना—भद्र, सान्त्वं न कामयसे, येनाद्यापि नालङ्कारं प्रत्यर्पयसि। अथ यद्येवं. स्वस्थानादुत्तिष्ठ, यावदहं स्वयं पश्यामि।

पुरुषः—भद्र, भवत एव दण्डप्रहारेण भग्नकटिं मां नैवमुपहसितुमर्हसि, कुतोऽद्यापि मे स्वस्थानाच्चलनसामर्थ्यम्, तदनुकम्पया दीयतां करालम्बः।

रत्ना—एष करालम्बं ददामि, उत्तिष्ठ। ( करालम्बं दातुमुपगतः )

पुरुषः—( स्वगतं ) अयमेव प्रतीकारावसरः ! मूढ, इदानीं क यास्यसि ? ( वस्त्रान्तरात् छुरिकामाकृष्य तया रत्नाकरस्य वक्षसि प्रहर्त्तुमिच्छति )

रत्ना—( सहसा तं मणिबन्धे गृहीत्वा तस्य करात् छुरिकामाकृष्य प्रतिप्रहारं कर्त्तुमिच्छति ) मूढ, प्रतिपदं दृश्यसे, एवं किल रत्नाकरं वञ्चयितुमिच्छसि ? अथेदानीम् ? मूढ, अथेदानीं स्मर स्वकीयं भागधेयम् ( प्रहर्त्तुमुद्यतः )।

स्त्री—अहो अत्याहितम् ! भद्र, मा तावत्, मा तावत् मानुपवधं कार्षीः ! प्रसीद !

पुरुषः ( स्वगतं ) अहो धिक्, ईदृशी मया मूढेन पराभूता ? तत् कृतमतिमात्रमसदृशं कर्म। लज्जया वसुन्धरागर्भं प्रवेष्टुमाकाङ्क्षति मे अन्तरात्मा !

रत्ना—अथवा तिष्ठ तावत् यावदस्या आर्यायाः कल्याणोदर्कः प्रबन्धः क्रियते ! साम्प्रतमनुपेक्षणीयोऽसि, तदेहि अस्मिन् सन्निहिते पादपस्कन्धे त्वां पादपलम्बितलतापाशेन दृढं बद्ध्वा विश्वस्तो भवामि।

पुरुषः—भद्र, एष नतोऽस्मि, अज्ञानकृतं मे क्षन्तुमर्हसि।

रत्ना—मूढ, किं न जानासि ?

ज्ञानतोऽज्ञानतो वापि समाक्रान्तो हुताशनः ।
तुल्यं दहति नास्त्यत्र ज्ञानाज्ञानविचारणा ॥

पुरुषः—हा हा निराशोऽस्मि ।

रत्ना—मूढ़, अद्याप्याशां वहसि ? धिक् साहसम् !

कुलाङ्गनां स्वामिनिरूढमानसां नीरार्थमारात्तटिनीमुपेयुषीम् ।
आक्रम्य कामादपहृत्य भूषणं रहः समाकाङ्क्षसि मुक्तिमग्रतः ॥

आदौ कथय, क्व ते अलङ्काराः ? दृश्यतामिदमुद्यतं शस्त्रम् !

पुरुषः—एष कथयामि । इह मूषकोत्करे सन्ति ।

रत्ना—उत्सार्यतां मूषिकोत्करः ।

पुरुषः—एष उत्सारयामि ( मूषिकोत्करमुत्सार्य अलङ्कारान् आविष्करोति ) ।

रत्ना—उपनीयन्तामिदानीमस्याः ।

पुरुषः—( स्वगतं ) अहो क्षमासाराया अस्या मातुः परिभवेन सुतरां व्रीडितः कथमिदानीमेनामुपसर्पामि, अथवा क्षमासारायामस्यामलं व्रीडया, ( प्रकाशं ) एष उपनयामि । अयि मातः स्नेहशीले ! अज्ञानं सुतं मां क्षन्तुमर्हसि ।

मोहात्त्वयि कृतं येन दुष्कृतं पापकारिणा ।
दूरापेतः स मे कामः कामं निर्मलमन्तरम् ॥

तत् क्षमस्व, गृहाण मातुस्ते शरीराद् मया दुष्टेन गृहीतानलङ्कारान् ।

स्त्री—वत्स, उत्तिष्ठ, प्रसन्नास्मि । सम्प्रति कामराक्षसाद् विमुक्तः कल्याण एव मे प्रतिभासि । वत्स, अलङ्कारानिमानस्य महानुभावस्य उपनय ।

रत्ना—मा, मा तावदेवम् । जननि, नैवं वक्तुमर्हसि, नाहं जननीं निराभरणां समीक्षमाणो धनलाभेन परितृप्यामि, विशेषतश्च मात्रा स्नेहेन प्रतिपादितानि भूषणानि न ते शरीरवियोगमर्हन्ति । तदिदानीम्—

आमुच्यतां यथास्थानमयं भूषणसञ्चयः ।
मातरं भूषितां वीक्ष्य लवयामि शुचं हृदः ॥

स्त्री—वत्स, कृतवेदितया समावर्जितास्मि, यद्यनेन दैन्यं गतस्य भवतः कियानप्युपकारस्तदा कृतार्था भवेयम् ।

रत्ना—आम् अस्त्येतत्, तथापि दैवतशीले,

भवत्या मातृतुल्याया नापरं किञ्चिदर्थये ।
मनस्तापविनाशार्थमाशीरेव प्रदीयताम् ॥

स्त्री—एवमस्तु देवताप्रसादात् । का गतिः ? वत्सस्य सन्तोषार्थम् एषा गृह्णामि ।

रत्ना—आमुञ्च, यावत् पश्यामि ।

स्त्री—एते आमुक्ताः । अथेदानीम् अनुमन्यस्व मां गमनाय ।

रत्ना—एवम्, गच्छ, शिवास्ते सन्तु पन्थानः । अथवा नाद्याप्येकाकिनी गन्तुमर्हसि, तत् किन्नु खलु कुर्याम् ? आं दृष्टम् ! अरे, एहि यावत्त्वां लतापाशेन पादपस्कन्धे दृढं बद्ध्वा मातरं यथाभिमतं देशं प्रापयामि ।

स्त्री—वत्स, कथमद्याप्यस्य बन्धनमिच्छसि ? शान्तः खलु वत्सो मे व्यतीतकामः प्रत्यर्पितन्यासश्च ।

रत्ना—अम्ब, न जानासि गतिं तस्कराणाम्, विचित्रचरित्राः खल्वेते, तदिदमेव श्रेयः पश्यामि ।

पुरुषः—भद्र, नैवमधिक्षेप्तुमर्हसि, तस्करा अपि मानुषा एव, तेऽपि हृदयवन्तो हर्षकाले नृत्यन्ति, दुःखकाले च बाष्पं परिमुञ्चन्तो विक्लवा विलपन्ति, येनोपकरणेन युष्माकमिदं शरीरं, तेनैवोपकरणेन निरमायि तेषामपि शरीरं धात्रा । तथापि त एव यदा स्वकीये गेहे क्षुधा तृषा च मृत्युवक्त्रगतानात्मजनानन्नदानेन परिपोषयितुमसमर्था दुर्भिक्षपीडिते जनपदे प्रयत्नवन्तो भिक्षामप्यलभमानाः परितः परितप्यन्ते, तदैव स्वीयां दैवतवृत्तिं दूरे निर्वास्य राक्षसीं वृत्तिमवलम्ब्य स्वजनपोषणाय प्रवर्तन्ते । भद्र, मन्ये दुर्भिक्षपीडिते जनपदे न प्राप्तोऽसि दारिद्र्यगोचरतां येनैवं

श्रीहर्षः ॥ ( about 606-648 A. D. )

स्वयमयमवनीशो[1] रञ्जकः सज्जनानां
कृतसुगतसपर्योऽभूच्च षष्ठे शताब्दे ।
मृदुपदविनिवेशात् प्राप हर्षः प्रकर्षं
त्रितय इव दृशां तन्नाटिकानां[2] प्रजेशः ॥२४॥

कण्ठेऽस्य 'प्रियदर्शिका' विलसते कीर्त्तिश्च 'रत्नावली'
'नागानन्द'मयं तथाप्युदयनानन्देन्दुरूपो दधौ ।
ब्रह्मानन्दसहोदरः सहृदयैर्वेद्यैकमोदो यदि
जीवातुः कविताचयस्य वनितासार्थस्य धन्यः कविः ॥२५॥

भवभूतिः ॥ ( about 700 A. D. )

वेदान्ते निपुणः प्रकाशयति तां नित्यां[3] कलामात्मनः
वीरं यश्चरितं तथोत्तरमपि श्रीरामभक्तो व्यधात् ।
आसीद् यश्च सभाकविर्नरपतेः श्रीमद्यशोवर्मणो
यं वेदर्तुभृतौ जघान ललितादित्यः शकाब्दे पुरा ॥२६॥

करुणतरुणचित्तो वीरवीभत्समिश्रः
कवयति भवभूतिर्वश्यवाग् ब्राह्मणोऽसौ ।
यदतिशयपवित्रं प्रेम दाम्पत्यमूलं
किमु मधुरतयेदं स्पर्द्धते चौर्यरत्या ॥२७॥

दलति झटिति चित्तं ग्राव्ण इत्यस्तु[4] नाम
ध्वनितगुरुगुणान्तर्मार्दयेद् वा धनुस्तत्[5] ।
जटिलखरसमासैर्गाढपाशैः परं यः
कृतरुजदृढबन्धस्तं न पश्येत् किमन्धः ॥२८॥

---

1. हर्षवर्द्धन-A. D. 606.

2. प्रियदर्शिका-रत्नावली-नागानन्दरूपनाटकत्रितये राजायं नयनत्रये प्रजेशः शिव इव प्रसिद्धिं गत इति भावः ॥

3. उत्तरचरितम् I,2.

4. उत्तरचरितम् I,27.

5. उत्तरचरितम् VI,1

कविरसि भवभूते ! मार्मिकस्तत्त्ववेत्ता
पुनरिह गुरुगर्वः शोभते किं त्वयीत्थम् ।[1]
अपलपति न सत्यं केतकि ! त्वत्सुगन्धं
मधुकरकरपत्रे कण्टको दुर्निवारः ॥२९॥
विकसति नवभिन्ना 'मालती माधवे' यत्
प्रसरति मकरन्दो मन्दमन्दं समीरे ।
सकलतरुणचित्तोन्मादकाः पञ्चबाणा
मदनमधुरसारं भावमुद्बोधयन्ति ॥३०॥

विशाखदत्तः ( A. D. 900 or earlier )

अथाष्टमे भाति शके शताब्दे विशाखदत्तो वरनाट्यकारः ।
न मुद्रया [2]राक्षसमेव सोऽयं समग्रहीत् किन्तु सतां मनोऽपि ॥३१॥

भट्टनारायणः ( 7th or 8th Century )

योऽयं प्रौढबलेन गौडनरपेणाभ्यर्थ्य संस्थापितो
वङ्गे ब्राह्मणवंशपूर्वपुरुषः श्रीभट्टनारायणः ।
सोऽयं दीर्घसमासबन्धरचनादक्षः कविग्रामणीः
कृष्णायाः प्रतिसंजहार दयया वेणीं[3] सहैवाधिभिः ॥३२॥
ओजः प्रकाशितमलं सुकवित्वशक्त्या
वीरो रसो विरचितो ननु भीममूर्त्या ।
किन्त्वेक एव तव दारुण एष दोषो
नाट्योचितो न हि कृतो घटनानिवेशः ॥३३॥

अनङ्गहर्षः ॥ ( A. D. 855-83 )

अथाष्टमे नाम शके शताब्देऽभून्नाटकं तापसवत्सराजम् ।
अनङ्गहर्षः कविरस्य कर्त्ता रत्नावलीसारसमाश्रयेण ॥३४॥

---

1. मालतीमाधवे I, ये नाम केचिदिह etc. 2, मुद्राराक्षसम्

3. वेणीसंहारः

मुरारिः ॥ ( Middle of the 8th Century )

श्रीवर्द्धमानतनयस्तदनु प्रजातः श्री'बालवाल्मिकि'कविः प्रथितो मुरारिः ।
भूत्वाऽप्यनर्घ इह यस्य तु राघवोऽयं प्रच्छादितो हि भवभूतिसितप्रलेपैः[1] ॥३५॥

राजशेखरः ॥ ( 800-900 A. D. )

कर्ता श्रोत्ररसायनस्य वचसः श्रीरामभक्तः कवि-
बालं [2]भारतमेष रामचरितं पीयूषरम्यं जगौ ।
चौहानान्वयपुण्यशेखरमणिः सोऽयं शताब्दे नवे
सञ्जातः किल राजशेखरकविः काव्यस्य मीमांसकः ॥३६॥
कर्पूरोद्भव[3]मञ्जरीं व्यरचयद् यः प्राकृताह्लादकः
सोऽयं क्रीडति शालभञ्जिभि[4]रितः कोऽयं नवो विस्मयः ।
यत् तस्य प्रथमप्रणामविषयेऽभून्मान्मथो[5]मन्मथो
देवस्तत्र वितर्क्यमस्ति सुतरां बालोऽपि रत्यां रतः ॥३७॥

क्षेमीश्वरः ॥ ( A. D. 893-907 )

चण्डः[6] कौपिक एष आगत इव ज्वालाकुलः पावको
भार्या कण्टकभिन्नचारुचरणा पुत्रः श्रमान्मूर्च्छति ।
इत्थं दैवकदर्थितं ननु हरिश्चन्द्रं तदेकाश्रयं
कारुण्याश्रुकणार्द्रकान्तवचसा क्षेमीश्वरोऽजीवयत् ॥३८॥

दामोदरः ॥ ( 1100 A. D. )

रामाश्रयं सुविपुलं जलधिं यथैतद्
दामोदरस्तु चरितं ललितं बबन्ध ।

---

1. श्रीभवभूतिकवे रामाश्रयनाटकस्य यशःप्रकर्षात् 'अनर्घराघवनाटकं' न केषामपि दृष्टिमाकर्षतीति भावः । तेन च भस्माच्छादित इति प्रौढोक्तिः ।

2. बालभारतम्, बालरामायणम्

3. कर्पूरमञ्जरी 4 विद्धशालभञ्जिका

5. विद्धशालभञ्जिका I, 1. 6. चण्डकौषिकः

तेनैव राघवपदाम्बुजभक्तकाव्यं
केचित् कृतं हनुमतेति समामनन्ति ॥३९॥
भवदहनविशुष्यत्क्रान्तभक्त्यार्द्रचित्ते
रघुपतिचरणाङ्के गाढमन्तः प्रविष्टः ।
भुवि जलधिगतोऽपि श्रूयते नाटकांशः[1]
शर इव कुसुमेषोरेष पुङ्खावशेषः[2] ॥४०॥

कृष्णमिश्रः ( 1042-98 A. D. )

प्रबोधचन्द्रोदयनिस्तमस्कं कृत्वा मनो राजति कृष्णमिश्रः ।
धन्यः स राजा खलु कीर्तिवर्मा समाऽस्य यत् तं सुकविं दधार ॥४१॥

विह्लनः ॥ (1100. A. D. )

विह्लनोऽनिहिलवारभूपतेः, कर्णसुन्दरिकविः सभास्थितः ।
कर्णदेव[3]चरितं पुरा जगौ रुद्रसंख्यकशके शतावृते ॥४२॥

जयदेवः ॥ ( 1200 A. D. )

प्रसन्नो राघवो यस्मिन् जयदेवः कविर्मतः ।
आसीत् पक्षधरश्चन्द्रः शकाब्दे द्वादशे[4]शते ॥४३॥

श्रीरूपगोस्वामी ॥ ( 1500 A. D. )

श्रीकृष्णचैतन्यमहाप्रभोर्यो लीलासहायो निजमेव रूपम् ।
तद्भक्तियोगेन भुवि प्रसिद्धोऽभून्माधवोऽयं ललितो विदग्धः[5] ॥४४॥

---

1. महानाटकं खलु सागरे निक्षिप्तं हनूमतेति कथा श्रूयते ।

2. महानाटकम् II, 41.    3. कर्णसुन्दरीनाटिका

4. प्रसन्नराघवरचयिता जयदेवो नैयायिककेसरिणः पक्षधरमिश्रादनन्य इति केचिद्वदन्ति ।

5 गौराङ्गशिष्योऽयं रूपगोस्वामी ललितमाधवं विदग्धमाधवञ्च रचयामास । गौराङ्गस्य स्वरूपमेव भक्तियोगेन माधवं भुवि ललितं विदग्धञ्च कृत्वा प्रकाशयामासेति प्रौढोक्तिः ।

श्रीकालीपदतर्काचार्यः ॥ ( १९३८ खृः )

पक्षत्वव्याप्त्यभावाद्यतिशयगहनं कर्कशं तर्कशास्त्रं
छात्रेभ्यः शर्करेव स्वदत इह सदा यत्कृपावेशलेशात् ।
नव्यः काव्यस्य कर्त्ता विविधबहुमतग्रन्थटीकाप्रणेता
श्रीमत्कालीपदार्यो मनसि स वसतात् सर्वकालं गुरुर्मे ॥४५॥

भूपाले यवने समस्तभुवने शीर्णे च काव्याम्बुधौ
सोऽयं संस्कृतपर्षदं कवितया संप्लावयत्यादरात् ।
गङ्गा बङ्गमिवाङ्ग शीतलजलैर्विद्याम्बुदानेन वा
चित्तं नित्यमयं पुनाति दयया विद्यार्थिसार्थस्य च ॥४६॥

धन्येन दृष्टं गुरुपादपद्मं किञ्चित् पटुत्वं वचसाञ्च लब्धम् ।
नित्यञ्च कालीपदपुण्यसङ्गाद् ईशानवृत्तिर्हि मयापि लब्धा[1] ॥४७॥

मानसे ललितपादमयन्ती राजते नलयुता दमयन्ती[2]
नाटकेऽपि मधुरा चतुरा सा यां पुरा प्रचकमे च तुरासाट् ॥४८॥

इति कृतिभिरसंख्यैर्भूषणैर्भूषितोऽयं
हरतु सरसचित्तं नाट्यवेदो बुधा ! वः
मयि तु मतिविहीने नित्यकारुण्यपूर्णा
गुणलवपरितोषाः साधवः शं वदन्तु ॥४९॥

भारती भारतीयेयं कविता कविताप्रदा ।
सर्वदा सर्वदा भूयाद् भवतां भवतारिणी ॥५०॥

---

1. कालीपदाब्जाश्रयणादीशानपदवी भवत्यदवीयसीति पुराणवार्त्ता । मयापि ईशानवृत्त्यभिधेयः पुरस्कारः श्रीकालीपदतर्काचार्य-प्रसादादेव लब्ध इति मन्यते ॥

2. नलदमयन्तीयम् ।

# शतरञ्जकुतूहलम्

[ सम्पादकः—श्रीचिन्ताहरणशर्मचक्रवर्ति-काव्यतीर्थः एम्. ए. ]

क्रीडायामासक्तिर्मानवानां स्वाभाविकीति निर्विवादं वचः। सा चास्मदीयानां पूर्वपुरुषाणां नानल्पासीदिति पुरातनग्रन्थनिचयाद् विशेषतः स्फुटीभवति। परं तत्रानेकक्रीडानामधुनाऽप्रचद्रूपाणां सुतरां कौतुकमावहतां समुल्लेखसद्भावेऽपि तां तामधिकृत्य स्वल्पीयांस एव समुपलभ्यन्ते निबन्धा गीर्वाणवाणीबद्धाः प्राक्तनक्रीडापद्धतिवर्णनमुखराः। तेन चैतादृशानामुपलभ्यमानानां निबन्धानां यथाशक्ति संग्रहणं प्रकाशनञ्च सर्वथा विधेये इति कृत्वा 'बुद्धिबल'-'शतरञ्जे'त्यादिसंज्ञाभिरिदानीं परिचयमादधतः प्रथितप्रचारस्य चतुरङ्गस्य प्राथमिककृत्यमुपवर्णयत् शतरञ्जकुतूहलं नाम श्लोकदशकात्मकं नातिप्राचीनं निबन्धरत्नमत्र प्राकाश्यं नीयते यथालब्धटीकासमेतम्। क्रीडान्तरं कलाविशेषञ्चाधिकृत्य विरचिता अन्येऽपीदृशाः सरलसरला निबन्धाः समुपलभ्येरंश्चेत् तानप्येवमेव प्रकाशमुपपादयितुम् अशिथिलप्रयत्नैर्वर्तितव्यमस्माभिः। वाचकमहाभागैश्चात्र दत्तावधानैर्निबन्धसमाहरणे कृतोद्योगैर्भाव्यमिति नोऽभ्यर्थना। विषये चात्र ये नाम ग्रन्था ग्रन्थांशा वाऽस्माकं दृष्टिविषयं गताः श्रुतिपथमुपागता वा तेषां सामासिकः परिचयो नाप्रासङ्गिक इत्यधस्तान्निरूप्यते—

(१) गौडोद्भव-स्मार्तप्रवरशूलपाणिकृतत्वेनानुमिता चतुरङ्गदीपिका नाम कलिकाता-संस्कृत-सिरिजग्रन्थमालायां लब्धप्रचारा। ग्रन्थेऽत्र स्मार्तरघुनन्दनकृततिथितत्त्वधृतवर्णनमाधिक्येनान्तर्भवतीति परिलक्ष्यते।

(२-३) त्रिवेङ्कडाचार्यकृते विलासमणिमञ्जरी बुद्धिबलसप्तकं च कोल्हापुरतो गणेशरङ्गकुलकर्णीहलदीकरेण प्राकाश्यमधिगमिते।

(४) गञ्जिकाखेलनरचयितुर्ज्योतिर्विच्छिवसूनुशङ्करसुतगिरिधरस्य कृतिश्चतुरङ्गविषया, यस्याः स्वल्पीयानेवांशो वङ्गीय-रयालएसियाटिक-सोसाइटी-ग्रन्थालये विराजते।

(५) चतुरङ्गपद्धतिर्यस्या लिपिर्नेपालराज्य उपलभ्यत इति चतुरङ्ग-दीपिकाभूमिकायां स्थितम् ।

(६) दिव्यमालिकाख्यश्चतुरङ्गदीपिकाधृतग्रन्थः ।

प्रकाश्यमाननिबन्धस्य पाठनिरूपणे कलिकातानगरीमलंकुर्वाणस्य रयालएसियाटिकसोसाइटीतिख्यातस्य परिषद्वर्यस्य ग्रन्थालयगतं A, B, C, D संकेतनिरूपितं हस्तलिखितपुस्तकचतुष्टयमेवावलम्बनं जातम् । तत्र संकेतपरिचयस्तावदेवम्—

A—८२२२ संख्यकं पुस्तकं श्लोकनवकात्मकं मूलमात्रम् ।

B—६७३७ संख्यकं पुस्तकं श्लोकाष्टकात्मकं सटीकम् ।

C—८२२३ संख्यकं पुस्तकं श्लोकनवकीयटीकात्मकम्

D—इण्डियनमिउजियम्-गृहादानीतेषु सोसाइटीगृहे रक्षितेषु पुस्तकेषु ३४७६ संख्यकं पुस्तकं श्लोकनवकात्मकमन्ते टीकामात्रं त्रुटितम् ।

A, C चिह्नितपुस्तकयोः स्वामी अनेकपुस्तकाधिपतिर्वाराणसेयो रघुनाथमालवीयो नाम, यदीयनामाक्षराणि पुस्तकैकदेशयोरङ्कितान्या-साद्यन्ते ।

गणेशं नमस्कृत्य विष्णवङ्घ्रियुग्मं
गुरून् सर्ववन्द्यान् विशालान् दयाब्धीन् ।
बुधानां मनोज्ञं प्रशस्तं हि बुद्धे-
र्बलाख्यं वयं कुर्महे क्रीडनं सत्[1] ॥१॥

---

1 'A' which alone has the text of the verse has the following introductory line:

अथ शतरञ्जाख्यो वा बुद्धिबलाख्यो ग्रन्थो लिख्यते । श्रीराधां प्रति कृष्णोवाच ।

The last word in the third line occurs in the Ms as बुद्धि.

नत्वा महेशानमुमापतिं गुरोर्विधाय चित्ते चरणारविन्दम् ।
कुर्वे शुभां बुद्धिबलाभिधस्य टीकामहं क्रीडनकस्य सूक्तिम् ॥

अथ विघ्नविघातनाय मङ्गलमाचरति गणेशमिति । गणानां प्रमथानामीशः स्वामी तं नमस्कृत्य नत्वेत्यर्थः । उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वान्नमःस्वस्तीत्यादिना चतुर्थी न किन्तु द्वितीयैव । विघ्नबाहुल्यात् पुनर्मङ्गलमाचरति विष्णवङ्घ्रि इति गुरूनिति च । दयाब्धीन् दयासमुद्रान् । एकस्यां ल्यबन्तक्रियायां त्रयाणां सम्बन्धः । वयं बुधानां मनोज्ञं प्रशस्तं बुद्धिबलाख्यं यत् क्रीडनं हीति निश्चयेन कुर्महे ।

मतिमतामतिमत्यभिवृद्धये
विरचितं शतरञ्जकुतूहलम् ।
नरशतान्यनुरञ्जयति ध्रुवं
तदुदितं शतरञ्जमतोऽर्थतः[1] ॥२॥

श्रीमते रामानुजाय नमः । कश्चित् कदाचन कुञ्जस्थां राधां शतरञ्जकुतूहलाख्यक्रीडनस्य शब्दार्थं खेलनप्रकारं च पृच्छन्तीं कृष्णो दर्शयति । इत्यर्थं प्रकारं प्रदर्शयति ।

सदूर्णामये वस्त्रखण्डे विशाले
चतुःकोणयुक्ते समन्तात् समाने ।

---

1 Verse 2 with the portion of the commentary following it 'apparently not on the verse in question' is found only in B where the reading of the first line is मतिमतां मतीमत्यभिवृद्धये

**चतुःषष्टिकोष्ठानि कौषेयसूत्रै-**
**र्विधायादिकोणादिकोष्ठादिभाद्याः ॥३॥**

सदूर्णामय इति। हे राधे सदूर्णामये सति सुन्दरे ऊर्णाप्रचुरे विशाले महति चतुःकोणयुक्ते चत्वारश्च ते कोणाश्च तत्सहिते समन्तात् समाने सर्वतस्तुल्ये वस्त्रखण्डे हस्त्यादिस्थितिपात्रगृहे विषये कौषेयसूत्रैः पटतन्तुभिः चतुःषष्टि-कोष्ठानि हस्त्यादिगृहाणि विधाय कृत्वा आदिकोणादिकोष्ठात् आदिः पूर्वश्चासौ कोणश्च तस्य आदि प्राक् च तत् कोष्ठं च तस्मात् तथा इभाद्या हस्त्यश्वादयः सारिकाः स्थाप्याः ।

**इति स्थापनीया गजाश्वोष्ट्रसेना-**
**धिराट्सार्वभौमक्रमेलार्वनागाः ।**
**ततः पत्तयो[1]ऽष्टौ गजाद्य[2]ष्टकाना-**
**मधस्तात्तिरःस्थाः क्रमेणार्पणीयाः ॥४॥**

इतीति। हे राधे अनेन प्रकारेण गजाश्वोष्ट्रसेनाधिराट्सार्वभौम-क्रमेलार्वनागाः प्रथमकोष्ठे हस्ती द्वितीये हयः तृतीये उष्ट्रः चतुर्थे सेनाधिराट् पञ्चमे सार्वभौमः सर्वेश्वरः षष्ठे क्रमेलः उष्ट्रः सप्तमे अर्वा अश्वः अष्टमे नागः हस्ती एते अष्टौ गजादिगजान्ताः स्थानेष्व[ष्ट]सु तिरःस्थाः तिरोभागे क्रीडितुर्मम पुरः स्थापनीयाः। ततः गजाश्वोष्ट्रकाणां सारिकाणामधस्तात् अधोभागे अष्टसु कोष्ठेषु अष्टौ पत्तयः[3] पदातयः सारिकाः तिरःस्थाः तिरोभागस्थाः क्रमेणार्पणीयाः आरोप्या इत्यर्थः ।

---

1 पतयो॰ A   2 गजाश्व A.   3. पतयः C

अमात्यालये सार्वभौमं निदध्या-
दमात्यं तथा सार्वभौमस्य कोष्ठे ।
इति व्यत्ययादन्यहस्त्यादयस्ते
प्रतिस्पर्धिनोऽप्येवमेवाधिरोप्याः ॥५॥

अमात्यालये इति। हे राधे क्रीडायां प्रतिस्पर्धिनः प्रतिस्पर्धिरूपस्य कलत्रस्य तवापि पुरः अमात्यालये सेनानीकोष्ठे सार्वभौमं सर्वेश्वरं निदध्यात् आरोपयेत्। तथा सार्वभौमस्य कोष्ठे अमात्यं सेनान्यं निदध्यात् आरोपयेत्, इति व्यतयात् एवं वैपरीत्यात्। अन्यहस्त्यादयः अपरगजादि-गजान्ताः यथा मम आरोपिताः तथा तवापि क्रीडास्थाने एवमेव आरोप्याः आरोपणीया इत्यर्थः।

ततः क्रीडितव्यं मनीषाविदग्धै-
बलं चाबलं[1] स्वस्य दृष्ट्वा परस्य ।
गतिज्ञानमेषां विना क्रीडनं नो
भवेत् तत् पुर[2]स्ताद्विचार्यं विशेषात् ॥६॥

तत इति। हे राधे ततः स्थानद्वये हस्त्याद्यारोपणानन्तरं मनीषा-विदग्धैः सुबुद्धिमद्भिः स्वस्य निजस्य परस्य प्रतिस्पर्धिनः सारिकाणां बलं च पुनः अबलं निर्बलत्वं च दृष्ट्वा विलोक्य क्रीडितव्यं खेलनीयमित्यर्थः। एषां हस्त्यादीनां गतिज्ञानं विना ऋते क्रीडनं नो भवेत् न स्यात्। ततः हस्त्यादीनां गतिज्ञानं पुरस्तात् प्रथमतः विशेषात् आधिक्येन[3] विचार्यं विचारणीयमित्यर्थः।

---

1 Omitted in B. 2. भवेत्तसु० B 3 अधिकेन C, D.

गजः सप्तकोष्ठान्तमेकाद्यवक्रो
यथापेक्षमूर्ध्वं तिरश्चैति पश्चात् ।
हयः सार्धकोष्ठद्वयं वासमन्तात्
क्वचिन्मध्यगाम्यष्टकोष्ठानि रक्षेत् ॥७॥

गज इति। एषां गजादीनां गतिप्रकार उच्यते। गजगतिज्ञानमाह। गजाः हस्ती अवक्रः सरलः[1] सप्तकोष्ठान्तं सप्तकोष्ठपर्यन्तं एकादि एकं स्वस्थानकोष्ठम् आदौ यस्मिन् कर्मणि ऊर्ध्वम् ऊर्ध्वभागे तिरः तिरोभागे पश्चात् पृष्ठभागे यथापेक्षं यादृशी चलनेच्छा भवेत् तथा एति गच्छति। हयगतिज्ञानमाह। हयोऽश्वः सार्धकोष्ठद्वयम् अर्धेन सह वर्तमानं कोष्ठद्वयम् इति आ समन्तात् उपर्यधस्तिरःसर्वभागेषु एति गच्छति। क्वचिन्मध्यगामी स्यात्। तर्हि अष्टकोष्ठानि रक्षेत् अष्टस्थानेषु तस्य बलं तिष्ठतीत्यर्थः[2]।

यथापेक्षमेकादिसप्तान्तकोष्ठं
व्रजेद् वक्रगामी समन्तान्महाङ्कः ।
अमात्यो विना वाजिनश्चैकगत्या
समग्रा गतीः सञ्चलेत् सर्वगामी ॥८॥

उष्ट्रगतिज्ञानमाह यथेति। महाङ्कः उष्ट्रः वक्रगामी वक्रं गच्छतीति तथा असरलगामी सन् यथापेक्षं क्रीडितुर्यथेच्छं एकादि एकमारभ्य सप्तकोष्ठान्तं सप्तकोष्ठपर्यन्तं समन्तात् सर्वतः व्रजेत्। सेनानीगतिज्ञानमाह। अमात्यः सेनानीः वाजिनोऽश्वस्यैकगत्या विना अश्वस्यैकगतिं त्यक्त्वा

1. Found only in B. 2. बलतीत्यर्थः A and B।

सर्वगामी उपर्यधस्तिरोगामी सन् समस्ता हस्त्यादिकृता गतीः सञ्चलेत् गच्छतीत्यर्थः ।

पुरः पृष्ठतः पार्श्वयोः कोणकेषु
　　चतुर्ष्वेककोष्ठं चलेत् सार्वभौमः ।
तुरङ्गस्य गच्छेद् गतिं ह्येकवारं
　　न कस्यापि लग्ना स्तृतिर्यावदस्य[1] ॥६॥

सार्वभौमस्य गतिमाह पुर इति। हे राधे सार्वभौमः सर्वेश्वरः पुरः अग्रभागे पृष्ठभागे पार्श्वयोर्द्वयोः कुक्षि[2]कक्षप्रदेशयोः चतुर्षु कोणकेषु सर्वकोणेषु एककोष्ठं चलेत् गच्छेदित्यर्थः। यावत्कालपर्यन्तम् अस्य सार्वभौमस्य क्रीडायां कस्यापि द्वितीयक्रीडितुः प्रतिस्पर्धिनः सेनान्यादि-पदात्यवसानस्य स्तृतिः संसरणं न लग्ना भवेत् तावदेकवारं सार्वभौमः तुरङ्गस्य अश्वस्य गतिं सार्धद्वयरूपां हीति निश्चयेन गच्छेत् गमनं कुर्यादित्यर्थः[3] ।

पदातिश्चलेदग्रतः कोष्ठमेकम्
　　ऋजुर्मारयेद् वक्रगत्या[न्य][4]कोष्ठे ।

---

1 The following colophon follows the verse in B :
शतरञ्जकुतूहलाख्यं समाप्तोऽयम् ।　　　2 कक्षि C, D.

3. B has the following colophon after this :—इति शतरञ्जकुतूहलटीका ।

4 Omitted in Ms.

न पादं क्वचिद्धारयेत् पृष्ठभागे
व्रजेद् यस्य कोष्ठं भजेत्तत्स्वरूपम्[1] ॥१०॥

पदातिसारिकागतिमाह पदातिरिति। हे राधे पदातिनाम्नी सारिका अग्रतः अग्रभागे ऋजुः सरलः सन् एकं कोष्ठं चलेत् गच्छेदित्यर्थः। प्रतिस्पर्धिहस्त्यादिसारिकां वक्रगत्या वक्रतया अन्यकोष्ठे तिर्यक्कोष्ठे मारयेत् हन्तीत्यर्थः। पदातिः क्वचित् कदापि पृष्ठभागे पश्चाद्भागे पादं स्वचरणं न धारयेत् न स्थापयेदित्यर्थः। प्रतिस्पर्धिनः हस्त्यादिसारिकाणां मध्ये स्वपदातिर्यस्य कोष्ठं व्रजेत् गच्छेत् तत्स्वरूपं हस्त्यादिरूपतां भजेत् प्राप्नुयादित्यर्थः। सार्वभौमं विनेति शेषः। हे राधे अनया रीत्या शतरञ्जकुतूहले क्रीडितव्यमिति[2]।

---

1. The verse is found only in A which has the following colophon: इति श्रीराधां प्रति श्रीकृष्णोक्तशतरञ्जक्री[डनम्]

2 C has the following colophon and Post-colophon statement after this: इति श्रीकृष्णोक्तं शतरञ्जकुतूहलाख्यं समाप्तम्।

संवत् १९१४ फाल्गुन कृष्णा १३ शनिवासरे लिखितमिदम् श्रीमदक्षर-पाठशालाविद्यार्थिनामुपकृतये।

# उपदेशपरम्परा

## वर्णधर्मः

[ स्वनामधन्य-जगद्गुरु-श्रीशङ्कराचार्य-श्रीकाञ्ची-
कामकोटिपीठाधीशानाम् ]

अस्माकं देशे ब्रह्म-क्षत्रिय-वैश्य-शूद्रा इति चत्वारो वर्णा व्यवस्थिताः। इमान् वर्णान् जातिरिति वदामः। तांश्चतुरो वर्णानधिकृत्य विषयाश्शास्त्रेषूल्लिख्यन्ते, एकैकवर्णस्यापि प्रत्येकं कर्माणि प्रविभक्तान्युच्यन्ते। एकस्य कर्मापरः कर्तुं नार्हति। एकैकस्य बहुविधानि नियन्त्रणानि वर्तन्ते। एकः कृषीवलः पञ्चकच्छं परिदधानो यज्ञोपवीतं पवित्रं च धारयन् यदि समागच्छेत्, अस्माकमाक्रोशो भवति। अत्यन्तमत्यतिष्ठदिति च वदामः। ब्राह्मणो धूमपानं पिबन्, पञ्चकच्छमपरिदधानो यज्ञोपवीतमधारयंश्च यद्यागच्छति, तमयोग्य इति वदामः। अन्त्यजः कृषीवलश्च सुरां पिबति चेत्, तावत् न कुप्यामः, ब्राह्मणः पिबति चेत्, जातितो भ्रंशयामः। एतावत्यो जातयोऽप्येकमेव मतमात्मनो मन्यन्ते चेदपि, यद्येकस्य कर्म समीचीनम् अथापि कोपः समापतति, यद्यसत् कर्म, तथापि कोप आयाति; यदि ब्राह्मणो लाङ्गलं गृहीत्वा कर्षति, न सदाचार इति परिहसामः। यद्यन्त्यजो वेदमधीते, कालो दुष्ट इति न्यूनतां वदामः। एवमेकस्मिन्नेव मते बहुविधा भेदा वर्तन्ते। परस्परं सहोपविश्य न भोक्तुमर्हामः, एकां जातिं न स्प्रष्टुमर्हामः; कश्चन निकषाऽपि न समागच्छेत्, एकस्मिन्नेव गृहे न सह वस्तुमर्हामः, संकरविवाहं न कर्तुमर्हामः, एकेन कृतमपरो न कर्तुमर्हति, इत्येवं यावन्तः कियन्तोऽपि भेदा वर्तन्ते। चत्वारो वर्णा इति तु नाममात्रेणैव, एकैकस्मिन्नपि सहस्रशो विभागा वर्तन्ते। इतोऽपि बहवो विभागा उद्यन्त एव वर्तन्ते। एवमिदं मतं विचित्रमस्ति। पूर्वं कदाचन सर्वत्र लोकेष्विदमेकमेव मतमासीदित्यवदम्। तादृशे महनीये मते

इत्थं परस्परं विरुद्धास्सन्दर्भा बहवो वर्तन्ते। अपरेष्वपि मतेषु विधयो निषेधाश्च वर्तन्ते, परं तु तेषु मतेषु विद्यमानानां सर्वेषामेकविधा एव विधय एकविधा एव प्रतिषेधाश्च वर्तन्ते। अस्मासु तु सत्यप्येकस्मिन्नेव मते विधयः प्रतिषेधाश्च बहुविधा वर्तन्ते। यद्येकं कर्म कश्चन करोति, धर्मो भवति। तदेवान्यश्चेत् करोति, अधर्म इति वदामः।

कश्चन महान् एकमाश्चर्यं वदति—वयं सर्वेऽपि म्रियामह इति न चित्रम्। अस्मात् शरीराद् विद्यमानेष्वपि नवसु द्वारेषु प्राणोऽनिर्गच्छन्नेवातिष्ठत इति खलु! तदेव महच्चित्रमिति। तद्यथा—

नवद्वारे शरीरेऽस्मिन्नायं स्रवति सन्ततम्।
जीवतीत्यद्भुतं तत्र गच्छतीति किमद्भुतम्?॥

तद्वद् बहुविधानां विशयानां वैलक्षण्यानां च पात्रमिदं मतं कियतोऽपि कालाद् जीवति खलु! इत्येतत् चिन्तयित्वा बहु चिन्तयितव्यम्।

चण्डालाश्चर्मकाराश्चान्योन्यं वैषम्यं परिपालयन्ति। सर्वत्र भेदः प्रतीयते। देवालयं गतेषु ब्राह्मणोऽर्धमण्टपं यावदेव गन्तुमर्हति। अन्ये बहिः स्थातुमर्हन्ति। केचन ध्वजस्तम्भान्त एव स्थातुमर्हन्तीति वदन्ति। एवमेवास्माकं गृहस्यान्तरपि वैषम्यं वर्तते। केचनाामश्राद्धं कर्तुमर्हन्ति। केचनामश्राद्धमेव कर्तुमर्हन्ति। कानिचन कर्माणि केचन वेदोक्तविधिनैव कर्तुमर्हन्ति। तान्येव कार्याणि यदि केचन वेदोक्तविधिना कुर्वन्ति, हानिर्भवेत्। वेदस्य त्यागे केषांचन पापम्, वेदस्योच्चारणे केषांचन पापम्, एतावन्तो विभेदा वैषम्याणि च कुतो वर्तन्ते?

एतान् विषयान् सर्वान् वदामः, इत्येवावमान इति मन्यामहे; एते यदि समूलं नश्यन्ति, समीचीनमिति च मन्महे। एतानि वैषम्याणि बहव उत्कृष्टाश्चाशंसायन्त, तादृशस्यास्मदीयस्य मतस्यायं कलङ्क एवेति केचन वदन्ति। यदि सम्यक् समीक्ष्यते, सर्वत्रैवमेव वैषम्यं वर्तते। समीचीनोंऽश एकोऽपि नास्तीत्यपि कदाचन प्रतिभाति। इत्थं बहूनामेषु विषयेषु मनो घुरुघुरायते। केचन यत्किंचिद् विज्ञाय स्वयं समादधते।

कदाचन केषुचनैवं विभेदान् निदर्श्य क्रियासमभिव्याहारेण वदत्स्वस्माकं मनोऽतीव दुःख्यति। केचन तैरेव मिलन्ति। तथापि स्वाचरणं परित्यक्तुं न मनो धृष्णोति। चण्डालमारभ्य यदि स्वीयसमुदाचारः परित्यक्तव्यः, परिश्राम्यति। यदि तादृशान् सर्वान् विषयानालोचयामः न किमपि प्रतिभाति।

अस्माकमेव देशे देशान्तरीया अस्मान् शासते। वयं सर्वेऽपि तत्परतन्त्रा व्यवहरामः। केषुचन देशेषु च तद्देशस्था एव शासते। अस्माकं परिस्थितिम् सर्वेऽपि राजनीतिविशारदा दास्यमिति वदन्ति। अस्य दास्यस्य निदानम्—वयमस्मासु काँश्चन नियन्त्र्यादासयाम, इति पापमेवेति वदन्ति। इदं सर्वेऽपि बहुषु स्थानेषु श्रुतवन्त एव स्युः।

अस्मद्देशीया अपरान् बहून् देशान् शुल्ककर्मणो वाणिज्यस्य च कृते गच्छन्ति। तेषु देशेष्वस्मदीयान् तद्देशीया नगरशासनस्थानेषु हूणावसथविभागेषु न वासायानुमन्यन्ते; शकटेष्वपि नारोपयन्ति, आवसथादीन्यपि पृथगेव, तेषाम् संचारायापि पृथगेव स्थानम्, किमस्य निदानम्? वयमस्मासु काँश्चन यदद्रूयकरवाम, तदेव कारणमिति वदन्ति।

तेषु देशेष्वारोहायोग्येषु शकटेषु यदि वयमारोहामः, तेऽस्मान् ताडयन्ति। तदेव तस्य प्रायश्चित्तम्। परं त्वस्माकं ग्रामेऽस्मास्वनुष्ठाननिष्ठाः स्वारोहयोग्ये शकटे यदि तदयोग्यः कश्चनारोहति, स्वयमुपोष्य स्नान्ति। पूर्वोक्तेषु तेषु देशेष्वपराधिनो दण्ड्यन्ते, अत्र तु एकस्मिन्नपराध्यत्यपरः स्वयमेव शिक्षामङ्गीकरोति।

इदं वैषम्यं क्षुद्रं प्रतिभायात्, तत्त्वमालोचयामश्चेत्, इदमेव महद्वैषम्यम्।

सांप्रतं महत्स्वेवास्माकं धर्मः किञ्चिदनुवर्तते। वयं यदि पक्तुमर्हामः, चुल्यां शुष्कपत्राणि तृणानि च प्रक्षिप्याग्निमुद्बोधयामः। वृष्टिकालो वर्तते, अग्निः शाम्यन्निवावतिष्ठते, केचनैवाग्निकणा अवशिष्यन्ते, किं तैः करिष्यामः? इति न तान् वयं परित्यजामः, वीजयित्वा परिश्रम्य च पुनरपि ज्वलयितुं यतामहे न वा? तथैव वयं पूर्वजानामाचारं धर्मं च

सर्वत्र प्रचारयितुं शक्नुमः, इति मम महती प्रत्याशा। तत एवाहमिदं ब्रवीमि।

अस्माकं मतं यावतः कियतोऽपि युगान् दीर्घं जीवन् समन्वारभते। किमपि मूलमासीदित्येवेदं मतमेतावन्तं कालं प्राणिति। किमपि मतमेतावद्दीर्घायुरासीदिति न जानीमः। अस्माकं मतमहमस्माकं देवालयमिव मन्ये। अस्माकं देवालया अन्येषां देवालया इव न न स्वच्छा वर्तन्ते। अन्येषां देवालयास्तु सुधालिप्ताः स्वच्छा रक्ष्यन्ते। अस्माकं देवालये तूद्भिज्जानां कक्षवृक्षादीनां संख्यैव नास्ति। सर्वानपि संवहन्तोऽस्माकं देवालयास्तिष्ठन्ति। मतान्तरावलम्बिनां देवालयास्तु प्रतिद्वित्रिवर्षं सकृत् पुनरनुद्धृता एकं क्षणमपि नावतिष्ठन्ते। अस्माकं देवालयाः शिलाभिर्निरमीयन्त। बहुसहस्रवत्सरेभ्यः प्रागस्माकं पूर्वजाः प्रबलं मूलस्थानमस्थापयन्। तत एवास्मदीया देवालया दीर्घं श्वसन्ति। वयं यावतः कियतोऽपि प्रतिकूलान् कुर्महे, बहूनि दुष्कर्माणि कुर्महे, अपचारान् कुर्मः, एतावतोऽपि सहमानोऽस्माकं देवालयस्तिष्ठति। लोकेषु पुराणानि देवमन्दिराणि भारतवर्ष एव वर्तन्त इति सर्वेऽपि ब्रुवते। आङ्गलदेशाद् अस्मदीयमन्दिराणां प्रतिकृतीर्ग्रहीतुं बहव आगच्छन्ति। प्रतिक्षणं समापतत्स्वपि समूलनाशकारणेषु तान्यविनष्टान्येव तिष्ठन्ति। तानि तोडयामो वा, तदपि दुःसाधमेव। निर्मातुं यावदश्राम्याम, तावत् तोडयितुमपि परिश्रमितुमर्हामः।

अस्माकं मतमप्येवमेव वर्तते। अस्माभिरज्ञातमेव किमप्येकमिदं धारयत् तिष्ठति। सत्स्वपि यावत्सु कियत्सु वैषम्येषु, इदमेव मतमविनष्टं तिष्ठति। त्रिंशद्वर्षान् यावत् 'सर्वमेकीभावमर्हति, सर्वमेकीभावमर्हती'ति वार्त्तैव सर्वत्र वर्तते।

कश्चन राजाऽस्ति, तस्य बहवः प्रजाः। एकं ब्राह्मणकुटुम्बमस्ति। तत्र कुटुम्बे ज्येष्ठोऽनुज इति द्वौ पुरुषौ, ज्येष्ठो वैदिकः, शास्त्री वेदाध्येता। महाप्रभो भवतः कीर्तिस्सर्वतो वितायते, भवतो दातृत्वमपेक्ष्याहं समागमम्,

इति स्तुवन् बहुभ्यः प्रभुभ्यो धनमाददानो जीवति। अनया वृत्या तस्य पूर्णं धनं लभ्यते। वैदिक इति नातिव्ययते। तस्य सोदर आङ्गलभाषामपठत्। उपाधिकरणिकं कर्म करोति। आङ्गलभाषापाठनेन व्ययप्रकारान् सम्यगजानात्। अलंकर्तव्यम्, समीचीनं वस्त्रमपेक्षितम्, गृहं महत् स्यात्, इति व्ययते। चिकित्सकानां धनं दत्त्वौषधं सेवते। एवं व्ययेनास्य धनं न संचीयते। 'अस्मज्ज्येष्ठभ्रातॄणां परं कथं धनं संचीयते' इति सोऽचिन्तयत्। "अस्मज्ज्येष्ठभ्रातेव वयमपि राज्ञः प्रजा एव खलु! कुतो वयमपि स इव कर्तुं नार्हामः? ततोऽप्यस्माकं वाक्प्रभावोऽधिको वर्तते" इत्यालोच्यायमप्यादानवृत्तिं कर्तुमारभत। इदमुत्तमाधिकारिणां ज्ञातम्। द्रागित्येव स्वकर्मतो व्यरमयन्। अयमुपरितनाधिकारिषु निर्णयशोधनार्थं प्रार्थयत। 'वयमुभयेऽप्येकस्यैव राज्ञः प्रजाः खलु। ममैको विधिः, तस्यापरो विधिर्वे'त्ययमपृच्छत्।

अस्य प्रश्नस्यास्मदीयशास्त्रराज्य एव समुचितमुत्तरमस्ति। अयन्त्वपृच्छत् ख्रैष्टानां राज्ये। ख्रैष्टास्तु सर्वेषामेको विधिरित्युक्तवन्तोऽपि नात्र विषये तथाऽऽचरितुं पारयन्ति, प्रकारान्तरेणैव कर्तुमर्हन्ति। तेषां मतेषु दशाऽऽज्ञास्सर्वेषामपि समाना एव खलु! लोकयात्रायां परं न समान एव प्रकारः, इति कथं निषेधन्ति?

तेषां मतं केषुचन नियन्त्रणेष्वन्तर्गच्छति। अस्माकं मतस्येयमेव मर्यादेति न शक्यते वक्तुम्। इदमेव शास्त्रमिति न ज्ञायते। तेषु शास्त्रेषु किमुक्तमस्तीत्यपि न ज्ञायते। आशौचेन समागच्छति चेत्, न स्प्रष्टुं योग्यमिति वदामः। अन्त्यज आगच्छति चेत्, दूरं गच्छेति वदामः। एतत्सदृक्षाण्येव वयं वक्तुं जानीमः।

लोकं व्याप्य सर्वाणि मतान्येवं विषमाणि यदि स्युः न हीदं दुष्टमिति न प्रतिभायात्। अपरेषु सर्वेषु मतेष्वेकया प्रणाल्या धर्ममाचारयत्स्वस्माकं मतमेवैवं वर्तते, इत्येव दुष्टमिति प्रतिभाति। तेषां मतानामेवं स्थितिरेवास्मान् निर्दिश्य दोषमिव वहति।

स्यादेतत् । मतं नाम किम् ? आत्मन उत्तरणार्थं यो मार्गः, स एव धर्मः । स एव मतमिति कथ्यते ।

शरीरस्यायं व्याधिरुदितेति तां परासितुमिदमेव भेषजमिति भिषगेव जानाति । विना व्याधिं शरीरं रक्षति वैद्यो नाम । शरीरं वर्तते, इत्येव व्याधिराविरस्ति । यद्यस्माकं शरीरमेव नाविर्भवेद् व्याधिरेव नोपेयात् । व्याधेरावसथः कारणं च शरीरमेव, तस्यानुदयेऽस्ति कश्चन मार्गः । तं मार्गमुपदिशन् वैद्यो मदीयं वचनं विश्वसिहीति ब्रूते । स एव धर्मशास्त्रकारः । तेषु कस्यचन मनुरिति नाम । धर्मशास्त्रकारं भिषगिति न केवलमहं ब्रवीमि यत् खलु मनुरवदत्, तदेवौषधमिति वेदोऽपि ब्रूते—

"यद्वै किञ्चन मनुरवदत् तद् भेषजमि"ति तैत्तिरीयसंहितायाम् । भेषजं नामौषधमित्यर्थः । शरीरस्याजन्मार्थमौषधं धर्मशास्त्रेषूच्यते ।

वैद्यं दृष्ट्वा वयम्—"तस्यैकविधमौषधम्, ममापरविधमौषधमिति कुतः ? तद्ग्रामीणो भिषगिव कथं न कर्तुमर्हसि ।" इति चेत् पृच्छामः ।

—"तूष्णीं भव किमपि त्वं न जानासि इति स प्रतिवदति । सर्वस्य जलमेवौषधमिति कश्चन वक्ति । तदेकं प्रस्थानम् । स्यान्नाम तत् । केरलदेशे नीवारसेक इति वदन्ति । तस्यातीव कठिनानि पथ्यान्यपेक्ष्यन्ते । वैद्यो यथा वदति, तथास्माकं पथ्येनावस्थानमावश्यकमेव । एकस्य वैद्यस्यैव यदि व्याधिरागच्छति, तदा सोऽपरस्य वैद्यस्य वचनानुसारमौषधं सेवते । यदि शरीरचिकित्सायामेवैवम्, आत्मचिकित्सायां कियान् विश्वासः, तद्वैद्ये कियती भक्तिश्चापेक्ष्यते ?

अपरेषु मतेषु विद्यमाना विधयः सर्वसाधारणाः । अस्मास्वपि तथा साधारणा विधयः सन्ति । तान् साधारणधर्माः, सामान्यधर्मा इति च वदामः । सामान्यधर्मान् सर्व एव कर्तुमर्हन्ति, धर्मशास्त्रेषु सामान्यधर्मा उच्यन्ते । आत्मन उदितो व्याधिः शरीरम् । तस्य आत्मव्याधेश्चिकित्सास्थानेषु धर्मशास्त्रेषु सर्वेषां रोगिणां साधारणानि कानिचन पथ्यान्युच्यन्ते । तथा वदतस्त्वात्मचिकित्सकेषु मनुर्नाम महान् वैद्यः ।

अहिंसा सत्यमस्तेयं शौचमात्मविनिग्रहः ।
एतान् धर्मान् समासेन चातुर्वर्ण्येऽब्रवीन्मनुः ॥

इति मनुस्मृतौ दशमाध्याये त्रिषष्टितम एकः श्लोकः। अत्र चत्वारो वर्णा इत्युक्तेऽपि व्याख्यातार एतस्य सर्वा जातय इति व्याचक्षते। केचन वेदे चतस्र एव जातयो वर्तन्त इति प्रत्याचक्षते। तत् न सत्यम्। धर्मशास्त्रेषु चोक्ता जातयः सर्वाः परमिदानीं न दृश्यन्ते। यजुर्वेदे तृतीयाष्टके तुरीयप्रश्ने नरमेधप्रकरणे नरमेधयज्ञमधिकृत्योच्यते। नरमेधो नाम मनुजं पशुं कृत्वा क्रियमाणं कर्म। स यागोऽस्मिन युगे न कर्तुं योग्य इति धर्मशास्त्रे निवर्त्यते। तस्य नरमेधयागस्य वर्णनप्रसङ्गेऽस्या अस्या देवताया भयमयं मनुष्यः पशुर्भवितुमर्हतीत्युच्यते। अत्र मनुष्यजातिषु बह्वो जातय उल्लिख्यन्ते।

प्रधानाश्चत्वारो वर्णाः। एतेषु केचन संकटविवाहाः शास्त्रैरेवानुमन्यन्ते। केचन वार्यन्ते। अनुमतिमनुसृत्य मेलनेनोत्पन्ना जातयोऽनुलोमा नाम। विधिमुल्लङ्घ्य तु जनिताः प्रतिलोमाः। प्रतिलोमानामेवाशौचं प्रतिपाद्यते। तथोत्पन्नानां बहूनामपि जातीनां पृथक् पृथग् वृत्तीरपि व्यवास्थापयन्। एतल्लोकोपयोगायैव ता वृत्तयो व्यभज्यन्त। आत्मक्षेमाय तेषामुचितान मार्गान धर्मशास्त्राणि वर्णयन्ति।

सप्तस्वरा बहुधा प्रस्तारिताः यथा द्विसप्ततिवाद्यनिदानानि अपरा रागिण्यश्चाभवन, चत्वारो वर्णाः परस्परमिश्रणेन तथैव जातयो बह्वो ऽवर्धन्त। एतावन्तो विभागास्तदुचिताश्च धर्माः कर्मकाण्डेषूच्यन्ते।

ज्ञानकाण्डे—यदि कांचनोन्नतामैक्यदशां नाम प्राप्नुमः, वेदोऽवेदो भवति, देवा अदेवा भवन्तीत्युच्यते, 'कूजा' पञ्चपात्री घटः कलसीत्यादिषु विद्यमानमुदकं तटाकं नीत्वा यदि संयुनज्मः, विना भेदमेकरूपीं भवति। तदानीं पञ्चपात्रीप्रभृतिविभेदा न दृश्यन्ते। पञ्चपात्रीप्रभृतीनीव दृश्यमानानि शरीराणि। जलसदृक्षमन्तःस्थं विज्ञानम्। तटाकसदृशं परमं वस्तु या नामापरिच्छिन्ना संवित्। सति संविदैकीभावे भेदाः क्षीयन्ते।

ज्ञानावस्थायां वेदोऽवेदो भवतीत्युपनिषद् वदति। तस्यामुन्नतायां दशायां ब्राह्मणोऽब्राह्मणो भवति, चण्डालोऽचण्डालो भवतीति स एव वेदो वदति।

पूर्वं मयोक्तायां मनुस्मृतौ साधारणधर्मा बहव उच्यन्ते।

सत्यं नाम कश्चन महान स्वधर्मः, नानृतं वदेत्। मातरि भक्तिः, पितरि भक्तिः गुरौ भक्तिः, देवे भक्तिरित्यादिन्यावश्यकानि। परेषामस्मत्साध्यमुपकारं कर्तुमर्हामः। इन्द्रियक्षुण्णमार्गेणागत्वा तानि निग्रहीतुमर्हामः। अस्माकं यावदपेक्षितं विनियुज्यावशिष्टं परेषां कृते विनियोक्तुमर्हामः। इमानि सत्यम्, ब्रह्मचर्यम्, अहिंसा, अस्तेयम्, अपरिग्रह इति नाम्ना व्यवह्रियन्ते। अस्माकं वस्त्रमपेक्षितं चेत्, रूप्यकद्वयेन क्रय्ये वस्त्रे विद्यमाने दशरूप्यरेकं वस्त्रं न विक्रेतव्यम्, तद् रूप्यद्वयक्रय्यं वस्त्रमात्मने विक्रीय चतुर्भ्यो रूप्यकद्वयक्रय्यवस्त्राणि विक्रीय देयानि। वयमतिमूल्यान्यन्नपानादीन्युपयुञ्मः इत्यधिको व्ययो भवति। तेनैव व्ययेन गोधूमयवागूं पक्त्वा वयमप्युपयुज्यान्येभ्योऽपि दातुमर्हामः। एवमाचरणमेव परिहार इति कथ्यते।

एतान्यतिरिच्य विशेषधर्मा इति केचन वर्तन्ते। ईश्वरोऽस्मान यस्यां जातौ, यस्मिन कुटुम्बे, यस्मिन् देशे यस्यामवस्थायामजनयत्, तदर्थं केचन धर्मा वर्तन्ते। तानेव विशेषधर्मा इति वदन्ति। ब्राह्मणोऽजायत, इति तेन कर्तव्यानि कानिचन कर्माणि वर्तन्ते, चण्डालोऽजायत, इति तेन कर्तव्यानि कानिचन कर्माणि सन्ति। तानि वर्णधर्मा इति वर्ण्यन्ते। साधारणधर्मान विहायैकैकस्याधिकानि कानिचन कर्माणि वर्तन्ते। तेषां धर्माणां कृते तेषां कानिचन सौकर्याण्युक्तानि सन्ति। सर्वेषां सर्वाणि साधारणानि, इति चेत्, क्लेश एवाधिकः स्यात्। मयि केनचिद् भाषमाणे सति काचन स्त्री दर्शनार्थमागच्छत्। द्वारपालकोऽन्तर्न गन्तुं शक्यमित्यवदत्। तेष्वन्तर्गतेषु कथमहं गन्तुं न पारयामि। जानपदसभास्तारा:

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| March, 1938. | १८५९-शकीये फाल्गुने २०श-वर्षस्य १०म-संख्या | Vol. XX, No. 11 |
|---|---|---|


## प्रशान्तरत्नाकरम्

[ श्रीकालीपदतर्काचार्यप्रणीतम् ]

ब्रवीषि । भद्र, नूनं न जानासि, कीदृशं हृदयं दुःसहदुःखभारेण भूमौ विचेष्टमानान् स्वपरिजनानवलोकयतां दीनानाम्, नूनं न जानासि, कीदृशं हृदयं पदे पदे धनमदमत्तैः पुरुषैः सुतरामवज्ञया परिताप्यमानानां निर्धनानाम्, नूनं नावधारयसि, क्षणे क्षणे काम्यप्रतिघातकारिणा दारिद्र्येण निष्करुणं निष्पिष्यमाणानां हृदयवैक्लव्यं मादृशानाम् ! भद्र, सन्ति तस्कराणामपि स्वजनाः, ते क्षुधया तृष्णया च परिपीड्यमानाः स्वयं दुःखं प्रतिकर्तुमक्षमास्तानेव प्रतीकारं याचन्ते, तेषामेव स्मरन्ति, तेषामेव च पन्थानमाशाबद्धहृदः सोत्कण्ठाः समुदीक्षन्ते, तत् कथय, स्वजनपोषणस्य गत्यन्तरमनीक्षमाणानां तेषां का गतिः साहसवृत्तिसमाश्रयणादन्या । तदविचारतो नैवमेतानधिक्षेप्तुमर्हसि ।

रत्ना—( मुग्ध इव अश्रु मुञ्चन् ) भद्र, अधिक्षेपेण अपराद्धोऽस्मि, तदविजानतो मे क्षन्तुमर्हसि । ( स्वगतं ) तत् किं ममापि स्वजनदुःखनिर्वापणाय सैव गतिः ?

पुरुषः—भद्र, यदि प्रत्येषि, किञ्चित् कथयितुमिच्छामि।

रत्ना—कथय,

पुरुष—एवं कथयामि, यदिदानीमेकाकिन्या अपि गच्छन्त्या मातुरभयमेव पश्यामि।

रत्ना—कथमिव ?

पुरुषः—अस्त्यत्र प्रान्ते तस्करवर्गः, स ममव वशे वर्तते। तद् यदि मातुरस्याः पथि गच्छन्त्याः कश्चित्तस्करः पन्थानमभिरुन्ध्यात् तदा 'वीरबलं स्मर' इति वक्तव्यम्, एवं किल दासजन इवासौ मातुरादेशमनुवर्तिष्यते। तदेवं मयि क्रियतां प्रत्ययः।

रत्ना—कथं वीरबलो ननु भवानेव ? यस्य नामश्रवणेन परितः परिकम्पन्ते जानपदाः ?

पुरुषः—अथकिम् !

स्त्री—आम् एष वीरबलस्तस्कराणां नायकः ?

रत्ना—अम्ब, एवं क्रियताम्, एष वीरबलो लब्धोपशमः कथयति, अलमत्र अन्यथा मत्वा। विपदि यथोपदेशं कुर्वीथाः।

स्त्री—अहो, निराबाधास्मि, तदिदानीं निःशङ्का गच्छामि।

( निष्क्रान्ता )

रत्ना—गता खलु जननी ! भद्र, वीरबल, आर्यायामस्यां सहृशतया मातृसमुदाचारेण सम्बन्धवानसि, तदिदानीं समासेन भवतो वृत्तं समाकर्णयितुमिच्छामि।

पुरुषः—भद्र, रत्नाकर, भवतः शौर्यं साहसं निपुणतां लोकोत्तरमौदार्यं विलक्षणञ्च कलेवरसंस्थानमीक्षमाणः परतन्त्रीकृतोऽस्मि प्रेमविस्मयाभ्याम्। तदाकर्णय यावत् समासेन कथयामि। अनन्तरितं शात्रववृत्तं विस्मृत्य कृपया श्रोतुमर्हसि।

रत्ना—भद्र, वीरबल, त्वयि निष्ठुरमनुतिष्ठता मयापि सुमहद् वैरमनुष्ठितं तत् त्वमपि विस्मर।

पुरुषः—मया तु तदेव विस्मृतं तत्, यदा स्वस्य दोषो विज्ञातः प्रणिपातश्च कृतो मातृपादयोः ।

रत्ना—तत् कथय ।

पुरुषः—श्रूयताम्—अस्ति तावदस्मिन्नेव प्रान्ते महेश्वरशैलसन्निहितं ब्रह्मपुरं नाम नगरम् ।

रत्ना—अस्ति, ज्ञायते, किं तत्र ?

पुरुषः—तत्रैव स्थितिमुपेयुषो विष्णुदासनामधेयस्य ब्राह्मणस्याहमेक एव तनयोऽस्मि ।

रत्ना—ततस्ततः ?

पुरुषः—ततश्च भद्र, शैशवं नातिक्रामत एव मे परमस्नेहनिलयस्तातो माञ्च मदीयां दीनां मातरञ्च शोकमहार्णवे निपात्य सहसा कदाचित् स्वर्गमगात् ।

रत्ना—हा कष्टम्, ततस्ततः ?

पुरुषः—ततश्च कियत्कालानन्तरं यौवनमुपगते मयि दारिद्र्ये स्थितापि मे जननी एकाकितया महत् कष्टमनुभवन्ती कुलवतीं कामपि बालामनपचितलावण्यां स्नुषात्वेन गृहीतवती, अहमनिच्छन्नपि मातृभक्त्या तस्या विरोधी नाभूवम् ।

रत्ना—हा धिक् निर्विचारमिदमनुष्ठितम् । ततस्ततः ?

पुरुषः—ततश्च क्रमेण राज्ये कठोरदुर्भिक्षेण पदमकारि, येन भिक्षाप्राप्तिरपि विघटिता बभूव । तदा कदाचिदनशनेन कदाचिदर्धाशनेन कदाचित् पञ्चषदिवसानन्तरमेकाहारेण वा प्रियाया मे, अहह ! प्रियाया मे शरीरे विषमो ज्वरः प्रादुर्बभूव । महताऽनुनयेन प्रवर्तिता अपि महान्तो वैद्या न तस्य विषमज्वरस्य सान्निपातिकस्य प्रशमं कर्तुमक्षमन्त । हा हा ! गता ! गता खलु सा ! अनाहारेण क्लिष्टा सती सा लता विशुष्का ! हा हा ! प्रिया मे मदिरा भस्मतां नीता हुताशनेन । अनशनेन ज्वरप्रकोपेण च कृशीकृता सा क्षणेनैव भस्मतां नीता ! ममैवाधन्यस्य समपेक्षितभोज्य-

प्रतिपादनशक्तिशून्यतया अभिमानेनेव मामनपेक्ष्य हा हा मदिरा मे चिता-वह्निज्वालया आत्मानं भस्मतां नीतवती! तत्स्मृतिरद्यापि कुकूलाग्निरिव प्रतिमुहूर्तमेव मे स्वान्तं निष्ठुरं दहति। हा हा मदिरा मे गता, क्वापि चिराय गता!

रत्ना—वयस्य, वीरबल, अतीते धैर्यमवलम्बस्व। कथं नाम तथा वैक्लव्येन वृत्तं विवृण्वन् ममापि लोकोत्तरं मानसोद्वेगं वर्द्धयसि? तत् कियानस्ति वृत्तशेषः?

पुरुषः—आम् अस्ति स्वल्पपरिणाहोऽपि गुर्वर्थो वाक्यशेषः! श्रूयताम्।

रत्ना—कथय।

पुरुषः—वयस्य, किं वा अतः परं कथयामि, तदा तस्याः प्रियतमायाः स्नुषायाः स्मरन्ती तदर्थमनवरतं शोकं वहन्ती, तामेव नक्तन्दिवमभिलपन्ती अनाहारक्षीणकाया मातापि मे स्वल्पेनैव कालेन शय्यामाश्रितवती। तदा मम शून्यतामगात् समग्रं जगत्। इतो हृदयदयिताया अनाहारेण काल-कवलं प्रविष्टाया दारुणो दुःखमयो विप्रयोगः, अन्यतश्च मृत्युवक्त्र-मनुप्रविशन्त्याः सुखे वा दुःखे वा ममैकसमालम्बनभूताया अम्बायाः कथमपि जीवनरक्षणचिन्ता! तथा अनशनेन शोकेन गभीरचिन्तया च स्वशरीरस्य प्राणहरं दौर्बल्यम्। किं करोमि, क्व गच्छामि, कुतो वा भैक्ष्यमासादयिष्ये, किं वा शरणं व्रजामि इत्येतानि विनिर्णेतुमशक्नुवन् मूर्च्छित इव उन्मत्त इव भूताविष्ट इव च व्यचरम्। बान्धवा भिक्षिताः, धनिकाः प्रतिद्वारमुपेत्य मातृजीवनाय याचिताः, सर्व एव ते हा हा सावज्ञं प्रत्याख्यातवन्तः!

रत्ना—अहह! मामपि तदा भिक्षमाणमेवमेव धनिकाः सन्निकृष्टा बान्धवाश्च सावज्ञं प्रत्याख्यातवन्तः! तदेष व्यसनसब्रह्मचारी मया समासा-दितः। भद्र, वीरबल, ततस्ततः?

पुरुषः—ततश्च मातृप्राणरक्षणाय गत्यन्तरमनीक्षमाणः—

विभिन्दन् मर्यादां कुलमगणयन्नुन्नततमं

स्वमातुः प्राणार्थं कतिचन दधद् बालसुहृदः ।
रहश्चौर्यं कृत्वा धनमुपगतो मातरमहं
व्यथां सुस्थां तस्मात् प्रभृति कलये साहसमिदम् ॥

रत्ना—अहो ! साम्प्रतं वीरबलस्य सुकृतदुष्कृतयोः सन्धौ वर्त्तमानतया अस्य कृत्यं प्रकृष्टमपकृष्टं वेति महति संशये पतितोऽस्मि ।

तथाहि—एकतो दुष्कृतं चौर्यमन्यतो मातृरक्षणम् ।
सन्धौ वीरबलो भाति लोकालोक इवाचलः ॥

अये, ममापि गेहे वृद्धौ पितरौ बालस्तनयः, साध्वी प्राणसमा वनिता इति सर्व एवैते ममैव पन्थानमुदीक्षमाणाः कथमपि जीवनं धारयन्ति, अपि जीवनं धारयन्ति ? वयस्य, वीरबल, अपि जानासि मां निःशेषम् ! वयस्य वीरबल, ममापि दरिद्रब्राह्मणस्य गेहे वृद्धौ पितरौ क्षुधया परिपीड्यमानौ भूमिशय्यामाश्रितौ, ममापि गेहे बालस्तनयः क्षुधाक्लेशेन मूर्च्छितो भूमौ पतितस्तिष्ठति, ममापि गेहे साध्वी वनिता पुत्रमनशनेन मूर्च्छितमपि समुपेक्ष्य दुर्बलान्यङ्गानि वोढुमक्षमा शिथिलितसन्धिबन्धा मृत्युवक्त्रमीक्षते ! वयस्य, यदि जानासि, कथय, कस्तेषां जीवनोपायः ?

मा नाम सूर्येण समं दिनान्ते मद्बान्धवा मृत्युमुखं विशेयुः ।
हा हा कथं तानिह जीवयेयं वयस्य का वा गतिरुच्यतां मे ॥

पुरुषः—वयस्य, रत्नाकर, सम्यग् दृष्टोऽसि, तदलं वैक्लव्येन, अस्त्येव सञ्जीवनोपायः ।

रत्ना—वयस्य, कथय कथय, को नामासौ ?

तदर्थं किमु गन्तव्यं दुरारोहं गिरेः शिरः ।
सागरो वा प्रवेष्टव्यः क्षणो मम युगायते ॥

पुरुषः—वयस्य, रत्नाकर, नैव तदर्थं शैलाग्रं गन्तव्यं नापि सागरः प्रवेष्टव्यः । वयस्य, कण्ठस्थितमपि चामीकरं मोहान्न जानासि !

रत्ना—वयस्य, समुत्कण्ठितोऽस्मि, तदविलम्बितं ब्रूहि ।

पुरुषः—वयस्य, रत्नाकर, किं वा कथितेन,

मारुतस्येव ते शौर्यं कृतान्तस्येव साहसम् ।
सहायं यदि विन्देम तदा करगता गतिः ॥

रत्ना—वयस्य, किमभिप्रेतं भवतः ?

पुरुषः—अस्माकं साहसिकानां वर्गे भवन्तमीश्वरं कर्तुमिच्छामि ।

रत्ना—अहो धिक् ! पातकमिदमतिनिष्ठुरञ्च ।

( ततः प्रविशति शून्यमार्गे गायन्ती नियतिः )

( गीतम् )

स्वजनान् संस्मर दीनान्

जनको मूर्च्छति जननी रोदिति लयमुपयाति विवस्वान् ।
मूर्च्छिततनयं सुविहितविनयं पश्यसि न कथं धीमन् ।
क्षुधया विकलान् परिहृतकुशलान् स्मरसि न कथमिह दारान् ?

( तिरोभूता )

रत्ना—देवि, देवि, कथय कथय, अपि नाम ते समुच्छ्वसन्ति ? अद्यापि समुच्छ्वसन्ति ? ( अदर्शनमभिनीय ) हा कथं लुप्तेव ? सखे वीरबल, भीतोऽस्मि, तदन्यं पन्थानं ब्रूहि ।

पुरुषः—वयस्य, कस्माद् भीतोऽसि ?

रत्ना—धर्मात्—

पुरुषः—किं कृतमेतावत्कालं ते रक्षितेन धर्मेण ?
अपि साहायकं दत्तं तेन बान्धवरक्षणे ?
मुधैव कल्पनासारं सुकृतं बहुमन्यसे ।

रत्ना—आम् एवमिदम् ! वयस्य वीरबल, तथापि भीतोऽस्मि !

पुरुषः—वयस्य, रत्नाकर, किं वा कथयामि, मिथ्यैव त्वं निपुण इत्यभिधीयसे । धिक् ते पातकभीतिं यया क्षुधाजनितेन क्लेशेन परिमूर्च्छितौ पितरौ मूर्च्छितां दयितां कृतान्तस्य कवले प्रविशन्तं प्राणाधिकं पुत्रकञ्च माध्यस्थेन समुपेक्ष्य केवलं वाङ्मात्रेण वात्सल्यमभिनयसि । यद्यस्ति

पुत्रे वात्सल्यम्, यद्यस्ति पित्रोः श्रद्धा, यद्यस्ति च प्राणप्रियायां पत्न्यां प्रणयः, तदा उत्तिष्ठ, दूरे वर्जयित्वा कल्पनामात्रसारात् पातकाद् भीतिं पौरुषेण कृत्ये प्रवर्तस्व, एवमेव समुद्यमिनं त्वां लक्ष्मीरुपेत्य स्वयमभिनन्दिष्यति ! मा तावदद्यापि आलस्यदोषेण मध्यस्थः स्वजनविध्वंसं कार्षीः। तदलं विलम्बेन, अचिरमेव साहसिकानामस्माकमात्मना प्रभुदण्डं गृहीत्वा स्वमनोरथं निर्वर्त्तयेथाः।

रत्ना—वयस्य, वीरबल, परवशः कृतोऽस्मि, तत् क्षणं तिष्ठ, यावदवधारयामि।

पुरुषः—धिक्! अद्यापि क्षणमपेक्षसे? स्वजनानां वदने यदा मृत्युच्छाया पदं करोति, तदापि धर्मभीतः क्षणमपेक्षसे? अहो धिक् तव विवेकशून्यताम्।

रत्ना—अहह! सत्यं सत्यमेव पश्यामि, स्वजनानामाननेषु मृत्युच्छायां पश्यामि। मूढ रत्नाकर, अद्यापि पातकं चिन्तयसि? धिङ्मूर्ख, अपध्वस्तोऽसि।

> प्रत्यक्षं पितरौ सुतः प्रियतमो भार्यानुकूला तथा
> मृत्योर्वक्त्रगताः क्षितौ निपतिता दीर्घं श्वसन्तो यदा।
> दृष्ट्वा हा समुपेक्ष्य मोहवशतोऽदृष्टे दधानो रतिं
> स्वर्गं वाञ्छसि किं चिराय भवतः स्वर्गः स विध्वंसताम्॥

सखे, वीरबल, एष सज्जोऽस्मि, तदुपनय प्रभुदण्डम्।

पुरुषः—( स्वदण्डमुपनीय ) एष प्रभुदण्डः, तद् गृह्यताम्।

रत्ना—( गृहीत्वा ) एष गृह्णामि। नमः सर्वविप्लवकारिणे स्वजनस्नेहाय।

पुरुषः—अहो कृतार्थोऽस्मि।

> रत्नाकरस्य भुजविक्रम-साहसाभ्या-
> मभ्यागतामिव पुरः कलयामि लक्ष्मीम्।

तेनाद्य चौरसमितेः समधिष्ठिताया
लोकोत्तरा धनिकनिग्रहशक्तिरास्ताम् ॥

रत्ना—वयस्य, वीरबल, स्वजनदशामनुस्मृत्य व्याकुलोऽस्मि ।

पुरुषः—सखे, रत्नाकर, शनैः शनैर्मन्त्रय ।

रत्ना—कथमिव ?

पुरुषः—( नेपथ्याभिमुखं दर्शयित्वा ) किं न पश्यसि ? एष कश्चन शाकटिकः सूपतण्डुलाद्युपकरणोपेतं दण्डधारिणा आपणिकेन समधिष्ठितं शकटं वाहयन्नित एवाभिवर्तते, तदत्रैव ते प्राथमिकहस्तरेखापातः कर्तव्यः । एहि यावद् वृक्षान्तरालमाश्रित्य प्रतिपालयावः । इहैव निहिता ते स्वजनानामनशनेन मूर्च्छतां रक्षा । तदलं विलम्बेन, कृत्ये प्रवर्तस्व । शेषं कर्णे कथयिष्यामि ।

रत्ना—एवमस्तु । नमः सर्वविप्लवकारिणे स्वजनस्नेहाय ।

( निष्क्रान्तौ )

( ततः प्रविशति सपरिजनः क्षुधाविकलश्च्यवनः )

च्यवनः—अये, अवसितप्रायो दिवसः ! तथाहि—

दूराद् विहङ्गनिचयः समुपैति नीडं
क्षेत्रात् परापतति धेनुगणः समन्तात् ।
यात्येष संहृतकरो रविरस्तचूडां
शैलाग्रगैरिकरजोभिरिवानुलिप्तः ॥

अद्यापि वत्सो मे रत्नाकरो नागच्छति, न जाने कियति दूरे वत्सो मे कथं वर्तत इति । वत्सस्य कृते क्षुधापरिक्लिष्टानां मुहुर्मुहुः संज्ञाशून्यानामिव भूमौ पततां परिजनानाञ्च कृते सुतरां चिन्ताकुलोऽस्मि ॥ तत् किन्तु खलु वत्सो मे—

गृहे गृहे दीनवचःप्रपञ्चैः सम्प्रार्थ्य हा व्यर्थबहुप्रयासः ।
नायाति लज्जाजडितः स्वगेहं भिक्षार्थमाहो स गतः सुदूरम् ॥

( क्रमशः )

# उपदेशपरम्परा

## वर्णधर्मः

(पूर्वानुवृत्तः)

[ स्वनामधन्यजगद्गुरु-श्रीशङ्कराचार्यश्रीकाञ्चीकामकोटिपीठाधीशानाम् ]

यदाऽन्त्यजानपि देवालयं गन्तुमर्हन्तीति वदन्ति। एतादृशे काले एवं वर्णनमयोग्यम्, अहं गमिष्याम्येवेत्युक्त्वाऽन्तरागच्छति चेत्, किमहं कर्तुं शक्नुयाम्? मय्यनुतिष्ठति, स्वामिनः सर्वेषां साधारणाः खलु? वयं कुतः सांप्रतं न गन्तुमर्हाम इति सर्वेऽप्यन्तः प्रविशन्ति चेत्, कथमहमनुष्ठातुं शक्नुयाम्? शुल्कपत्रदानस्थाने सर्वे प्रविशन्ति चेत्, शुल्कपत्रदाता किं कर्तुं शक्नुयात्? एकैकस्य स्वस्वकृत्यानि कर्तुं कानिचन कानिचन सौकर्याणि भवितुमर्हन्ति। एकस्मिन साधारणे कुटुम्बे एकस्य व्याधिर्भवति चेत्, तस्य कानिचन सौकर्याणि कारयामः। अन्येषामपि तदपेक्षितमिति किमिदं न्याय्यम्? माता रजस्वला वर्तते। एकस्मिन् विविक्ते स्थाने सा वर्तते। तव केवलं कथं विविक्तं स्थानम्? अहमप्यागच्छामीति चेत्, किमिदं न्याय्यं भवति? सर्वेषां साधारणा धर्मा अप्यस्मन्मतेऽनेके वर्तन्ते। स्वकर्तव्यं कर्तुं कानिचन सौकर्याण्यपेक्ष्यन्ते, न वा? वस्तुतस्तानि न सौकर्याणि। तेषामनुबन्धिनं तं विशेषधर्मं तदुचितानि कानिचन सौकर्याणि च सर्वेऽप्यङ्गीकर्तुमर्हन्ति। कुत इति चेत्, ते कुर्वन्ति तानि न केवलं स्वार्थम्, किन्तुसर्वेषां सुखं भवत्वित्येव ते स्वान विशेषधर्माननुतिष्ठन्ति।

हृदये प्रेमैकरस्यं चापेक्षितम्। सह भुज्यत इत्येतावन्मात्रेण नैकरस्यं भवति। एकैकोऽपि स्वस्वकर्माणि कुर्वाणोऽपरेषां कर्माण्यपि यथा सुसंपद्येरन, तथा कुर्वाणश्च मनस्यैकरस्येन स्थातुमर्हति। सह न भुज्यते चेद् द्वेष इति चिन्तनं चिन्त्यमेव। श्वशुरेण स्नुषा न सह भाषते, बहुमन्तुं तथा करोति। कोऽपि द्वेषो वर्तते वा? कंचन यदि किमप्याशौचं बाधते, तेन सह न भुञ्ज्महे, तं न स्पृशामः, ते किं द्वेषो भवति? एतादृशानपि द्वेषमूला इति वदामश्चेत्, वदत्स्वेव कश्चन दोषः स्यात्।

अस्माकं मनःकालुष्येणास्माकं धर्मा दुष्टाः प्रतिभान्ति। यावद्यावद् नियमा अधिकं वर्तन्ते, तावत्तावत् सौकर्यमधिकम्। पथ्यं यदि काठिनं भवेत्, व्याधिः शीघ्रं चिकित्स्यते।

अस्माकं विशेषधर्मा विनापि राजानं देशः साधुः स्यादित्युपायुज्यन्त। ग्रामपञ्चायतनेषु जातिनियमा यावद्यावत् क्षीयन्ते, तावत्तावद् दुराचारा अधिकं भवन्ति, तेन कलहस्समुदेति। जातिनियन्त्रणे स्थिते दुराचाराद् भीतिरासीत्। जातितो भ्रंशयेयुरित्यतस्सा भीतिरुदियात्। तस्मिन् क्षीणे तु अपराधा अधिकं भवन्ति। जातीयनियन्त्रणेन अपराधा एव नावासरन्, राजा स्वदण्डमधिकर्तुं नापेक्ष्यत। तस्य कर्मोपर्युपरि श्रेयोवर्धनमेवासीत्। सांप्रतमियन्त आरक्षिकाः, सेनाः, कारागृहाणीत्यादीनि वर्तन्त इत्यस्य कारणं किम्? जातीयनियन्त्रणानां क्षयः, वर्णाश्रमधर्मेषु न्यूनता चैव।

अपरेषु मतेषु सर्वेषामेक एव धर्मो वर्तते! तत एव तान्यत्युन्नतां दशां प्राप्नुवन्निति वयं मन्येमहि, परं तु तानि कदाचन द्रागित्येवोद्गच्छेयुः, कदाचन स्वावसथज्ञानमपि विनाऽधोऽपि गच्छेयुश्चेत्, तदपि स्यात्।

एकः सालवृक्ष आसीत्। तदुपरि काचन क्षुद्रलता झटझटित्युदगच्छत्। कैश्चन मासैः सालवृक्षमत्यगच्छत्। तदा सा क्षुद्रलता—"एतैः कतिभिर्मासैरयं सालवृक्ष एकमप्यङ्गुलं नावर्धत। नायमुपयुक्तः" इत्युक्त्वाऽहसत्। सालवृक्षोऽवादीत्—"अहमुत्पद्य दशसहस्रं क्षुद्रलता अपश्यम्, त्वमेकोत्तरदशसहस्रतमा लता। एकैकेऽप्येवं पृच्छन्ति। अहं किमपि प्रतिवक्तुं न जानामि" इति; एवमेवास्माकं मतमपराणि च मतानि वर्तन्ते।

चरितं पश्यामश्चेत्, अपराणि मतान्यस्माकं देश एकैकस्मिन् समय एकैकं कारणमनुसृत्य प्राचरन्निति जानीमः। दुर्भिक्षावसरे प्रलोभनेन कानिचन मतानि प्रचरन्ति। ततश्च तेषां मूलाधारस्तत्त्वं विनैवाश्रयमसत्कल्पं भवति। युद्धकाल आक्रमणेन कानिचन मतानि समतन्वत। अतिप्रबलो यदि प्रत्यवतिष्ठेत, तदा तान्यपसरेयुरेव। एवं सर्वेषां समानो धर्म

इति मतानि पतन्ति चेत्, समूलमेव पतन्ति। पृथक् पृथग् विभक्ता धर्मा यदि स्युः, ते तेषु परस्परं रक्षन्त एव तिष्ठेयुः। आकाशविमानेषु बाष्पपेटिकामेकामेव न्यवेशयन्। तत्र यद्येकं द्वारमपि भवेत्, सर्वापि पेटिका दुष्येत्। अतोऽनन्तरं बह्वीः पेटिका न्यवेशयन्। एका छिद्रिता चेदपि, अपराः समीचीनाः स्थास्यन्ति। सर्वास्ताः पेटिकाः पृथक् पृथग् वर्तन्ते चेदपि न प्रयोजनम्। सर्वास्समेत्यैकस्मिन्नेव स्थान एकमेवावधारयन्त्यः पृथक् पृथगवतिष्ठेरन्। तद्वत् अस्माकं धर्माः पृथक् पृथग् भवन्ति चेदपि, तेष्वेकं सामरस्यमवतिष्ठेतैव।

एवमेकैकस्य पृथक् पृथग् विभिन्नविभिन्नेषु मतेषु स्थितेष्वपि एतैर्धर्मानुष्ठानैः सर्वेषां समानमेव फलं भवति, समानं बलमपि च भवति। एकं समाजमेकेनैव धर्मेणावतिष्ठस्वेति कश्चन राज्याधिकारी नियमितुं न पारयति। तथा करणे तत् स्थिरं न स्यात्। एकमन्तर्माऽऽगच्छेति चिरं न वारयितुं पारयामः। कश्चन कस्मिंश्चन दिनेऽनाचरणेन स्वयमेव विविक्त एव वर्तते इति, अनेन धर्मेणेहपरलोकयोः कुशलं भवतीति चानादिकालतोऽस्माकं धर्मः स्थिरो वर्तते। मतान्तरवत् सर्वेऽप्येकं धर्ममनुतिष्ठन्ति चेदपि, अज्ञानेनैव तत्तद्वर्णोचितधर्मान् सर्वेऽप्यनुतिष्ठन्ति चेदप्यस्मदीयं मतमेवं दीर्घं जीविष्यति।

एकस्मिन् गृहे चत्वारः सोदरा वर्तन्ते। ज्येष्ठो गृहेऽवतिष्ठमानः पूजयति। अनन्तरो धनस्यायव्ययौ परीक्षते। अपरो गार्ह्याणि वस्तूनि संभरति। अन्तिमः सोदरः क्षेत्रं गत्वा कृषिकार्यं पर्यालोचयति। एवं गृहकृत्यानां पृथक् पृथग् विभज्य निर्वहणं सर्वेषामेव सुखाय। गृहकृत्यान्यपि सम्यग् निरुह्यन्ते। विनैवेवं प्रकारं सर्वे सर्वाणि कार्याणि समीक्षन्ते चेत्, किं प्रयोजनम्? वितथं क्लेश एव स्यात्। कुटुम्बमेव यथावद् न प्रचलेत्। एकैकस्य कृत्यं सर्वेषां सुखं दद्यात्। चातुर्वर्ण्यमप्येवमेव वर्तते। ब्राह्मणः स्वानि कर्माणि करोति सर्वानेवोद्दिश्य। चण्डालस्यापत्यानां कुशलमपि तान्यभिप्रयन्ति। राजा राज्यं करोति सर्वेषामेव कुशलमभि-

लक्ष्य। वैश्यस्य वाणिज्यमपीदृशमेव। एतेन नियमेन लोकव्यवहारास्सु-लभं प्रचलन्ति, कुशलं भवति। अस्य विपर्यये लोकक्षेमोऽपि विपरीयात्। पूजां कर्मानुष्ठानं च कर्तुमर्हा जातिरतीव नियन्त्र्यते। तेन नियमेन सर्वेऽपि फलमनुभवन्ति। अन्ये यद् दूरे तिष्ठन्ति, तत् स्वेषामपि श्रेयो जनयितु-मेव। अस्माभिः क्रियमाणस्य श्राद्धस्य कृते कश्चन निमन्त्रितो ब्राह्मणो यदि शुद्धः समागच्छति, कुतस्त्वं केवलं शुद्धो वर्तसे, अहं त्वां स्पृशेयम्, इति वदन् सन यदि कश्चन तं स्पृशति, कस्य वा हानिः ? उभयोरपि खलु ! नहि।

तस्माद् एक एव धर्मो बहुधा विभज्यत इति बहवो गुणा वर्तन्ते। अस्माकं धर्मः सर्वदाऽमृत एव वर्तते इत्यत्रापि प्रथममिदमेव निदानम्। धर्मेषु विभागोऽप्यपेक्ष्यते, ऐक्यमप्यपेक्ष्यते। सहसैव विभक्ता एव न भवितुमर्हन्ति, अत्यन्तं सहसैवाभेदेनापि स्थातुं न शक्नुवन्ति। केचन सहसैव भेदयितुं प्रयतन्ते, अपरे तु सहसैवाभेदयितुमायतन्ते। एवमुभय-मपि मा भवत्विति धर्मशास्त्राणि वदन्ति। अहं तेषां प्रतिभूभूयाऽऽगच्छम्। अत एव भेदोऽपि माऽस्तु, अभेदोऽपि माऽस्तु, सहसैवोभयमपि न सांप्रत-मिति वदामि।

अस्पर्शनावस्थानं बहुमानमेव सूचयति, न द्वेषम्, अतोऽनेकेषामेकीभूय भोजनं नावश्यकमिति, स्वजातिं परिहाय जात्यन्तरेषु संकीर्णो विवाहोऽपि नावश्यक इति, अन्तरेणापीमे जनतैकमनस्कैव स्यादिति च मुख्या अर्थ-शास्त्रव्यवहारिणो वदन्ति। स्पर्शोऽपि नावश्यक इति त्वहं वदामि। सहभुञ्जानासु सहविवहन्तीषु एकीभूय स्पर्शंस्पर्शं घूर्णंघूर्णं चावतिष्ठ-मानासु च पाश्चात्त्यजातिषु कतिकत्यहमहमिकावादाः कलहाश्च दृश्यन्ते !

कियत्यामपि भेदबुद्धौ यदि वस्तुगत्या प्रेम, शान्तिः समुदियात्, कियत्यप्यैक्ये सति यदि न प्रेम, कलह एवाङ्कुरयेत्। सर्वासु जातिष्वेक-रूपं प्रेमावतिष्ठेत। अस्माकं मातृष्वपत्येषु च यादृक् प्रेमास्माकं वर्तते, तादृशं प्रेम चण्डालेष्वपि स्यात्। कियत्स्वपि क्लेशेषु न प्रेम परिहातु-मर्हामः। तत्तु प्रेम धर्ममार्गाविरुद्धं भवितुमर्हति। दारिद्र्यनिवारणे

वा दुःखनिवारणे वा जात्यन्तरेषु प्रेम न्यस्यास्मच्छक्तिमतिक्रम्य कृत्वापि तत् प्रेम वर्धयितुमर्हामः। अस्माकं बुद्धौ प्रतिभासमानं सर्वं सम्यगेवेति न वक्तुं प्रभूयते। यदेकदा प्रतिभाति, न तदन्यदा प्रतिभाति। ततः शान्ता धीराश्च भूत्वा धर्मं रक्षितुमर्हामः। अद्यैकं वदन्त एव पुनः कालान्तरेऽन्यथाऽन्यद्वदेयुः। सहजग्धिः संकरविवाहश्च नावश्यक इत्याद्य-वदन्नेव। कश्चन स्पर्शोऽपि नावश्यक इति वक्तुं योग्यः समयोऽपि समापतेदपि स्यात्।

नन्दः (चण्डालो जात्या) देवालयं नागमिष्यामीत्यवदत्। ब्राह्मणा अवश्यमागन्तव्यमित्यवदन्। परमेश्वरो नन्दिनमपसार्यात्मानं दर्शयामास। त्रिष्वेतेष्वन्तर्निहितं तत्त्वमेव वर्णाश्रमधर्मो नाम। नन्द एव तं धर्म-मभ्यरक्षदिति वक्तुमर्हामः।

यस्यां कस्यामपि जातौ वस्तुसत् प्रेम यदि स्यात्, शान्तिर्भवेत्। एकग्रामस्य ग्रामान्तरस्य चोपनदमधिकृत्य यदा कलहो भवति, एतद्-ग्रामीणान् चण्डालानारभ्य ब्राह्मणान् यावत् सर्वेऽपि समवयन्ति, एवमेव तस्मिन्नपि ग्रामे समवयन्ति। एतद्ग्रामीणाश्चण्डालास्तद्ग्रामीणाश्च चण्डाला जात्या समाना एव, इति न समवयन्ति। एको ग्राम इत्यैक्य-मेव तत्र कारणम्। एतद्ग्रामस्थश्चण्डालस्तद्ग्रामस्थचण्डालेन युद्धं करोति। सर्वेषां समानं कार्यम्, अतोऽत्र जातिभेदो न समीक्ष्यते। एकैकोऽपि ग्रामाय युध्यते। तथैव मनसोऽप्यैक्यमुदेतुमर्हति।

ब्राह्मणैः क्रियमाणे वैश्वदेवे चण्डालेभ्यो बलिर्देय इति शास्त्रं वदति। तस्मा अयं करोति, अत एकैकस्मिन्नपि प्रेम वर्तत इति प्रतिभाति। प्राचीनकाले ग्रामेषु प्रेमैकमत्यं चावातिष्ठत। काल-देशपरिस्थिति-परिवृत्त्या ग्रामसमुदायोऽपि परावर्तत। धनिका नगरं प्रत्यागच्छन्। तत्रैकैकोऽपि पृथक् पृथग् विना प्रेम वस्तुमारभन्त। ग्रामीणो बन्धः शिथिल्यभवत्। तस्मिन् समये मतान्तरस्थाः प्रविश्योपादिशन्। ततो जातिसमया व्यनश्यन्। ते दारिद्र्यस्याधिक्यावसरे स्वीयं मतं प्राचारयन्।

ग्रामीणा दरिद्रा व्यामुह्यन्त। तेषां मते प्राविशन्। अस्मन्मते प्रविशतां मतान्तरे प्रविशतांश्चैको महान् विशेषो वर्तते, दरिद्रा भृत्यवर्गाश्चास्मान्मताद् मतान्तरं प्रति गच्छन्ति, मतान्तरस्थास्तु प्रायशस्तत्त्वं विचारितवन्त एवास्माकं मते समागच्छन्ति।

प्रविष्टेष्वेव मतान्तरस्थेषु वयमस्मन्मतस्थानभिरक्षितुं प्रयतितुमर्हामः तदा तदकरणेन सांप्रतमैकमत्यस्य न्यूनता समजनि।

पाश्चात्त्यान् मतान्तरस्थान् वयं कुतोऽनुकुर्महे ? गति-परिधानभावनासु त एव नूनमस्माननुकुर्वतामिति सुधीरमस्माकं स्थितावेवावस्थातुमर्हामः। अस्माकं मते सर्वसाधारणतयोक्तान् धर्मान् सम्यगाचरितुमर्हामः। वस्तुसत् प्रेम वर्तते चेत्, क्लेशाः स्वयमेव निवर्तेरन्। विशेषधर्मास्सत्र साधारणस्य मतस्य मूलावष्टम्भाः सन्ति। या कापि राजनीतिर्भवतु, या काप्यवस्था भवतु, तथाप्यस्याकं धर्ममनुष्ठातुमर्हामः। जीवयात्रामुपलभ्य धर्मा अहीयन्त। एवं न परित्यक्तुमर्हामः। आपत्तावपि धर्मे परमेका दृष्टिरपेक्ष्यते, न धर्मानुष्ठानं परित्यक्तुमर्हामः। एकैकस्य स्वस्ववर्णोचितमनुष्ठानं सामान्यतो देशस्यैव क्षेममादध्यात्। ब्राह्मणाः स्नानं सन्ध्यां पूजाप्रभृतीनि च चण्डालानामपि कुशलार्थेऽनुष्ठातुमर्हन्ति। अस्मन्मतरक्षणस्य शास्त्रमेव मार्गं दर्शयति। दुःखस्य प्रेमैव शमनम्। वस्तुगत्याऽस्मासु यदि प्रेम स्यात्, वयं जयं लभेमहि। परस्परसाहाय्यं प्रेम्णा कर्तुमर्हामः। कुत्रापि काले प्रेम न न्यूनतामर्हति। चिन्तामपसारयितुमर्हामः। कस्मिन्नपि विपरीतसंभवे न प्रेम परित्यक्तुमर्हामः। अस्मदीयान् समीचीनान् प्रयत्नान् कुर्वन्त एव स्थातुमर्हामः। परेषामुपकर्तुमर्हामः।

घूर्णितेऽपि लोकेऽस्मदीयानि कर्तव्यानि कुर्वाणा विनाभीति प्रेम्णा साधारणधर्मान् सुरक्षन्तो यथासंभवं विशेषधर्मान् रक्षितुमर्हामः। तदुचितां शक्तिं भगवान् वितरतात्।

———

# सुरभारतीदशाविमर्शः

( पौषसञ्चिकातोऽनुवृत्तः )

[ निबन्धकः—श्रीवटुकनाथभट्टाचार्यः एम्. ए. बिएल्. ]

उपक्रान्ते गृहदाहे तन्निर्वापनाय सर्वैरपि स्त्री-पुरुष-बालयुववृद्धनिर्विशेषं प्रयतितव्यम्। एवं बुद्ध्या अकिञ्चनत्वमात्मनोऽनुभूयापि प्रयस्यते मया काँश्चनोपायान् निर्देष्टुम्। धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः सिद्धमेवैतद् वचनम्। जीवनेन साकं न केवलं जीविकायाः, परन्तु सर्वस्यैव वर्तते पदार्थस्याच्छेद्यः संबन्धः। नोद्भवन्ति, न वर्द्धन्ते वा यथोद्भिदः क्षितिसंसर्गविरहिताः न वा जीवन्ति, तथैव परिहाय प्रयोजनानि मनुजानां न प्रभवन्ति चतुर्दश विद्याः, चतुःषष्टिकला वा नाप्नुवन्ति परिपोषम्। आकृष्य भूमितो रसान् युज्यन्ते पादपाः शाखाप्रशाखापल्लवपुष्पफलैः। एवं वाङ्मयमपि प्राणान् आहरति प्राणवद्भ्यः सामाजिकजीवनिवहेभ्यः, ततश्च पुष्णाति समृद्धिं श्रियञ्च। उन्मूलिताः पुनस्तरवः शुष्यन्ति, जीर्यन्ति, विनाशमुपयन्ति। सामाजिकानां प्रयोजनान्येव वाङ्मयस्य मूलानि। तेषामन्तः प्रस्फुरन्तो भावा एव काण्डः। भाषान्तरेण चेत्तानि प्रयोजनानि सिद्ध्येयुः भावाश्च ते सामग्र्येण प्रकाश्येरन् तदा संस्कृतभाषा निरवकाशेव शीर्येत, जीर्येत च—को वा विस्मयोऽत्र संगच्छते?

सामाजिकजीवनेन साकं संस्कृतविद्यायाः संयोगं द्रढयितुं सर्वथा कार्यः प्रयत्नः—प्रथमोऽयमुपाय इति कृत्वा। कथं पुनरर्हति प्रयोगं तदुपायम् इत्यत्र विद्वद्वर्याणाम् अवधानं प्रार्थ्यते। नास्माकं पूर्वजैः कृतचर एवंरूपः प्रयत्न इति नैव सम्भावनीयम्। वेदोऽखिलो धर्ममूलमिति सुविदितमेव। गृह्यसूत्रेभ्यो धर्मसूत्रेभ्यश्च समध्याय यथाप्रयोजनं विधिनिषेधान् स्मृत्वा च तान् मन्वत्रि-विष्णु-हारीत-याज्ञवल्क्यादयो महर्षयः प्रणिन्युर्विंशसंहिताः स्मृतिशास्त्रस्य मूलभूताः। अथ पुनः कालवशात् प्रयोजनानुरोधाच्च स्मृति-

वचनानामपेक्षिते समन्वये—असहाय-विश्वरूपापरार्क-विज्ञानेश्वर-जीमूत-वाहनप्रभृतयो निबन्धकाराः स्वस्वग्रन्थान् निर्ममिरे। मन्त्र-ब्राह्मणात्मक-निगमेभ्य एवाहृतानि तावदाख्यानोपाख्यानानि पुराणेषु निबबन्धिरे, अन्यान्यपि संयुयुजिरे जनानामुपदेशार्थं विनोदार्थञ्च। लोकशिक्षा-सौकर्यार्थमेव प्रचारं बहुलमापुः पुराणानि। समाजपतीनां सम्प्रदाय-संरक्षकाणाञ्च चिरप्रसिद्धमेतत् कर्म येन क्रमोपचीयमानजनसङ्घेषु अभ्युदय-निःश्रेयसकराण्याप्नुवन्ति प्रचारं तत्त्वानि। संघटते रीत्याऽनयैव प्राक्त-नार्वाचीनानां पारम्पर्यम् अन्योन्यानुस्यूतिश्च। न केवलं पूर्वेषां विन्दुरुधिर-सम्भवदेहाश्रयणेन सन्तानत्वं सन्तानानाम्, परन्तु तेषां मनोमयविग्रहो-त्तराधिकारितया च। विच्छिन्ने खल्वेतस्मिन उत्तराधिकारसूत्रे मनुजेषु जातिव्यवस्थाऽप्युच्छिद्येत न विद्येरन वर्णानां सम्प्रदायानां समाजानां वा विभागाः। एतदर्थञ्च प्रवर्त्तितानि महाभारतादीनां पठनम्, रामायण-सप्तशतीगानम्, पुराणव्याख्यानानि च व्यतीते समये लोकसंग्रहेप्सुभिः समाजमुख्यैः। कथं पुनरधुना सम्पतस्यते तत् कर्म संस्कृतवाङ्मय-मवलम्ब्य बहुशोऽनुष्ठितपूर्वं, तत् सर्वैरपि विभाव्यम्।

देवभाषायां वाङ्मन्थरत्वं वङ्गीयानां विदुषामपि कौलीनास्पदं कथं व्युदास्यम्—कथं वा तत्रालापपाटवम् अधिगन्तव्यं विद्यार्थिभिरध्यापकैश्च—कच्चिदेव तदस्माभिः विमृश्यते। न परिदेवनेन न वा दोषदर्शनेन सम्भवत्यस्याः प्रतीकारोऽवस्थायाः। सरलसंस्कृतभाषया तावदध्यापनं प्रतीकारोपायानां पुरत एव भाति। आङ्गलभाषया वैदेशिक्यापि चेद् विश्वविद्यालयाधीनासु सकलपाठशालासु सम्भवत्यध्यापनम्, तदा सकल-भारतीयभाषाजननीभूतया परमात्मीयया गीर्वाणवाण्या चतुष्पाठीष्व-ध्यापनं कथं न सिध्येत—न तत् सम्यगवबुध्यते। नियतम् अभ्यास एव सौकर्यं जनयति, पाटवञ्च ददाति सर्वजनविदितमविसंवादितञ्चेति तत्त्वम्। संस्कृतभाषया सर्व एव पण्डिता विद्यार्थिनश्च चेदालपेयुस्तदा विनैव अनति-विपुलायासम् अस्याः प्रचलनं प्रसारश्च भवितेत्यत्र नास्ति सन्देहावकाशः।

प्रवर्त्ततेऽधुना वङ्गेषु विकरालः कालः—प्रसरति सर्वतः प्रचेष्टा हिन्दु-नामाभिहितानां जनगणानां गौरवास्पदानि सकलान्यपि वस्तूनि वितथी-कर्तुं शनैः शनैरुत्सादयितुञ्च । तेषां संरक्षणञ्चेदस्माकं काम्यम्—अथवा न केवलं काम्यं परन्तु स्वतन्त्रसत्तयाऽनुस्यूतम्—तदा सर्वविधप्रयत्नेन संरक्ष्या संस्कृतभाषा सूत्रे मणिगणा इव, तद्ग्रथिता पूर्वेषां मनीषिणां मनन-प्रसूता भावानाम् अप्रतिमानां सम्पत् । अचिन्त्याः खलु ये भावा न तां-स्तर्केण चालयेदिति निर्दिशति भारतीया पुराणी प्रज्ञा । परन्तु प्रवृत्ते-ऽस्मिन् कलिसमये ब्रह्मचर्य-गार्हस्थ्य-सन्न्यास-संयम-पातिव्रत्य-शरणागति-प्रभृतिभावानाम् ऐहिकामुष्मिककल्याणमूलानां समुन्मूलनमेव तार्किक-धुरन्धराणां कथाख्यानादिरचयितॄणां काव्यनाटकादिप्रणेतॄणाञ्च प्रात्यहिकः सञ्जातो व्यवसायो महद् व्रतं वा । महदिदन्तावत् सौभाग्यमास्तेऽखण्डित-मद्यापि यत् संस्कृत-साहित्य-रसिकास्तन्निबन्धारश्च विप्लवकारैरेतैर्भावै-र्नाभिभूताः । इदमेव सिध्यत्येतावता यद् निपुणं पर्यालोचनीयो जगद्-व्यापारो जनमनसां वृत्तिनिचयश्च ।

आसीत् पुरा विजेतृभिरनार्यैरसंस्पृष्टम्, निरन्तरं सामगानमुखरितम् आज्यहोमधूमामोदितं देवमुनिपादरजसा पवित्रीकृतं शान्तमिवाश्रमपदं भारतवर्षम् ।

गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
मन्ये विधात्रा जगदेककाननं सुनिर्मितं वर्षमिदं सुशोभनम् ॥
धर्माख्यपुष्पाणि कियन्ति यत्र वै कैवल्यरूपञ्च फलं प्रसूयते ।

अधुना पुनर्दिशि दिशि हा हन्त "यदुपतेः क्व गता मथुरापुरी, रघुपतेः क्व गतोत्तरकोशले"ति खेदध्वनिरेव कम्पयन् वायुमण्डलं विदार्य नभस्तलम् उत्तिष्ठत्यनुदिनम् । जगतीतलगौरवभूतोऽयं विशालो भूभागोऽभजत पुरा मुनिसिद्धाध्युषितं हैमवतं कन्दरमिव वसुधातलभोगभिन्नताम् । अधुना पुनर्वयं तत्रैवावस्थायामपि निवसामो बद्धापणे चतुष्पथे वणिजां गतागति-विमर्दिते—प्रतिनियतं नानादेशीयमनुजैः साकं व्यवहारपरम्परया विकृष्ट-

मानसाः सन्तः। गृहकोणाबद्धस्येव नाचारो भवितुमर्हति सुदूरमध्वानं प्रस्थितस्य प्रवासिनः पथिकस्य। देशं कालञ्चानुसृत्य, जगद्व्यापारञ्च निपुणं पर्यवेक्ष्य निरूपणीयो बुद्धिमता स्वकर्मप्रकारः। नहि काल-प्रभावोऽवगणयितुं शक्यते शक्तिमत्तमेनापि पुरुषेण। अत एवाह पराशरो महामुनिः—

युगे युगे च ये धर्मास्तेषु तेषु च ये द्विजाः।
तेषां निन्दा न कर्तव्या युगरूपा हि ते स्मृताः॥ इति

संस्कृतवाङ्मयसंरक्षणप्रयत्नेऽपि नीतिरियम् अवलम्बनीया प्रतिभाति। यानि खलु तत्त्वानि जानन्ति मुग्धा अपीदानीन्तनाः—येषु चाज्ञातेषु पण्डितप्रकाण्डस्यापि भवति लाघवं जनसंसदि—आधुनिकानि तानि विज्ञानेतिहास-खगोल-भूगोलाधिकृतानि तत्त्वानि यथा चतुष्पाठीषु यथासम्भवं संस्कृतभाषया आलोच्यन्ते तथा तदधिकारिभिर्विधेयम्।

पितराविव सम्पृक्तौ वागर्थौ—तयोः पुनरर्थः पितेव, वाक् च मातेव। पुमांसमवलम्ब्यैव परिदृश्यते स्त्रियाः संस्थितिः। महीरुहमालिङ्ग्यैव जीवति शोभते च व्रतती। उपचीयमानायामर्थसम्पदि भवति वाचोऽपि वैभवम्। यथा खलु मधुकरो रसमाहरति पुष्पादुत्पत्य पुष्पान्तरं भजन् एवं ज्ञान-विज्ञानसुमनोभिरुद्भासिते कुल्याभिरिव सरिद्भिः परिषिक्ते, दीर्घिकाभि-रिवार्णवैः परिव्याप्ते, पश्चिमोदीच्यपुरोमलयादिमरुद्भिः परिवीजिते, शरच्छिशिरवसन्तग्रीष्मर्त्तुचक्रनृत्येन निरन्तरं परिशोभिते, क्रीडाशैलैरिव भूधरैस्तरङ्गायिते वन्धुरे भूमण्डलव्यापिन्यस्मिन् महत्युपवने, विहरन् वृन्दावने हरिरिव सर्वतो विसारिधिषणयाऽन्वितः पुरुषोऽपि प्रतिभोल्वणः सञ्चिनोत्यर्थान् भावांश्च, वितरति तान् स्वजनेभ्यः, सहृदयेभ्यो, लभते च मानुषजन्मसाफल्यम्। आदानविसर्गाभ्यां भवति विद्यायाः परिपोषः—न केवलं संरक्षणमात्रव्यसनेन।

विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा॥

एवम् उपदिशता महर्षिणा मनुनैव विहितम्—

श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मम्......... ।

इति नानामयाकुलैरस्माभिर्न विस्मर्तव्यं परन्तु भक्तिनम्रेण शिरसा ग्राह्यं प्रतिपाल्यं च श्रुत्युक्तम् उदाररमणीयं वचः—यदूचे किञ्चन मनुरवदत्तद्भेषजं तद्भेषजमिति ।

विरम्यतेऽथेदानीं विदुषां नूनं श्रुतिव्यथकादस्माद् प्रयत्नाद्, वधिरस्येव कर्कशस्वरस्यापि गीतव्यसनिनः कण्ठताल्वभिघातजव्यापारात् । व्यापारेऽत्र विद्यार्थिनः प्रणोदयितुं प्रोत्साहयितुञ्च प्रभवन्ति विद्वद्वरा एव—न, मादृशाः स्वयमसिद्धाः साधयितुमन्यान् कुर्वन्वितथप्रयत्नाः ।

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

येषां रसनासु नृत्यति सुरभारती—याननुवर्तते वाग् वश्येव—त एव पण्डितमुख्याश्छात्राणां मनःसु संस्कृतवाङ्मयावगाहनप्रयोजनगौरवम् आयसाक्षरैरिव मुद्रापयितुं शक्नुवन्ति । गरिष्ठमुपदेशवचनशतेभ्योऽपि शिष्टानाम् अनुष्ठानम्—सुतरां फलोपधायकञ्चेति विदितमेव लोकज्ञानाम् । त एवात्र विषये अग्रेसरीभवितुमर्हन्ति । विभिन्नप्रत्यययोगेन वाक्शब्दादेकस्मादपि सिध्यति वाग्मि-वाचाट-वाचालेति पदत्रितयम् । तत्र प्रथममेव सूचयति कृतित्वम्,—शिष्टत्रितयन्तावद् व्यञ्जनया अनुचितं प्रागल्भ्यमात्रम् । परन्तु मनःसंयोगमाक्रष्टुम् अनवहितचेतसः, कल्पते यथा तारस्वरः कर्कश एव—न तु मृदुमधुरवीणानिक्वणः श्रुतिसुखकरस्तथैव प्रागल्भ्यमात्रसारोऽपि कर्कशपदगुम्फितोऽपि मे प्रबन्धः प्रभवेच्चेद् देवभाषाया दुःखाकरम् आधुनिकीमवस्थां प्रति विद्वज्जनानां चेतांसि प्रसभं पातयितुं तदा लाघवमलाघवं वा भवत्वात्मनो न मुहूर्त्तमपि तद् गणयामि, परन्तु जानामि सफलमेवेमं प्रयत्नम् ।

---

# गर्ते पतेत् क्रोधनः

[ निबन्धकः—पि. वि. वरदराजशर्मा ]

व्युष्टा रजनी। महति प्रत्यूषे कृतस्नानः फलकमध्यासीन उदासीन इव लोकव्यवहारे दृढगृहीतनासाग्रभागः किमपि मन्दमन्तर्वदनञ्जपन्नवर्तिषि। प्राबुध्यन्त सुखसुप्ताः शिशुकपोताः। कश्चिद्दन्तान्धावयति। अन्यस्तूच्चैस्तरां किमपि पठति। अपरो विहरति। अवरश्च तारं विरौति। महान कोलाहलः। कर्णभेदी बहलध्वनिः। गृह्यकशालायां युगपद्विरुवतां गोमायुसूनां शतस्य, विंशत्या जरत्क्रोशकुलस्य, दशावराणां सारमेयाणां यावानारावो भवेत्, ( किमसौ भवत्स्वन्यतमेनाप्यनुभूतः ? ) ततो मात्रयाप्यन्यून आसीदारावः। ध्येयादुदचलच्चित्तम्।

कुतोऽयं कोलाहल इति सनिर्वेदं शिर आहत्यात्युच्चैरुदाक्रन्दम्। सर्वोऽपि हि बलाधिकाद् बिभेति। ममापि महान्तन्निध्वानमाकर्ण्य भीत्येव मनागशाम्यदर्भकाणामारावः। अवरो वराकी ममाधिक्षेपमसहमान इवानारतं रटन्नेवावर्तत।

अहो कोऽयं कष्टकालः, किमर्थमसौ विरौति, इति साधिक्षेपमभत्सयम्। को नामोत्तरयतु, "क्रीडनकनिमित्तं कलहः। किं भवतामनेन। प्रकृतमनुसरत, इति सानुनयमवादीद्गृहजनः। परस्तादेव कलहबीजमवागच्छम्। ह्यः किल सायं कनिष्ठोऽसौ यतः कुतश्चिद्रङ्गभूतारकायाः कस्याश्चन प्रतिकृतिमेकामध्यगमत। आनीय तां कौतुकभरितः प्रादर्शयदग्रजन्मने। शैशवसर्वस्वं क्रीडनकं नाम, सोऽपि तैस्तैरुपच्छन्दनवचनैरुपायैरेनं प्रलोभ्य प्रतिकृतिं स्वहस्तगतामतानीत।

तावतैव कथा सा विस्मृता। विस्मरणशीलो हि बालभावः। प्रातः प्रबोधानुपदमेवापत्येष्वन्यतमं समधुक्षयदेनं अग्रजेनापहृता ते प्रतिकृतिरिति। स च मे प्रतिकृतिं प्रयच्छेति रोदिति। को नाम समाधत्ताम् ? कथन्नु ? कश्चैनं सान्त्वयतु ? विनष्टैव प्रतिकृतिः कथमपि।

नश्यत्वयमल्पायुरिति प्रस्फुरता कोपेन भित्त्यवलम्बितां रमायाः प्रतिमामदाम् । मर्कटमुष्टिरसौ दुष्टः कनिष्ठो न तावतापि तुष्यतिस्म । न वा विरमति कर्णारुन्तुदाद्रोदनात् । न तद्वाक्यम, न तदुपच्छन्दनवचनम्, नासावुपायः येनासौ नानुनीतः । नासौ प्रकृतिं प्रापद्यत । विकृतं मे मनः । शेमुषीमदोषयद्रोषः । "शेषं कोपेन पूरयेत्" ।

अहह किमिदं प्रारब्धविजृम्भितम्, म्रियस्व पापिन्नित्याकुञ्च्य पूर्वकायं तलेनाभ्यहनम् । सुकुमारोऽसौ कुमारः कथं सहताम् । गहनो ग्रहचारः । वात्योपहत इव कदलीकाण्डो धरणीं शरणीचकार । न खल्वेकाकिनी विपदापतति । कोणविनिहितायां दारुखण्डिकायां ताडितं शिरः । दिष्ट्या न पाटितम् । क्षणेन शोणितोक्षिता क्षोणी शोणा शोणेव सरिद्भीषणाऽदृश्यत । एकश्शोणितमहाह्रदः ।

अपरत्र गृहजनस्याऽऽर्तरावः । अहह निहतशिशुः । फलितं मन्त्रप्रभावेण । मृतं मे स्नेहसर्वस्वम् । वत्स, वत्से, गृहाणेदम्, संस्तम्भय बालकम् । अय्या...य्यो, अविद्मादिके यदि कोपो नाम भवति किमीदृशो भवति । नासिकायां गृहीतायां मनश्चेन्न्यग्रहीष्यत नेदं पापमापतिष्यत् । न वा पञ्चाक्षर्याः स्थाने "माहं कोपवशो भूवमि"ति चेदजपिष्यत क्लेशोऽयमुदपत्स्यत । नाद्यापि शाम्यति रुधिरधारा । शीघ्रमाकार्यतां भिषक् । किं विलम्बध्वे । निरालम्बाऽलम्बेऽहमम्बरतले । किं कर्णं कुरुध्वे इति ।

अनुशयविवशोऽहमस्यां दुर्दशायान्दशमीमेव दशामात्मनः प्रेयसीममंसि । 'नहि शक्यं परित्यक्तुमात्मच्छन्देन जीवितम् ।' किं क्रियताम् । किङ्कर्तव्यतामूढोऽहं दरेतरया त्वरयाऽऽशुपत्तौ प्रातिष्ठे । बालस्य रोदनं द्विगुणमवर्धत । तदुपरि गृहजनस्य गालीबहलधाराधारा । न गेहेऽप्यवस्थातव्यम् । वरं रोदनमेकम् । वृश्चिकदष्टः पाटच्चर इवावचनमवलम्बितशिरा उदचलम् । सर्वोऽसौ धीरावधीरिणो महिमा क्रोधस्य । साधूक्तम्, "युक्तायुक्तविवेकरिक्तधिषणो गर्ते पतेत्क्रोधनः" इति । भवतु वैद्यरत्नमामन्त्र्य कथाशेषं कथयिष्यामि ।

---

# प्राचीनसाहित्ये विज्ञानपरिचयः

[ निबन्धकः—श्रीकालीपद-काव्यव्याकरणतीर्थः ]

अहो वैचित्र्यम्, यदा सर्वेऽपि सर्वदेशीया मानवा मोहान्धकार-समाच्छन्नाः केवलं स्वेच्छाहारविहारेषु निरुद्धचेतसः शिष्टविगर्हितं समाचरन्तो निष्फलञ्च जीवितं वहन्तः कालमनयन्, यदा च पाश्चात्त्या नरा आममांसभोजिनः शौचाचारविरहिता परस्परं कलहायमाना हिंस्रस्वभावाश्च आसन्, तस्मात् स्मृतेरतीतकालादारभ्य भारतवर्षमिदं प्रदीपस्येव ज्ञानस्य विज्ञानस्य च प्रभया समुद्भासितं बभूव। तत्रत्यैर्महर्षिभिः प्रणीतानि शास्त्राण्येव तत्प्रामाणि सूचयन्ति वर्तन्ते।

अलोकसामान्यतपःप्रभावेण लब्धज्ञाना ते हि भारतीया महर्षयो योगबलेन साक्षात्कृतपरमेश्वरा बभूवुः। अतस्तेषां परमेश्वरानुग्रहेण दृग-गोचरं किमपि नासीत्। तपोबलेनैव ते परोक्षमपरोक्षञ्च सर्वमेव वस्तु याथार्थ्येनोपलभ्य लोकहिताय शास्त्रेषु निहितवन्तः। न केवलं मोक्षोपयोगिनि ज्ञाने तेषां बुद्धिः प्रससार, परन्तु विज्ञानेऽपि शिल्पशास्त्रात्मके तेषामप्रतिहतप्रसरा धीर्नवीनतमां प्रतिभां विकासयामास।

ज्ञानं हि द्विविधम्। एकं मोक्षोपयोगि ज्ञानम्। अपरञ्च शिल्पे शास्त्रे चान्यफलिका या बुद्धिः सा विज्ञानमिति "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरि"त्यमरकोषवाक्यात्।

तेषाञ्च मनस्विनां ज्ञाने यथा मतिर्विज्ञानेऽपि तथैव सूक्ष्मतमा बुद्धि-रवलोक्यते। स्थूलादारभ्य सूक्ष्माण्यणुपरिमाणान्यपि वस्तूनि तेषां ज्ञान-नेत्रगोचरीभूतान्येवाभूवन्। अमुष्मिन् प्रबन्धे तेषां विज्ञानवतां महर्षीणां शिल्पशास्त्रविषयकाणि कानिचिद् विज्ञानान्युदाहरिष्यन्ते।

स्कन्दपुराणान्तर्गतकाशीखण्डस्योत्तरार्द्धे षडशीतितमेऽध्याये विश्वकर्मेश्वरलिङ्गस्य प्रादुर्भाववर्णनावसरे हरपार्वतीकथाच्छलेनैवं वर्णितमस्ति।

निखिलकलाविद्यानिपुणस्त्वष्टुः सुतो महनीयकर्मा विश्वकर्मा पूर्वं ब्रह्मणोऽपरा तनुरासीत्। स चाल्पीयसि वयसि कृतोपनयनो गुरुकुले वसन् गुरुसेवनरतो भिक्षान्नेनोदरपूरणं कुर्वन् कालं निनाय। प्रावृट्काले समायाते तस्य गुरुस्तं प्राह। वत्स !

"कुरूटजं मदर्थं त्वं यथा प्रावृड् न वाधते।
यत् कदाचिन्न भज्येत न पुरातनतां व्रजेत्॥"

एतेन प्राचीनकाले सर्वोत्तमगृहनिर्माणरीतिरासीदिति ज्ञायते। तत्रैव-स्कन्दपुराणान्तर्गतोत्तरार्धे गुरुपत्न्या उक्तः स विश्वकर्मा—

गुरुपत्नी च तं प्राह रे त्वाष्ट्र ! कुरु कञ्चुकम्।
ममाङ्गयोग्यं नो गाढं न श्लथञ्च प्रयत्नतः।
विनैव वाससा चारु वाल्कलञ्च सदोज्ज्वलम्॥ इति

एतेन रमणीयवाल्कलकञ्चुकनिर्माणरीतिरुक्ता। ततश्च गुरुपुत्रेणोक्तम्—

गुरुपुत्रोऽपि तं प्राह ममार्थं पादुके कुरु।
यदारूढस्य मे पादौ न पङ्कं संस्पृशेत् क्वचित्॥
चर्मादिबन्धनिर्मुक्ते धावतो मे सुखप्रदे।
याभ्याञ्च सञ्चरे वारिस्थलभूमावविद्रुतम्॥

याभ्यां पादुकाभ्यां वारिभूमौ सजलप्रदेशे स्थलभूमौ च अविद्रुत् यथेच्छं सञ्चरे सञ्चरेयम् इत्यर्थः। एतेन चर्मादिबन्धनविहीना जलस्थल-सञ्चरणक्षमा पादुका तदासीदिति ज्ञायते।

ततश्च गुरुकन्ययाऽपि स याचितः। यथा—

गुरुकन्याऽपि तं प्राह त्वाष्ट्र ! मे श्रवणोचिते।
भूषणे स्वेन हस्तेन कुरु काञ्चननिर्मिते॥
कुमारीक्रीडनीयानि कौतुकानि च देहि मे।
दन्तिदन्तमयान्येव स्वहस्तरचितानि च॥

गृहोपकरणं द्रव्यं मुषलोलूखलादिकम् ।
तथा घटय मेधाविन् ! यथा त्रुट्यति न क्वचित् ॥
अक्षालितान्यपि यथा नित्यं पीठानि सत्तम ।
उज्ज्वलानि भवन्त्येव स्थालिकाश्च तथा कुरु ॥
सूपकर्मण्यपि च मां प्रशाधि त्वष्टृनन्दन ।
यथाऽङ्गुल्यो न दह्यन्ते पाकः स्याच्च यथा सुखम् ॥
एकस्तम्भमयं गेहमेकदारुविनिर्मितम् ।
तथा कुरु वरं त्वाष्ट्र ! यत्रेच्छा तत्र धारये ॥

कुमारीक्रीडनीयानि कुमारीणां क्रीडायोग्यवस्तूनि । दन्तिदन्तमयानि हस्तिदन्तनिर्मितानि । एवं गुरुणा गुरुपत्न्या गुरुपुत्रेण गुरुकन्यया चाभिहितस्त्वष्टा विषण्णमनाः काननानि परिभ्राम्यन् दुःखदुःखेन कालं निनाय । ततश्च दैवयोगेन कञ्चित् तापसमवलोक्य तस्मै निजदुःखकारणं कथयन् तस्योपायं जिज्ञासमानस्तेन तापसेन शिवोपासनार्थमादिष्टः सर्वाभीष्टप्रदातारं महेश्वरमर्चयन् तस्य वरेण शिल्पविज्ञानं समग्रं विज्ञाय गुरूणामभिलाषं सम्पादयन् महान्तं सन्तोषं लेभे । एवं प्राचीनकालादारभ्यास्माकं देशे रम्यं चिरस्थायि कुटीरम्, अगाढमश्लथं वासोरहितं वाल्कलं कञ्चुकम्, यथाभिलाषं सर्वत्र सञ्चरणक्षमा चर्मरहिता पादुका, हस्तिदन्तनिर्मितानि कुमारीणां क्रीडावस्तूनि, सौवर्णं कुण्डलम्, मुषलोलूखलादीनि गृहोपकरणानि, रमणीयाः स्थालिकाः, निरुपद्रवपाककर्मशिक्षा, एकदारुविनिर्मितमेकस्तम्भमयं चलं गेहमित्थं बहुविधानामेव विज्ञानानां प्रचलनं दरीदृश्यते ।

एवं महाभारतेऽनुशासनपर्वणि पञ्चनवतितमेऽध्याये चर्मपादुकायाश्छत्रस्य चोत्पत्तिविवरणं दृश्यते । एकदा कृतदारपरिग्रहो भगवान् जमदग्निस्तपनकिरणदग्धे मध्यमेऽहनि स्वकान्तया रेणुकया सार्द्धं शरैः क्रीडन् स्वनिक्षिप्तान् शरान् संग्रहीतुं तामादिदेश । रेणुका च भृशं सूर्यकिरणप्रतप्तावयवा शरानयनाक्षमा सती मुहुर्विश्राम्यन्ती पुनरपि तान् भर्तृनिक्षिप्तान् वाणानानिनाय । भगवान् भृगुश्च रेणुकाया विलम्बमसहमानस्तस्या

कारणं ज्ञातुमैच्छत् । ततश्च नाथ ! प्रखरतपनकिरणदह्यमानगात्रा नाहं शक्नोमि शरानानेतुम् । इत्युक्तवत्यां रेणुकायां जमदग्निराह—

अद्येनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ।। इति

तदा जमदग्निशापभयत्रस्तो विवस्वान ब्राह्मणरूपेण तत्रागत्य तं तुष्टाव । उपशान्तचेतसि जमदग्नौ भगवान् सविता रेणुकायास्तापोपशमनाय छत्रमुपानहञ्च ददौ । ततः प्रभृति लोकेऽस्मिन् छत्रस्योपानहश्च व्यवहारः प्रदृश्यते । यथोक्तं महाभारतेऽनुशासनपर्वणि—

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्याञ्च त्राणार्थं चर्मपादुके ॥
अद्य प्रभृति चैवेह लोके संप्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च ॥
छत्रं हि भरतश्रेष्ठ यः प्रदद्याद् द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥

ततश्च रेणुका सूर्यप्रदत्तं छत्रमुपानहञ्च गृहीत्वा सूर्यकिरणेभ्य आत्मरक्षणाय मूर्ध्नि छत्रं पादयोरधस्तादुपानहौ परिदधाना जमदग्निनिक्षिप्तान शरान् संगृहीतवती । एवं बहोः कालादारभ्यात्र भारते वर्षे प्राचीना ज्ञानविज्ञानानुशीलनरता भारतीया महर्षयो नानाविधेषु शिल्पविज्ञानेतिहासादिषु शास्त्रेषु परं पाण्डित्यं प्रदर्शयन्तः सर्वेषामुपरि वर्त्तमाना अद्यापि सर्वैरेव नमस्क्रियन्ते भक्तिनम्रशिरोभिरर्वाचीनैः प्राचीनैश्च विद्वद्वरेण्यैः । एवञ्च शास्त्रे बहून्येव विद्यन्ते शिल्पसम्बन्धीनि वाक्यानि, सत्यवसरे तान्यन्यत्रोदाहरिष्यामः ।

---

# स्त्रीधर्मः

[निबन्धकः—श्रीगोपालकृष्णवेदान्ताचार्यः, एम्. ए]

स्त्रियाः सृष्टिप्रकारमाह मनुर्यथा—

द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः॥ इति

स प्रभुः ब्रह्मेत्यर्थः। व्यासोऽप्याह संहितायां यथा—

पाटितोऽयं द्विजाः पूर्वम् एकदेहः स्वयम्भुवा।
पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभवन्निति श्रुतिः॥ इति।

श्रुतिश्चात्र यथा—स वै नैव रेमे। तस्मादेकाकी न रमते, स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत, ततः पतिश्च पत्नी चाभवतामित्यादि। स इति प्रजापतिः। अनया च श्रुत्या सृष्टिं प्रति स्त्रीपुंसोभयसापेक्षत्वं विज्ञापितम्। इमामेव श्रुतिमुपजीव्याह व्यासो यथा—

यावन्न विन्दते जायां तावदर्द्धो भवेत् पुमान्।
नार्द्धं प्रजायते सर्वं प्रजायेतेत्यपि श्रुतिः॥ इति।

गार्हस्थ्याश्रमरक्षार्थं स्त्रिय एव प्रधानमवलम्बनं पुरुषस्येत्येतदाह स एव यथा—

गुर्व्येता भूस्त्रिवर्गस्य वोढुं नान्येन शक्यते।
यतस्ततोऽन्वहं भूत्वा स्ववशो विभृयाच्च ताम्॥ इति

एताः स्त्रियः त्रिवर्गस्य धर्मार्थकामरूपस्य गुर्वी भूः प्रधानं कारणमित्यर्थः। सर्वकर्मस्वेवास्वातन्त्र्यमाह विष्णुर्यथा—"सर्वकर्मस्वस्वतन्त्रता। बाल्ययौवन-वार्द्धकेष्वपि पितृ-भर्तृ-पुत्राधीनतेति"। मनुरप्याह—

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥ इति

तथाऽन्यत्रापि—

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किञ्चित् कार्यं गृहेष्वपि ॥
बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत् स्त्री स्वतन्त्रताम् ॥
पित्रा भ्रात्रा सुतैर्वापि नेच्छेद् विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्यां कुर्यादुभे कुले ॥ इति ।

आसामस्वातन्त्र्यादेव पत्यनुष्ठितधर्माचरणसहायकत्वमन्तरेण धर्मान्तरानुष्ठाननिषेधः। तथा चाह विष्णुर्यथा—"अथ स्त्रीणां धर्माः। भर्तुः समानव्रतचारित्वम्। श्वश्रू-श्वशुर-गुरुदेवतातिथिपूजनम्।

नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषितम्।
पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥

इति। पत्युर्महागुरुत्वादेव तच्छुश्रूषया स्त्रीणां सर्वधर्मसंप्राप्तिः। महागुरुत्वमाहात्म्योशना यथा—

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥ इति

पत्यावनुरक्ता तद्धर्मानुष्ठानसहायश्च तदनुष्ठितकर्मफलभाग् भवति। तथाचाह बृहस्पतिः—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्द्धं स्मृता जाया पुण्यापुण्ये फले समे ॥ इति ।

पत्यनुष्ठितधर्मानुष्ठानसहायकत्वमन्तरेण धर्मान्तरानुष्ठाने स्त्रीणां नरकमाह विष्णुर्यथा—

पत्यौ जीवति या योषिदुपवासव्रतञ्चरेत् ।
आयुः सा हरते भर्तुर्नरकञ्चैव गच्छतीति ॥

अत्रिरप्याह—

जीवद्भर्तरि या नारी उपोष्य व्रतचारिणी ।
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत् ।
शङ्करस्यापि विष्णोर्वा प्रयाति परमं पदम् ॥ इति

व्यासोऽप्याह—

सम्यग् धर्मार्थकामेषु दम्पतिभ्यामहर्निशम् ।
एकचित्ततया भाव्यं समानव्रतवृत्तितः ॥
न पृथग् विद्यते स्त्रीणां त्रिवर्गविधिसाधनम् ।
रागतो ह्यतिदेशाद् वा इति शास्त्रविधिः स्मृतः ॥
पतिं विनाऽन्यत् कुरुते व्रतानि देवसेवनम् ।
न सा तत्फलमाप्नोति स्वपतिस्तु तया हतः ॥ इति ।

स्वपतिर्हत इति पतिहननजन्यदुष्कृतिभाग् भवतीत्यर्थः । मनुश्चाह

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥
नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥

पाणिग्राहस्य साध्वीस्त्री जीवतो वा मृतस्य च ।
पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियमिति ।

गोभिलोऽप्याह यथा—

पतिमुल्लङ्घ्य मोहात् स्त्री कं कं न नरकं व्रजेत् ।
कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न पश्यति ॥
पतिशुश्रूषयैव स्त्री सर्वांल्लोकान् समश्नुते ।
दिवः पुनरिहायाता सुखानामम्बुधिर्भवेत् ॥ इति ।

उत्तममध्यमाधमभेदेन स्त्रीणां त्रैविध्यमाहुः पौराणिकाः यथा—

उत्तमा पतिभक्ता सा पतिधर्मसमन्विता ।
प्राणान्तेऽपि न कुरुते यत् किञ्चिदयशस्करम् ॥

पूजयेत् सा यथा कान्तं तथा देवद्विजातिथिम् ।
व्रतानि चोपवासांश्च कुरुते भर्तुराज्ञया ॥

मध्यमस्त्रीलक्षणं यथा—

गुरुणा रक्षिता यत्नाज्जारञ्च न भजेद् भयात् ।
सा कृत्रिमा मध्यमा च यथा किञ्चित् पतिं भजेत् ॥ इति ।

अधमाया लक्षणं यथा—

अधमा परमा दुष्टात्यन्तासद्वंशजा तथा ।
अधर्मशीला दुःशीला दुर्मुखा कलहप्रिया ॥
पतिञ्च भर्त्सयेन्नित्यं जारचिन्तापरायणा ।
दुःखं ददाति कान्ताय विषतुल्यञ्च पश्यति ॥ इति

प्रागुक्तलक्षणामुत्तमां स्त्रियमभिप्रेत्याह दक्षो यथा—

पत्नी मूलं गृहं पुंसां यदि च्छन्दानुवर्तिनी ॥
गृहाश्रमसमं नास्ति यदि भार्या वशानुगा ।
तया धर्मार्थकामानां त्रिवर्गं फलमश्नुते ॥ इति ।

छन्दानुवर्त्तिनी पत्युरभिप्रायानुवर्तिनी । त्रिवर्गमिति ज्ञानान्मुक्तिरित्यवधारणात् ज्ञानं प्रति च धारणाध्यानसमाधिरूपं यदन्तरङ्गसाधनत्रयं तत्र स्त्रीसहायकत्वमपेक्षत इत्यर्थोऽनेनाभिहितः । एतादृशस्त्रिया देवीसाम्यमाह स एव यथा—

अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियंवदा ।
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी ॥
अनुकूला न वाग् दुष्टा दक्षा साध्वी पतिव्रता ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥ इति ।

वाग्दुष्टा कलहरता । आत्मगुप्ता स्वधर्मरक्षापरा । मनुरप्याह—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियाः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ इति ।

गृहस्थस्य जायैव स्वचरित्रेण स्वर्गसुखं नरकयन्त्रणां वोत्पादयति इत्याह दक्षो यथा—

अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव हि।
प्रतिकूलकलत्रस्य नरको नात्र संशयः ॥ इति।

स्त्रीणामनुकूलत्वेन प्रतिकूलत्वेन चोत्तमाधमत्वं विज्ञेयम्। तस्मात् सः तत्रैवाह यथा—

स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्।
रक्त एको विरक्तोऽन्यस्तस्मात् कष्टतरं नु किम् ॥
गृहवासः सुखार्थाय पत्नी मूलं गृहे सुखम्।
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी ॥
दुःखा ह्यन्या सदा खिन्ना चित्तभेदः परस्परम्।
प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः ॥

अन्या इत्यधमा। दुःखा दुःखदायिनी। अधमां स्त्रीमधिकृत्य तस्याः निन्द्यत्वमाह यथा—

योषित् सर्वा जलौकेव भूषणाच्छादनाशनैः।
संभृतापिकृता(?) नित्यं पुरुषं ह्यपकर्षति।
जलौका रक्तमादत्ते केवलं सा तपस्विनी।
इतरा तु धनं वित्तं मांसं वीर्यं बलं सुखम् ॥
सशङ्का बालभावे तु यौवने विमुखी भवेत्।
भृत्यवद् मन्यते पश्चाद् वृद्धभावे स्वकं पतिम् ॥ इति।

अपकर्षति कापथे परिचालयति पातयतीत्यर्थः। इतरेति स्त्री आदत्ते

धर्मपत्नीस्वरूपमाह स एव यथा—

धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या कार्या गुणान्विता ॥ इति।

निर्दोषेति प्रतिकूलत्व-वाग्दुष्टत्वादिदोषरहितेत्यर्थः। अन्या कार्येत्यादि ाादृशदोषदुष्टस्त्रीसत्त्वे पुनर्गुणवतीं स्त्रियमुद्वहेदन्यथा धर्महानिसम्भवः

स्यादित्यर्थः। तादृशविवाहद्वये न दोषो विद्यते। यादृशदोषसत्त्वे दारान्तरग्रहणविधिस्तत्स्वरूपमाह याज्ञवल्क्यो यथा—

सुरापी व्याधिता धूर्त्ता वन्ध्यार्थघ्न्यप्रियंवदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुद्वेषिणी तथा॥ इति

अधिवेत्तव्या सपत्नीयोजिता कार्या, स्वामी पुनर्दारान्तरं गृह्णीयादित्यर्थः। मनुरप्याह यथा—

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता वाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा।
वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥ इति।

व्यासोऽप्याह संहितायां यथा—

धूर्त्ताञ्च धर्मकामघ्नीमपुत्रां दीर्घरोगिणीम्।
सुदुष्टां व्यसनासक्ताम् अहितामधिवेदयेत्॥ इति।

अधिविन्नामपि भोजनाच्छादनैः पालयेदित्याह याज्ञवल्क्यो यथा—

अधिविन्ना तु भर्त्तव्या महदेनोऽन्यथा भवेत्॥ इति

व्यासोऽप्याह यथा—

अधिविन्नास्वपि विभुः स्त्रीणान्तु समतामियात्। इति

समतामियादिति अन्याः स्त्रियो यथा पालयेत् तथाधिविन्नामपीत्यर्थः। मनुरप्याह विशेषेण यथा—

या रोगिणी स्यात् तु हिता सम्पन्ना चैव शीलतः।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित्॥ इति।

रोगिण्यान्तु अनुज्ञापनानवमानत्वेन वैशिष्ट्यमन्यासान्तु न तथा इति।

धर्मपत्नीसत्त्वे पुनर्दारग्रहणं निन्दति दक्षो यथा—

प्रथमा धर्मपत्नी च द्वितीया रतिवर्द्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपजायते॥ इति।

( क्रमशः )

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| April, 1938. | १८५९-शकीये चैत्रे २०श-वर्षस्य १२श-संख्या | Vol XX, No. 12 |
|---|---|---|

## उपदेशपरम्परा

अम्बिकामहिमा

[ स्वनामधन्य-जगद्गुरुश्रीशङ्कराचार्य-श्रीकाञ्चीकामकोटिपीठाधीशानाम् ]

कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः ।
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ॥

ललितासहस्रनामफलश्रुतिः ।

अद्य शुक्रवासरः, पूर्णिमा च । अस्योभयस्य संयोगोऽम्बिकाया विशेषः । एकैकमपि प्रत्येकं विशिष्टमेव । अद्य श्रीकल्पकाम्बामन्दिरे पूर्णपूजा । पूर्णिमेत्युक्तपूर्णतेत्यर्थः ।

सर्वेषां जनानामानन्दं ददाति पूर्णिमाचन्द्रः । शरत्कालचन्द्रोऽतीव गुणवानिति शास्त्राणि वदन्ति । इदानीं प्रचलत्यपि शरदृतुरेव । शरत्कालचन्द्र आनन्दं ददाति । तत्रापि पूर्णचन्द्रोऽधिकमानन्दं ददाति । प्रत्यूतूपक्रमं नवरात्रं वर्तते । तदानीमम्बिकां पूजयितुमर्हामः । तादृशेषु षट्सु नवरात्रेषु वसन्त-नवरात्रं शरन्नवरात्रं च विशिष्येते । शारद-नवरात्रं नाम शरत्काले समापतत् नवरात्रमेव । अस्माभिरनुष्ठीयमानं नवरात्रमेतदेव । पञ्चदशसु तिथिष्वस्याराधनमेकः संप्रदायः । ललितासहस्रनामसु—

"प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता"

इत्युक्तमस्ति। तानि पञ्चदशदिनान्यद्य पूर्यन्ते, अत एवास्य पूर्णपूजेति नाम समपद्यत। तदेवमद्य शारद-नवरात्रपूर्तिः शुक्रवासरः पूर्णिमा च मिलिताः समापतन्ति स्म।

चन्द्रमण्डलेऽम्बिका निवसति। ललितासहस्रनामफलश्रुतावम्बिकां चन्द्रमण्डले ध्येयां वदति। तद् मनसः शीतलतां ददाति। सूर्योदयेनास्माकं न तादृश आनन्दो भवति। चन्द्रोदयेन बालाः स्त्रियो वृद्धा इत्यादीनां सर्वेषां प्रमोदो भवति। चन्द्रिकासङ्गोष्ठिः, सङ्गीतगोष्ठीप्रभृतीनि बहूनि सन्तोषकराणि कर्माणि तदानीं सर्वे समाचरन्ति। पूर्णचन्द्रोदयेनेतोऽप्यधिक आनन्द उदेति। प्रत्यहं पूर्णचन्द्रस्योदयेनैतावानानन्दो भवेत्। पञ्चदशदिनानि क्षयेण पञ्चदशदिनानि वृद्ध्या च पूर्णचन्द्रस्य दौर्लभ्यमनुभूयते। अन्धकारं सूर्यश्चन्द्रश्चोभौ निरस्यतः। सूर्य औष्ण्येन सहितोऽन्धकारं पराकरोति। प्रकाशः शैत्यं च चन्द्र एव वर्तते। तद्वदम्बिकायाः कृपा मनः शीतयित्वाऽज्ञानं पराकरोति।

चन्द्रमा मनसो जातः ( पुरुषसूक्तम् )। विष्णोर्मनसि शीतले सति तत उद्भूतश्चन्द्रमा नाम। तत एव स शीतलस्सन् तमः परास्यति। अज्ञानाख्यं तमो निरस्य शान्तिं ददाति, इत्यम्बिका चन्द्रमण्डले ध्यानयोग्या वर्ण्यते। व्याघ्रासने मध्यभागे ( हृदयस्थाने ) आसनं बद्ध्वा जपध्यानादिकं कर्तव्यमिति वर्ण्यते। व्याघ्रः स्वाभिलषितमेकेनैवाक्रमणेन हन्तुं समर्थः, तद्वद् ध्यानं कर्तुं योग्यं व्याघ्रचर्मासनं व्यवस्थितमस्ति। तद्वत् अज्ञानाख्यं तमो निरस्य शीतलतामम्बिकायाः कृपा जनयति, इति तां चन्द्रमण्डले ध्यातुमर्हामः। अद्य पूर्णिमया सह शुक्रवासरोऽपि संयुज्यते। चन्द्रस्यानन्तरमानन्दं ददानः शुक्र एव।

अम्बिका का? औवै ( कविः ) "मातरं पितरं च प्रथमं जानीहि दैवम्" इति वदति स्म। "मातृदेवो भव पितृदेवो भवे"ति तैत्तरीयोपनिषदपि वदति। मातरं दैवभावेन नमस्कुरु, पितरं दैवभावेन नमस्कुरु इति

नयोरर्थः। अस्यैकस्य जन्मनः सिद्धां मातरं दैवभावेनाराधयितुमर्हामः। अम्बिका यस्य कस्यापि जन्मनो माता। अस्मिन् लोके चतुःपञ्चाना-मपत्यानामेका माता भवति। सर्वेषामपत्यानां सर्वेषु कालेषु माता ह्यम्बिका नाम। लोके सर्वत्र विद्यमानास्सर्वेऽपि सहोदरा एव। पक्षिणः, क्रिमय इत्यादयोऽप्यस्माकं सहोदरा एव। एतावतामप्येका माता भवत्यम्बिकैव। तस्या एकस्या मातुरुदरात् सर्वेऽजायन्त। 'मातरं दैवं भावय' इत्युपदेशे तथा भावयितुं प्रभूयत इति प्रतिभाति। तद् विपर्यस्य दैवस्य मातृभावेन चिन्तनमेवाम्बिकाया ध्यानम्। कृष्णमर्जुनः सखायमभावयत्, अपत्यमिति यशोदाऽभावयत्; रुक्मणी सत्यभामा च भर्तारमभावयेताम्। वयं सर्वेऽप्यपत्यानि भवामः, इति परमात्मानमम्बिकाम्, मातरमिति यावत्, भावयामश्चेत्, तथैवाविर्भूयानुग्रहीष्यति। येन केनचन रूपेण भावयामश्चेत्, तेन रूपेणाविर्भूयानुग्रहणस्वभावः परमात्मनो वर्तते। साक्षात् परमेव ब्रह्माम्बिकारूपेणावस्थाय मातेव समस्तानां प्राणिनामनुगृह्णान' वर्तते। अम्बिकामाराध्य यावन्तः कियन्तोऽपि महापुरुषा अनुग्रहं प्राप्नुवन्। महा-कविः कालिदासोऽम्बिकाया दासः। अम्बिकायाः कृपया तस्य परिपूर्णा वागुदेति स्म। अम्बिकायाः कृपोदयानन्तरमेव 'श्यामला दण्डकम्' इति स्तोत्ररत्नमकवयत्। श्रीकाञ्च्यां श्रीकामाक्षीसन्निधौ मूकः कश्चनोपास्य महा-कविरभवत्। अम्बिकाया उच्छिष्टे भक्षिते तदेवोच्छिष्टममृतरूपं सत् उत्तमां वाचमजनयत्। स मूककविरित्यभिधानमलभत। सोऽम्बिकामधिकृत्य पञ्च-शतं श्लोकानकवयत्। शतं शतं विभक्ताः पञ्चशतकरूपास्ते वर्तन्ते। मूक-पञ्चशतीति तेषां नाम। तेऽतीव रसवन्तः स्युः। विना संस्कृतभाषाविज्ञान' तेषां रसमनुभवितु' न शक्यते। संस्कृतभाषायां विज्ञातायां मूककविः, कालिदास इत्यादीनां वाङ्माधुर्यमनुभवितु' शक्यते। भगवत्पादानां वाङ्-महिमानमनुभवितुमपि संस्कृतभाषाविज्ञानमपेक्ष्यते। एतेषां त्रयाणां कृते सर्वेऽपि संस्कृतभाषामध्येतुमर्हन्ति।

अम्बिका वर्तते वाक्स्वरूपा। अम्बिकायाः सर्वं शरीरमक्षराण्येव।

अस्माकं शरीरे सर्वत्र दुर्गन्धान्येव वस्तूनि पूर्णानि वर्तन्ते। एतेष्वाभा-सेष्वन्तर्ज्ञानं नामैको मणिरस्ति। अम्बिकायाः शरीरं त्वकारादिक्षकारा-न्तान्यक्षराण्येव। तर्कशास्त्रे मुक्तावल्यां शब्दं प्रकृत्य द्वौ न्यायावुल्लिख्येते वीचीतरङ्गन्यायः, कदम्बमुकुलन्यायश्च। तौ यथा—वीचीनस्तरङ्गाणां विभागः, महतस्तरङ्गात् क्षुद्राणां क्षुद्राणां तरङ्गाणां पृथक् पृथक् गत्वाऽन्ततः क्षुद्रतरीभूय तिरोभाव इति वीचीतरङ्गन्यायः। शब्दस्योद्गमस्य पृथक् पृथक्शब्दरूपेण पतनं कदम्बमुकुलन्यायो भवति। एते शब्दा एवंक-पञ्चाशत् अक्षराणि। तेषां मातृकेति नाम। कंचनाकारं प्राप्तानीमान्य-क्षराण्येवाम्बिकायाः शरीरम्। अक्षरमालिकां मातृकास्वरूपमिति वदन्ति। सर्ववर्णात्मिकेति कालिदासोऽवदत्। सर्वेषां वर्णानां स्वरूपेण विद्यमानेति तस्य तात्पर्यम्। वयं जपावसरेऽङ्गन्यास-करन्यासौ कुर्महे। तत्तन्मन्त्र-देवतायास्तत्तदक्षराणि तत्तदङ्गानि वर्तन्ते इति निष्कर्षः।

सर्वलोकमेकमातृरूपेणावस्थायानुगृह्णानाया अम्बिकायाः परशक्तिरित्येकं नाम। अम्बिकायाः कटाक्षं यं कमप्युन्नयेत्। इदं शास्त्राणां तात्पर्यम्। तां परदेवतेति वेदो वदति। तामम्बिकां वयं प्रम्णा निदिध्यासितुमर्हामः। अभेदेन—वयमन्ये साऽन्येति भावमन्तरेणैकभावेन ध्यातुमर्हामः।

अम्बिकायाः स्तोत्रनिबन्धकेष्वस्माकमाचार्यपादा अप्येके। त ईश्वराव-ताराः। इह लोके संचरन्तो मनुष्यांशमनुसृत्यैवाचरन्ति स्म। रामो महाविष्णोरवतारः। तथा स सीतां व्ययुज्यतेत्यदुःख्यत, वानराणां साहाय्यमाप। नाटके यत् नेपथ्यं गृह्णन्ति, तदनुगुणमेवाभिनेतुमर्हन्ति, नतु स्वस्वरूपं नाटकरङ्गे प्रदर्शयितुमर्हन्ति। तद्वत् रामः स्वगृहीतनेपथ्यस्यानुगुणं चतुर्दश वत्सरान् अरण्यमगच्छत्, सीतां वियुज्याऽदुःख्यत, पर्णशालायां स्वपन्नासीत्, फलान्यभक्षयत्, लक्ष्मणे मूर्च्छितेऽरोदीत्; स धीरोदात्तवदभ्य-नयत्। तद्वत् अस्माकमाचार्यपादा अपि मनुष्यावतारस्यानुगुणं चरित्वा-ऽनन्तरं श्रीकैलासं प्रापन्। रामे सति वयं नाजायामहीति सर्वे दुःख्येयुः। अहं तथा न जात इति संतुष्यामि। कदाचन जातश्चेदपि न ब्राह्मणो जनितु-

महामि। यदि जातः स्याम्, तर्हि रामोऽस्मान प्राणमदिति स्यात्। कृपीन सर्वानपि स प्रणनाम। साऽतीव दुःसहाऽवस्था। संप्रति तस्य देवालयं निर्माय वयं तं नमस्कुर्महे। नीचजातौ भवामश्चेत्, सौकर्यं स्यात्। सर्वान् नमस्कर्तुमर्हामः। उच्चजातयश्चेत्, महती विपत्तिः। तथैवोत्तम आश्रमोऽधिकं वयः, उत्तमा गुणाश्च येषाम्, ते बहूनामनुग्रहपात्राणि न भवितुं प्रभवन्ति। आचार्यपादानां गुरवो गोविन्दभगवत्पादाः। यावत्सु कियत्स्वपि सुकृतं कृतवत्सु, अहमेक एव वा दौर्भाग्यं प्राप्तवान्। मम पादयोरिमे पतन्ति खल्वित्यदुःख्यन्निति वदन्ति।

श्रीमदाचार्यपादाः स्वगृहीतस्य नेपथ्यस्यानुगुणं कैलासं प्रापन्। गत्वा पञ्चस्फटिकलिङ्गान्यादाय प्रत्यागमन्। तेष्वेकमेव चन्द्रमौलीश्वरः। कैलास ईश्वरावसथेऽम्बिकाया मन्त्रशास्त्रमासीत्। तद्गृहीत्वा प्रत्यागच्छत्सु नन्दिकेश्वरस्तत् प्रत्यपाहरत्। तस्माद् विस्रंस्य कंचन भागमाचार्यपादाः प्रत्यानयन्। तेष्वेकचत्वारिंशत् श्लोका आसन्। अत्र प्रत्यागम्योपर्येकोनषष्टिं श्लोकान् कवयित्वा तदपूरयन्। सैव सौन्दर्यलहरी। त्रिशिरःपुरे (Trichinopally) मातृभूतेश्वरालये श्रीसुकुन्तलाम्बासन्निधावेकस्यां श्लक्ष्णशिलायां प्रथमे एकचत्वारिंशत् श्लोका लिखिता वर्तन्ते, स सन्निधिश्चक्राकारः साधित इति वदन्ति। सौन्दर्यलहर्यां पाश्चात्त्या एकोनषष्टिः श्लोका आचार्यैः कृताः। शतमपि श्लोकाः कैलासाद् यद्यागताः स्युः, अस्माकं हानिरेव। तदानीमाचार्यपादानां वाङ्महिमानं वयं नानुभवितुं पारयेम। आचार्याणां कृतीरपेक्ष्य कैलासत आगता नोत्कृष्टाः प्रतिभान्ति। ते सर्वे मन्त्रा एव। पाश्चात्त्या एकोनषष्टिः श्लोका अप्यानन्ददायकानि स्तोत्राणि।

तेषु स्तोत्रेष्वेकमम्बिकायास्सन्निधौ सरस्वती वीणां वादयति स्मेत्यधिकृत्य वदति। तद्यथा—

विपञ्च्या गायन्ती विविधमपदानं पशुपते-
स्त्वयारब्धे वक्तुं चलितशिरसा साधुवचने।

त्वदीयैर्माधुर्यैरपलपितनन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चेलेन निभृतम् ॥

सरस्वत्यम्बायास्सन्निधाने वीणया गायति। किमधिकृत्य गायति ? अस्माकमस्मानधिकृत्य कश्चन गायति चेत्, आनन्दः स्यात्। अम्बायाः प्रियमधिकृत्य गायति। किं तत् ? अम्बायास्सतीति नाम। पतिव्रतेति तदर्थः। अम्बिकेवापरा कापि पतिव्रता नास्ति। सा स्वभर्तृनिन्दनातिमकाया वाच उदयमात्रेण स्वशरीरमपि पर्यजहात्। दाक्षायणीमधिकृत्य कथयेदं ज्ञातुं शक्यते। तादृश्याः पतिव्रतायाः पशुपतेः स्तोत्रस्य श्रवणे परमानन्दो भवति। सरस्वती तस्या हृदयं ज्ञातवती। सर्वज्ञत्वं सरस्वत्या वर्तते। साऽम्बिकायाः प्रियां पशुपतेः प्रशंसां गायति। तथा गायन्तीं श्रुत्वाऽम्बिकाऽऽनन्दति। कस्मिँश्चन सम्यगगायत्यपि श्रोतार आनन्देयुः, उपन्यस्यत्यपि तथैव कुर्युः। आनन्दन्ति चेदेव तेषामुपर्युपरि वक्तुं स्फुरेत्। तत्र का वा न्यूनता वर्तत इति विमृशन्त एव मुखं घोरं निचुलयन्तस्तिष्ठन्तीति नोचितमिदम्। औचित्यस्य विज्ञाऽम्बिका शिरः कम्पयन्ती 'साधु वर्तते' इति वक्तुं प्रारभते। प्रारभमाणायां च तस्यां तस्या वाचो माधुर्यं सरस्वत्या वीणायास्सर्वं नादा अन्तरदधुः, तन्माधुर्यं एवामज्जन्। सहसैव सरस्वती तां वीणां संपूर्णमावृत्याप्यदधात्। इदमेवायं श्लोको वदति। मूककवेः कृतिभ्योऽप्येकं श्लोकं वदामि

कलमञ्जुलवागनुमितपञ्जरगतशुकमहोत्कण्ठयात्।
अम्ब रदनाम्बरं ते बिम्बफलं शम्बरारिणा न्यस्तम् ॥

( आर्याशतके ६६ तमः श्लोकः )

अम्बिकाया अधरं बिम्बफलमिव वर्तते। तद् बिम्बफलं मन्मथस्तत्र न्यक्षिपत्। स कश्चन व्याधः। तस्य कंचन शुकं ग्रहीतुमिच्छा। शुकस्य बिम्बफले प्रेम। ततस्तद् न्यक्षिपत्। शुकः कुत्र वर्तते ? वस्तुतः शुको नास्ति। शुकः स्यादिति प्रत्यभात्। अम्बिकाया मधुरां वाचं श्रुत्वा तस्याः कण्ठ एव पञ्जरे कश्चन शुकोऽवस्थाय व्याहरतीति विज्ञाय तेन तं ग्रहीतुमभ्यलषत्। एवमभिलाषेण न्यस्तं बिम्बफलमिव वर्ततेऽम्बिकाया अधरमित्यस्य श्लोकस्य तात्पर्यम्।

---

# सौभ्रात्रम्

सांप्रतं हि सहोदरभावः सर्वैरपि कांक्ष्यते, विशिष्य च सुधारकैर्भारतीयैः। अयं च वर्णाश्रमादिविभागे सति नात्मानं लभते, अतस्तेन निमित्तेन जातिभेदास्तन्निबन्धना अवस्थाभेदा धर्मभेदाश्च दूरीकरणीया इति वहवो मन्यन्ते। वयं तु मन्यामहे—सौभ्रात्रमेव वरणीयम्, न केवलं सहोदरभावः। वालि-सुग्रीवयोः सहोदरभावः किं नासीत्! रावणविभीषणयोः सहोदरभावः किं नासीत्? सत्यपि सहोदरभावे वालिबधोपायो रावणबधोपायश्च सुग्रीवेण विभीषणेनैव च खलु प्रादर्शि? दौरात्म्यं वानुवर्ततां, माहात्म्यं वा, सहोदरयोर्द्वयोर्भावैक्यं तु नितरामेव वाञ्छनीयम्। अत एव तदा तदा मतभेदमाविस्कुर्वन् लक्ष्मणोऽपि श्रीरामचन्द्रेण न तथा बह्वमन्यत, यथा भरतः। वयं तु मन्यामहे—कैकेयी-कौसल्ययोः, श्रीसीता-लक्ष्मणयोः, बालि-सुग्रीवयोः, रावण-विभीषणयोश्च दौर्भ्रात्रं क्षणमप्यनुवर्तमानं यदि न वर्णनास्पदं स्यात्, तर्हि रामायणकथैव नैवात्मानं लभेत।

श्रीरामायणकथायाः प्रधानाङ्गानि हि कौसल्यादिष्वसूयया कैकेयीवरप्रार्थना, मारीचेन दूरतो नीते श्रीरामचन्द्रे लक्ष्मणेति रामस्येव ध्वनिश्रवणानन्तरं बहुधा प्रबोध्यमानाया अपि सीतादेव्या लक्ष्मणस्य सोदरकल्पस्योपरि विपरीतभावः; येन सीतापहरणादीनि बहूनि मुख्यान्यङ्गान्यवसरन्तिस्म, वालि-सुग्रीवयोः परस्परवैमत्यं प्रत्यहमायोधनसंकल्पः, वालिवधार्थं सुग्रीवस्य रंध्रान्वेषणम्; येन सुग्रीवसख्य-वालिवध-हनूमदादिकर्तृकसीतान्वेषणादीनि बहून्यङ्गान्यवकाशन्ते स्म, रावणस्य विभीषणे शत्रुभावश्च, येन गदापाणेर्विभीषणस्य रामचन्द्रशरणागत्यादीनि रावणवधपर्यन्तान्याविरभवन्निति, सर्वविदितमिदम्।

न केवलं दौर्भ्रात्रमेव रामायणकथाया मुख्यं मूलम्, किन्तु सौभ्रात्र-

मपोऽपि दुरपन्हवमिदं तत्त्वम्। वसिष्ठ-विश्वामित्रयोर्हि स्वभाववैरिणो-रपि -श्रीरामचन्द्रस्य विश्वामित्रेण साकं ताडकादिवधार्थं विशिष्टं सौभ्रात्रमेवासीत, यदेव गृहीत्वा—

"अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्।
वसिष्ठोऽपि महातेजा ये चान्ये तपसि स्थिताः।"

इति विश्वामित्रोऽपि वसिष्ठमेव पुरस्करोति, वसिष्ठोऽपि विश्वामित्र-मतमेवात्रानुवर्त्तते, येनोनषोडशवर्षोऽपि रामचन्द्रो लक्ष्मणेन साकं प्रेषितो विश्वामित्रेण साकं दशरथचक्रवर्तिना। अत्र च कारणम्—सुबाहु-मारीचयोः सौभ्रात्रमेव।

सीताविवाहावसरे—उर्मिलादीनामपि लक्ष्मणादिभिः साकं विवाह-व्यवस्थायामपि मुख्यं निदानम्—जनकस्य तत्सहोदरविषये सौभ्रात्रम्, राम-लक्ष्मण-भरत-शत्रुघ्नानां च सौभ्रात्रमेव चेति सर्वविदितमिदम्।

वनवासार्थं श्रीरामचन्द्रस्यैव वरदानेन नियन्त्रणायामपि लक्ष्मणोऽपि यत् तमनुगच्छति स्म, तत्रापि कारणं सौभ्रात्रमेव।

दशरथमरणानन्तरं मातुलगृहात् प्रत्यागतेन भरतेन कैकेय्येव सर्वस्या अपि विपत्तेः कारणमिति विज्ञाय मातुरपि कैकेय्याः सहस्रशो धिक्करणं यत् कृतम्, यच्च कौसल्यादीनां संतोषणं कृतम्, यच्च पुनरपि राज्यमिदं सर्वं श्रीरामचन्द्रस्यैव सविधे समर्पणीयमिति विश्वासेन जटाजूटादिधारणेन श्रीरामचन्द्रस्य दण्डकारण्यगतस्यैवोपसर्पणं सर्वैरपि स्वपरिवारैः, प्रजाभिः सेनाभिश्च कृतम्, तत्रापि कारणं भरतस्य शत्रुघ्नस्य च श्रीरामलक्ष्मणयो-र्विषये सौभ्रात्रमेव।

जनस्थाने श्रीरामलक्ष्मणाभ्यां विरूपीकृतायाः शूर्पणखाया वैरूप्य-मसहमानैः खरदूषणत्रिशिरोभिः श्रीरामचन्द्रेण साकमायोधनेन स्वप्राण-परित्यागेऽपि यः सन्नाहः कृतः, तत्रापि तेषां वाङ्मनसागोचरं सौभ्रात्रमेव।

खरदूषणादिवधानन्तरं सीतापहरणेनात्मानं स्ववंशं सर्वं चापसादयितुं

सर्वं राक्षसकुलं नाशयितुं च शिवभक्तेषु प्रधानतमोऽपि तपस्विप्रवरोऽपि स्वाधीनब्रह्मादिदेवगणोऽपि रावणः सीताहरणादौ महापापेऽपि कर्मणि यत् प्रवर्तते स्म, तत्रापि कारणं शूर्पणखा-रावणयोः परस्परं सौभ्रात्रमेव ।

परिव्राजकवेषधारणेन सीतामुपसर्प्य ततो हठात् स्वयं रावणेनापह्रियमाणायाः सीताया रक्षणार्थं रावणेन साकं चिरमायोधनेन प्राणत्यागायापि सन्नद्धोऽभूत् यद् जटायुर्नाम पक्षी, तत्रापि निदानम्—दशरथ-जटायोः सौभ्रात्रमेव ।

श्रीरामचन्द्रस्य चतुर्दशवत्सरवनवासनियमसमाप्त्यनन्तरं पञ्चदशवत्सरारम्भदिने श्रीरामचन्द्रसाक्षात्काराभावेऽग्निसात्करिष्यते स्वीयं शरीरमिति स्वप्रतिज्ञानुसारेणाग्निप्रवेशार्थं भरतेन सर्वविधा व्यवस्था यदक्रियत, यच्च त्वरितेन श्रीरामचन्द्रेण तस्मिन्नेव समये नन्दिग्रामं प्रति समायातम्, तत्रोभयत्र निदानं तयोः सौभ्रात्रमेव ।

तदेवं सहोदरभावे समानेऽपि स्वधर्मानुरागनिबन्धन एव स सौभ्रात्रनामा, अन्यथा दौर्भ्रात्रिनामेति तत्तत्कथासन्दर्भसमालोचनेन स्पष्टं प्रतिभाति । कैकेयी, श्रीसीतादेवी, वाली, रावणश्च कौसल्यायां लक्ष्मणे सुग्रीवे-विभीषणे च तेषां सर्वेषां धर्मपारवश्येऽपि सत्यन्यथा व्यवहरन्ति स्मेति सर्वविदितमिदम् । अधर्मेण व्यवहारफलं तु सर्वै रेवैतैरत्यन्तमापत्तिप्राप्त्या विपरीतमेव संवृत्तम् । तथा च—सहोदरभावो यदि सर्वैषामधुनातनैः काम्यते, तर्हि तत्तद्धर्माक्रमणं विना स आकांक्ष्यमाण एव गुणाय स्यात्, अन्यथा तु दोषायैव ।

इदमत्र भारतीयानां हिन्दुपदवाच्यानामसूयास्पदमेव—यत् माहम्मदादयो यां कामपि समुन्नतिं राजनीतिक्षेत्रे स्वेषां सौभ्रात्रसंरक्षणेन प्राप्तुमभिलषन्ति, तां स्वधर्माविरोधनीमेव समुन्नतिपदवाच्यामपि मन्यन्ते, अन्यथा त्वधोगतिमेव स्वयं प्राप्ताम् । तेषां हि सर्वेषां सौभ्रात्रमन्यादृशं स्वीयं धर्मतत्त्वमपरिवर्तनीयमवलंब्यैव प्रत्यहमभिवर्धते । हिन्दवस्तु स्वधर्मं परिवर्तनीयमनेकरूपं यथेच्छाचाररूपं वा मन्वानास्तु

केचन राजनीतिक्षेत्रे कथंचन प्राप्तोन्नतयः हिन्दुधर्माणामाक्रमणमेव स्वायत्तराजनीतिक्षेत्रस्यापि कृत्यमिति मन्यन्ते, इत्यहो दौर्भाग्यं भारतीयानां हिन्दुपदवाच्यानाम्। वयं तु प्रतीमः—अनेन हि प्रथनेन सौभ्रात्रं नाम किञ्चित् कथंचन कुत्रापि विद्यमानमेव केवलं विघटयितुमेव शक्यते, न संघटयितुं दृढयितुं वा।

भारतवर्षं हि चिरं यद् ग्रामपञ्चायतनादिना शास्यमानमासीत् सौभ्रात्रमनुसृत्य, तदपि धर्मपरतन्त्रतामेव केवलमात्मनः परमं धनं मत्वैव। अहिंसावादेन राज्यसंचालनं राजनीतिक्षेत्रे व्यवहरणं च येषां परमं लक्ष्यम्, ते हि भारतीयानां स्वधर्मेषु आक्रमणेनानिलक्ष्या एव भवन्ति। कायेन वाचा मनसा चाहिंसैव हि—अहिंसा नाम। सांप्रतं तु—कायेनैवाहिंसावादं राजनीतिक्षेत्रे नेतारः परिपालयन्ति—यतः स्वयमन्यैस्ताडिता अपि सहन्त एव केवलम्, न प्रतिताडयन्तीति, अत्र किमशक्तिः कारणम्, उत स्वनीतिपरिपालनैकदृष्टिर्वेति तु विचारणीयमेवैतत्, वाचा मनसा च तु न लेशतोऽप्यहिंसावादमवलम्बन्ते। बहु परानधिकृत्य विपरीतं वदन्ति, बहु मनसा च चिन्तयन्ति। सनातनधर्मावलम्बिनस्तु—केनापि निमित्तेन— न मनसा वाचापि च विपरीतं स्वशत्रूणां विषयेऽपि व्यवहरन्ति। कायेन हिंसा तु न मुख्या हिंसा, मनसा वाचा च हिंसैव तु मुख्या हिंसा। अभिचारो हि नाम तत्र तत्र शास्त्रेषु विधीयमानो मनसा वाचा च हिंसैव, न तु कायेन हिंसा। सनातनधर्मावलम्बिनस्तु यदि मनसा वाचा च हिंसार्थं सन्नद्धा भविष्यन्ति, तर्हि स्वयमितरानपेक्ष्य कारागृहेष्ववस्थायापि तदीयनियमानामप्यनुल्लङ्घनेनाभिचारादि समाचरितुं शक्नुयुरेव। अभिचारोऽपि नाम महापापमिति खलु सनातनधर्मिणां सिद्धान्तः। सोऽपि नाम धर्मरक्षणार्थं कैश्चन महत्यां विपदि समाचर्यमाणोऽन्ततो गत्वाऽऽत्मरक्षणपर्यवसायी न पापलेशायापि स्यात्। सांप्रतं तु राजकीया नियमाः स्वधर्मसंरक्षणेऽपि कारागृहवासादिकं प्रापयन्ति, इति विशेषतश्चिन्ताक्रान्ता एव वयम्—किं किं केन केन कदा कदा कथं कथं करिष्यते ?

येन सोदरभावोऽपि तृणाय मन्येत। धर्माविरोधिन एव सहोदराः सहोदरा नाम, अन्ये तु महोदरा एव सन्त आत्मन एव विपत्तये स्वयमेव निदानं भविष्यन्ति। कैकेयी-वालि-शूर्पणखा-खरदूषणत्रिशिरोविराधमारीच-रावण-कुम्भकर्णादयो धर्मविरोधेन यथेच्छपरस्व-परस्त्री-परपुरुषाद्याक्रमणेन पराक्रमिणोऽपि कां वा दशां प्राप्नुवन् स्वकर्मभिरेवेति सर्व एव विजानन्तु। स्वीयं हि कर्म यथेच्छं शास्त्रमप्यविगणय्य क्रियमाणं भगवानपि तत्परतन्त्रत्वात् सृष्टिस्थितिसंहारनिग्रहानुग्रहादिषु नान्यथयितुमर्हति। प्रधानः शिवभक्तोऽपि रावणः, कथमन्यथा श्रीरामचन्द्रेण नामशेषं प्राप्यत। अतः सादरमिदं सूच्यते—यत् सहोदरभावोऽपि धर्माविरोधी समवलम्ब्यताम्, न तु तद्विरोधी, यः खलु महोदरतामेव प्रणयेत्, न तु सौभ्रात्रम्, तदेव नाम सौभ्रात्रम्—यत् धर्माविरोधी सहोदरभाव इति।

---

# कालिदास-वेदान्तदेशिकयोः सन्देशकाव्यविरचने तारतम्यम्

[ निबन्धकः—मद्रपुरीविश्वविद्यालये विमर्शनविभागे छात्रस्थानमधिरूढः टि. के. रामचन्द्रशर्मा ]

इह खल्विदानीमुपलभ्यमानेषु विविधेषु[1] सन्देशकाव्येषु कविसार्वभौम-कालिदासविरचितं मेघसन्देशाख्यं काव्यरत्नमेव प्राथमिकं प्रशस्यतमं चेति विदितचरमनुमतं च सर्वेषां विमर्शकानां सहृदयानामपि। तत्र प्राचीनेषु रामायणादिमहाकाव्येषु भारतादीतिहासेषु चेतिवृत्तांशप्राधान्येन हनूमत्प्रेषण-

1 विविधानां सन्देशकाव्यानां नामानि, तत्प्रतिपादिता विषयाश्च चिन्ताहरण-चक्रवर्तिना, ई. पि. राधाकृष्णेन चान्यत्र प्रकाशितानीति नात्र प्रतन्यन्ते।

कृष्णदौत्यगमनादिकथाभागेषु विद्यमानेष्वपि एकस्मोन्मुखतया सन्देश-प्राधान्येन पृथक्काव्यं कालिदासेनैव प्रथमं विरचितम्। ततश्च बहुभिरसं-ख्यानि सन्देशकाव्यानि विरचितानि। एषु बहुष्वपि विरहावस्थापन्नो नायकस्तादृशी नायिका वा सन्देशकर्ता, सन्देशप्रापणोपयुक्तपटुकरणादि-रहितश्चेतनोऽचेतनो वा सन्देशहारकः, ( अत्र च संभाव्यमानस्यानौचित्यस्य कथञ्चित्परिहारः ) विप्रलम्भश्रृङ्गारस्य, मतविषये भक्तिरसस्य वा प्राधान्यम्, द्विधा विभक्ते काव्ये पूर्वस्मिन भागे मार्गवर्णनमुत्तरस्मिन सन्देश-विषय-नायिका-नायकस्थानप्रवृत्त्यादिवर्णनम्, सन्देष्टव्यवस्तुकथनं चेत्येवं बहुधा समानच्छायत्वं परिदृश्यते। विरलतया पुनर्मनोदूत-शीलदूतादीनि शान्तादिरसान्तरप्रधानानि सन्देशकाव्यानि कैश्चिद्विरचितानि। कुत्रचि-दुद्धवदूत-विप्रदूतादौ सन्देशहारकत्वेन तत्करणपटुरेव नियोजितः। अथापि बाहुल्येन तावत्सन्देशकाव्यविरचने कवयः कालिदासमनुकुर्वन्तीत्यविप्रति-पन्नम्।

तत्र मेघसन्देशे कविसार्वभौमः "श्रृङ्गार एव मधुरः परः प्रह्लादनो रसः" इत्युक्तप्रकारेण सर्वजनीनत्वादत्यन्तसुन्दरो यः परस्परप्रार्थनात्म-रतिस्थायिभावः श्रृङ्गारः, तत्राप्युभयप्रार्थनात्मकाशाबन्धस्य परा काष्ठा यत्र विप्रलम्भे, तादृशरससार्वभौमविप्रलम्भश्रृङ्गारानुगुणोत्तमप्रकृतिकविरहिनायक-चित्तवृत्तिवर्णनेन, तदुचितगुणालङ्कारादियोजनेन, देशकालप्रवृत्त्यादीनां यथोचितं वर्णनेन च सहृदयान् श्रवणसमकाल एव तन्मयीभवनमहिम्ना विगलितवेद्यान्तरान् रसामृतसागरे निमज्जयति। कालिदासमनुकुर्वता-मन्येषां नैतादृशी सन्देशकाव्यरचनाचातुरी परिदृश्यते। तत्र सर्वाकार-मपि मेघसन्देशमनुकुर्वाणं मेघसन्देशादन्यूनप्राशस्त्येन अथवाऽधिकप्राशस्त्-त्वेन कैश्चित्परिगण्यमानं *वेदान्तदेशिकविरचितं हंससन्देशमवलम्ब्य कालिदास-देशिकयोः सन्देशकाव्यविरचने तरतमभावो विचार्यते।

---

* वेङ्कटेशवेदान्तदेशिक

रामायणान्तर्गतं सीतां प्रति हनूमत्सन्देशरूपं कथावस्तु मनसि निधाय[1] मेघसन्देशं विरचयन्नपि कालिदासो बुद्धिपूर्वकमेवाचेतनं सन्देशार्थ-प्रापणपटुकरणरहितं मेघं सन्देशवहनकृत्ये नियोजयति । अत्र सम्भाव्य-मानमनौचित्यमप्युत्थाप्य परिहरति—

"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।।" इति ।।

अत्रेदमाकूतम् । कान्तायाः सविधे ये उद्यानलताकुसुममन्दमारुतहंसभ्रमर-नीलकण्ठकोकिलकूजितमेघचन्द्रोदयादयो ललितसुभगाः पदार्थाः कामिना-मत्यन्तमादरणीया भवन्ति सुखप्रदाश्च, त एव विरहे दृश्यमानाः श्रूयमाणाः स्मर्यमाणा वा उद्दीपकत्वात्कान्तास्मरणकारिणः, अत एव नितान्तं चित्तविक्षेपका भवन्ति । एभिर्विशेषतो विक्षिप्तचित्ताश्च कामिनश्चेतनाचेत-नादिविवेचनासमर्था यथाकथञ्चिन्मनः समाधातुम् अचेतनानपि संबोध्याति-दुःसहं स्ववृत्तान्तं ख्यापयन्तः प्रलपन्ति, परितो भ्रमन्ति, कदाचित्सन्दि-शन्त्यपीति सकलकविसहृदयलोकप्रसिद्धमेतत । अतो लोकस्वभावानुरोधे-नैव मेघः सन्देशवहनकृत्ये नियोजित इति । अपि च "मेघालोके भवति सुखिनोऽप्यन्यथावृत्तिचेतः कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ।" इत्यनेन महाकविः महतश्चित्तविक्षेपस्य संभाव्यताम्, अत एवाचेतनस्य सन्देशा-वहनकृत्ये नियोगौचित्यं च स्फुटं प्रकाशयति[2] ।

---

1 "जनकतनयास्नानपुण्योदकेषु", "रामगिर्याश्रमेषु", "रघुपतिपदैरङ्कितं", "इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा", इत्यादिभिर्वाक्यैरयमर्थः प्रकाश्यते । तथा चाह मल्लिनाथः—"सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघ-सन्देशं कविः कृतवानित्याहुः" इति ।

2 इदमन्यदचेतनस्यैवंविधे कृत्ये नियोगस्योचितं निदानमुत्पश्यामो यदेवं-विधायामवस्थायां विशेषतः स्मृतिपथमारूढानां निगूढत्वादन्यमनुष्येषु प्रकटयितु-

अत्रेदमवधेयम्। मेघचन्द्रादिदर्शनसमुद्दीपितविरहवेदनानां यथाकथञ्चित्कान्ताप्रतिसमागममभिलषतां परस्परवृत्तान्तपरिज्ञानमपि महद्भाग्यममभिमन्यमानानां कामिनां प्राधान्येन त्रिविधा प्रवृत्तिरवस्थाभेदाद्विभिन्ना कविसहृदयलोकेषु दरीदृश्यते।

तत्र केचिदतिविक्षिप्तचित्ता अपि बहु विलप्यान्ते धीरत्वादात्मानं समाश्वास्य यदि तदानीं निपुणं विश्वस्तं च दूतं लभेरन् तदा तन्मुखेन स्ववृत्तं जायायै सन्दिश्य तस्या अपि तद्द्वारा प्रतिसन्देशमभिकाङ्क्षन्ति। तद्वार्तापरिज्ञाने पुनः सोत्साहं तदधिगमाय प्रयतन्ते च।

अपरे तु विविधैः प्रलापवचनैरसमाश्वस्तचित्ता उत्सुकिन आपन्नीरवः अतिमृदुललितायाः कान्तायाः पूर्वमननुभूतातिदुःसहविरहवेदनावशाद्विपत्तिमपि शङ्कमानाः, समर्थदूतलाभमेव न प्रतीक्षन्ते; अपि तु पुरोदृष्टे कान्तास्मरणकारिणि कस्मिंश्चिदचेतने चेतने वा स्वोद्दिष्टकार्यनिर्वहणोपयुक्तान्सर्वानपि धर्मानारोप्य यथावच्छ्रावयन्ति तं स्वहृद्गतं सर्वमपि सन्देशजातम्। एवमारोपितसुहृदि संविभक्तनिजदुःखाश्च कथञ्चित्समाश्वसन्ति "स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति" इति न्यायेन। न पुनस्ते कदाचिदपि तस्मात्प्रतिवचनं स्वकार्यसंपादनं वा प्रतीक्षन्ते। स्ववाक्यश्रवण-धारणादिसम्भाव्यत्वप्रदर्शनेन स्वसम्भाषणौचित्यप्रदर्शनमेवात्र त्रिविधधर्मसमारोपस्य प्रयोजनम्, न पुनस्तत्कार्यस्य यथार्थतो निर्वहणसामर्थ्यम् असम्भवात्। असम्भवत्खलु वस्तु वर्ण्यमानं सम्भावनाबुद्धिविरहादनौचित्यमावहन्न सहृदयमनसि प्रतिफलितुमीष्टे येन तन्मयीभावः स्यात्।

एके पुनः कामातिरेकान्नितान्तं विमूढचित्ता मुक्तकण्ठं प्रलपन्तो गुहादिगतं प्रतिध्वनिमपि प्रतिवचनमिति, वातान्दोलितलताकम्पं प्रकृतानुगुण्येनाङ्गीकारानङ्गीकारान्यतरसूचकशिरःकम्प इत्येवमादि विभावयन्तो भ्रान्ता इव विविधं चेष्टमानाः, क्वचिदप्यनवस्थिताः पर्यन्ते यादृच्छिकलब्ध-

---

मनुचितानाम् असहनतया हृदयं भित्वा वाग्रूपेण बहिर्निष्क्रम्यमाणानां विविधानामर्थानां विस्रम्भेण कथनसौकर्यमिति।

समागमा विरमन्ति। अथैवमन्यास्वपि विरहिप्रवृत्तिषु विद्यमानासु अवस्था-भेदप्रयुक्तप्रवृत्तित्रयकथनमत्र प्राधान्यात्समूहत्रयावलम्बनेन। आसु प्रथमा-वस्था रामायणे वाल्मीकिमहर्षिणा, द्वितीया मेघसन्देशे, तृतीया विक्रमो-र्वशीये च कालिदासेन सप्रपञ्चमौचित्यानुरोधेन वर्णिता दृश्यन्ते।

अत्र मेघसन्देशे मेघं चेतनीकृत्य, विशेषतः कान्ताजीवितधारणार्थं[1] प्रेष्यमाणस्यावश्यं भाविनो धर्मविशेषांस्तस्मिन्नारोप्य समीक्ष्य विनिवेशितैः पदपदार्थतद्धर्मैः, तथा निखिलसन्देशवाक्यश्रावणानन्तरं प्रतिसन्देशस्य,[2] प्रतिवचनस्य, मेघस्य यक्षकन्यासविधगमनस्य वा असम्भवतोऽवर्णनेन[3] च परामौचितीं निर्वहन् महाकविः सर्वानपि सन्देशप्रबन्धप्रणेतॄनतिशेत इति नो न विदितं सन्देशप्रबन्धपरिशीलिनाम्। सर्वसाधारण्येन सुल-भावबोधाय कांश्चिदर्थान् कालिदासस्यौचित्यैकपरायणत्वसाक्षिभूतानत्रोदाह-रिष्यामि।

जीवनस्य धारक एव दयिताजीवितधारणार्थं प्रेषणीयः, तस्यैव तत्करण-समर्थत्वादित्याशयेनाह महाकविः—"दयिताजीवितालम्बनार्थी जीमूतेन" इति। अत्र जीमूतपदप्रयोगेण योऽर्थविशेषो लभ्यते न स वारिवाहादि-पर्यायान्तरप्रयोगेणेति पश्यत कविसार्वभौमस्य समीक्ष्य पदानां विनिवेशे जागरूकत्वम्। एवमर्थानुरोधात्प्रयुक्तोऽयं जीमूतशब्दः शब्दचित्रमनु-प्रासमपि पुष्णातीति नितरामुत्कर्षः।

1 "दयिताजीवितालम्बनार्थी" इत्यनेनायमर्थः प्रकाशितः।

2 रामशास्त्रिविरचिते मेघप्रतिसन्देशाख्ये काव्ये बहुप्रकारेणातिरमणीयेऽ-प्यस्मिन्विषये किञ्चिदनौचित्यमापतितम्। अत्र हि मेघः सर्वमपि यक्षोपदिष्टं तद्दयितां बोधितवानिति वर्णितमसम्भावनाबुद्ध्युपहतं न सहृदयहृदयकमलं विका-सयति। नैषधीयचरिते हंसप्रतिसन्देशस्तु प्रख्यातत्वादितिवृत्तस्य नासम्भावना-बुद्धिमुपजनयति। एतच्च विवृतमस्माभिर्नाट्यशास्त्रसमीक्षायाम्। पृ. ६५।

3 केचित्प्रतिसन्देशसूचकत्वेन कुत्रचिदुपलभ्यमानाः श्लोकाः प्रक्षिप्ता इत्येव सर्वैरङ्गीक्रियते।

अथ पूर्वमपरिचितस्य दूतकर्मणि नियोगोऽसम्भवत्कल्पः, सम्भवन्नपि वा अनौचित्यमावहेत्, सोऽपि तत्प्रार्थनां कदाचिन्नाङ्गीकुर्यादित्येवंविधामाशङ्कां परिहर्तुमाह—"सन्तप्तानां त्वमसि शरणं तत्पयोद" इति। सोऽयमसावमुत्रदेशीय इत्येवमादिप्रविभागं विनैव सन्तप्तसामान्यस्य पयोदानेन शरणभूतत्वात्सुगृहीतनामधेयो भवान् यतस्ततो ममापि सन्तप्तस्य त्वमेव शरणमिति भावः। अत्र सन्तप्त-पयोद-शरणादिपदप्रयोगौचित्यं सहृदया एव विदांकुर्वन्तु।

अथास्ति मयि तव भर्तुः सन्देशपरा सरस्वतीति बोध्यमानं मेघं कदाचिदसम्भावनाबुद्धिवशाद् यक्षकन्या न विश्वस्यादपीति परिशङ्कमान इव यक्षः प्रथमवक्तव्यं वाक्यम् असम्भावनाबुद्धिदूरीकरणयोग्यं मेघायोपदिशति—"भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहम्" इति। अत्राम्बुवाहशब्देनेदं प्रकाशितं यत्प्रकृत्यैव वोढा खल्वहं सन्तापशान्तिकरस्य पदार्थस्य, तन्न भवत्या मयि सन्देहः कार्य इति। किञ्चात्रैवाविधवे इति सम्बोधनम्, "अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वाम्" इत्यत्र घनशब्दप्रयोगः, "वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः" इत्यत्र धीर इति विशेषणम्, "एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः" इत्यत्र साधो इति सम्बोधनं च तत्तत्सन्दर्भानुगुणं परिवृत्त्यसहिष्णु कस्य वा सचेतसो हृदयकमलं न विकासयेत्।

1 इदमत्रावधेयम्। कामातिरेकाक्रान्तान्तं विक्षिप्तचित्ता अपि विरहिणो यं कञ्चिदचेतनं तत्त्वेन पश्यन्तो न सन्देशप्रापणकृत्ये नियोजयन्ति, किन्तु स्वोद्दिष्टकार्यनिर्वहणोचितचेतनधर्मारोपात्तादृशचेतनबुद्ध्यैव। "कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु" इति त्वारोपितोचितचेतनधर्मस्यैव दूतकर्मणि नियोगे औचित्यं दर्शयति, न पुनरनारोपितचेतनधर्मस्यापि। अतश्चैतादृशेषु प्रबन्धेषु यथासन्दर्भं सन्देशवहनोपयुक्तधर्माणां तद्रहितेष्वध्यारोपणे कविना अवधानवता भाव्यम्। समारोपितेषु चैतेषु धर्मेषु यथत्पद्धकरणादियुक्तचेतनपुरुषादिप्रेषणे उचितमनुचितं वा भवति तत्सर्वमत्रापि समानम्—इति।

अथ कामित्वात्सन्देशप्रेषकस्य तच्चित्तवृत्त्यनुरोधेन मेघगिरिनद्यादिषु तत्र तत्रोचितचेतनधर्माध्यारोपपूर्वकं विविधान्कामिव्यापारान्वर्णयन्महाकविः "भावानचेतनानपि चेतनवच्चेतनानचेतनवत् व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया" इत्ययं न्यायो न खल्वेकत्र चेतनत्वकथनमात्रेण तद्धर्मारोपेण वा सम्पादितो भवति, किन्तु यथासन्दर्भं तत्र तत्र तन्निर्वाहे सत्येवेति बोधयति। अपि च सन्देशप्रापकस्य विशेषतो दयितां प्रति, ये ये धर्मा गुणाश्चावश्यं भाविनः तेषां सम्पादने कविसार्वभौमस्यान्यादृशं जागरूकत्वं मेघसन्देशे परिदृश्यते। तथा हि—

( क्रमशः )

---

# श्रीरामायणतत्त्वम्

[ निबन्धकः—श्रीसोमसुन्दरशर्मा ]

श्रीमद्रामायण-भारत-भागवत-पाद्म-कौर्म-विष्णुपुराणागस्त्यसंहितादि-निखिलास्मदीयविशिष्टसद्ग्रन्थेषु श्रीरामपरब्रह्ममूर्तेः हरिहरब्रह्मता च मूर्तित्रयातीतपरवस्तुस्वरूपता च प्रतिपादिता। तत्सर्वमपि विषयजातं सम्यक् संशोध्य निखिलश्रीरामभक्तानामत्यन्तोल्लासोत्पादनाय विषयविवेचन-पुरस्सरतया प्रमाणवचनान्यत्र प्रकाश्यन्ते। श्रीराममूर्तेर्विष्णुस्वरूपता-प्रतिपादकप्रमाणवचनानि श्रीमद्रामायणे बालकाण्डे—

"त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया
राज्ञो दशरथस्य त्वमयोध्याधिपतेः प्रभो।
धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः।
तस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च।
विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम्।" इति॥

त्वामिति अस्मद्दुःखहरणस्य त्वदेकसाध्यत्वादवतर्तुं नियोक्ष्या-

महे, तदेवाह—त्वामिति। तस्य सर्वातिशायित्वं दर्शयति—अयोध्याधिपतेरिति। धर्मज्ञस्येत्यादि राजविशेषणानि। ह्रीश्रीत्यादि राजपत्नीविशेषणानि अवतारयोग्यताध्वननाय। आत्मानं सोपकरणमात्मानम्।

"अन्येद्युः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत्।
तदन्येद्युः सुमित्रायां मननात्मा च लक्ष्मणः।
सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये।"

इति पाद्मोक्तेः। अत्र आत्मानमित्युक्त्या शङ्खचक्रानन्तात्मनामपि भगवद्रूपता सूचिता, 'हुङ्कारेण भवानिवे'ति वचनात्। पाञ्चजन्यः शब्दमात्रेण सकलभुवनक्षोभकत्वाद् विष्णुतुल्य एवेति बोध्यम्। चतुर्विधमिति चातुर्विध्यविधानं रावणेन्द्रजिल्लवणगन्धर्ववधादीनां प्रत्येकं देवकार्याणां सद्भावात्। अयोध्याकाण्डे—

"स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः।

युद्धकाण्डे—

"सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः।
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम्।

उत्तरकाण्डे—

पितामहवचः श्रुत्वा विनिश्चित्य मुहुर्मुहुः।
विवेश वैष्णवं तेजस्सशरीरः सहानुजः॥

पद्मपुराणे देवान् प्रति विष्णुवचनम्—

"मा भैष्टेति (?) दत्त्वा चाभयदक्षिणाम्।
पुत्रो दशरथस्याहं भविष्यामि भवत्कृते।

तत्रैव स्तोत्रसमये श्रीरामं प्रति श्रीशिवोक्तिः—

त्वं हि नारायणः श्रीमान् सीता लक्ष्मीः सनातनी
माता सर्वस्य वैदेही पिता त्वं रघुनन्दन॥

श्रीमद्भागवते—

तस्यापि भगवानेष साक्षाद् ब्रह्ममयो हरिः ।
अंशांशेन चतुर्भागात् पुत्रत्वं प्रार्थितः सुरैः ।
राम-लक्ष्मण-शत्रूघ्न-भरता इति संज्ञया ॥"

कूर्मपुराणे—

रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः ।
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ।
सर्वे शक्रसमा युद्धे विष्णुभक्तिसमन्विताः ।
जज्ञे रावणनाशार्थं विष्णोरंशेन विश्वकृत् ।

अध्यात्मरामायणे ब्रह्माणं प्रति विष्णूक्तिः—

ब्रह्मल्लोकोपकाराय जनिष्यामि रघोः कुले ।
इत्युक्त्वाऽन्तर्दधे विष्णुस्तस्माद्रामो हरिः स्फुटम् ॥

विष्णुपुराणे गद्यम्—दशरथस्यापि भगवानब्जनाभो जगत्स्थित्यर्थमात्मांशेन राम-लक्ष्मण-भरत-शत्रुघ्न-स्वरूपेण चतुर्धा पुत्रत्वमयासीत् ।

धर्मखण्डपूर्वभागे श्रीशिववचनम्—

ततो यक्षाः सगन्धर्वा मुनयश्च तपोधनाः ।
प्रपन्नाः शरणं देवं शङ्खचक्रधरं प्रभुम् ।
हरिं नारायणं विष्णुं वयं देवगणैः सह ।
स्तुतिभिः संस्तुतस्तत्र प्रसन्नो नो भवत्विति ।
रामो दाशरथिर्भूत्वा साकेतनगरे शुभे ।
लक्ष्मणेन सहायेन भरतेन यवीयसा ॥

अगस्त्यसंहितायामगस्त्यवचनम्—

क्षीराब्धेर्देवदेवोऽसौ लक्ष्म्या नारायणो भुवि ।
सशेषशङ्खचक्राभ्यां देवैर्ब्रह्मादिभिः सह ।
त्रेतायुगे दाशरथिर्भूत्वा नारायणोऽव्ययः ।
शेषोऽभूल्लक्ष्मणो लक्ष्मीर्जानकी शङ्ख-चक्रके ।

जातौ भरतशत्रुघ्नौ देवास्सर्वेऽपि वानराः।
बभूवुरेवं सर्वेऽपि देवर्षिभयशान्तये ॥

उमासंहितायां श्रीशिवः—

चक्रपाणिरभूद्राम इन्दिरा धरणीसुता।
अनन्तो लक्ष्मणो जातो भरतश्चक्रमेव हि।
शत्रुघ्नोऽभूत्पाञ्चजन्यमित्युमासंहितोक्तितः।
रामो विष्णुरिवाभाति ह्येवमन्यत्र भूरिशः।

हिरण्यगर्भसंहितायाम्—

नारायणं जगन्नाथमभिरामं जगत्पतिम्।
कविं पुराणं वागीशं रामं दशरथात्मजम्।
श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहम्।
एवं हिरण्यगर्भाख्यसंहितोक्त्या च राघवम्।
श्रीविष्णुमाह देवर्षिर्धर्मराजाय धीमते।

श्रीरामतापन्याम्—

चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ।
रघोः कुलेऽखिलारातिराजतेयो महीस्थितः।
स राम इति लोकेषु विद्वद्भिः परिकीर्तितः।

श्रीमहाभारते—

"विष्णुर्नृणां स्वभक्तानामपवर्गप्रदो हरिः।
संप्रार्थितो देवगणैर्भूत्वा रघुकुलोत्तमः।
विनिहत्य दशग्रीवमयोध्यां प्राप धर्मवित्।
एवमाश्चर्यपर्वोक्त्या रामो नारायणः स्वयम्।
सभाद्रोणारण्यसंज्ञपर्वस्वप्युक्तमञ्जसा।
राघवो विष्णुरित्येव प्रोक्तं तत्र महात्मभिः ॥
इत्याद्यनेकशास्त्रेषु विष्णुरित्येव राघवः।
वर्णितो मुनिभिस्तद्वच्चिह्नैव इत्यभिवर्ण्यते।

तथा हि श्रीराममूर्त्तेः परमेश्वरस्वरूपत्वप्रतिपादकप्रमाणवचनानि—
उत्तरधर्मखण्डे श्रीशिवः—

अहं मानुषरूपेण रामो भूत्वा हराम्यघम् ।
रामो दाशरथिश्चाहं कौसल्यानन्दवर्धनः ।
शत्रुघ्नभरताभ्यां च लक्ष्मणेन महात्मना ।
देवताभ्यर्थितः सत्यमयोध्यायां भवाम्यहम् ।
लक्ष्मणोऽपि हरिः साक्षात् सेवां मम करिष्यति ।
रामो ममांशसंभूतः सीताऽपि गिरिजांशजा ।
इत्यादिधर्मखण्डोक्तरीत्या रामः शिवः स्मृतः ।
एवं कवेरजाखण्डेऽप्युक्ता रामस्य शंभुता ।

तत्रर्षीन् प्रति श्रीशिववचनम्—

अहं दाशरथी रामो भूत्वा वै दण्डकावने ।
राक्षसान्निखिलान्दुष्टान् हत्वा मोक्षं ददामि वः ।
एवं तपस्विनो विप्रान् प्रोवाच स महेश्वरः ।

आश्चर्यपर्वणि पुरा देवान् प्रति श्रीशिवेनैवमुक्तमिति श्रीरामं प्रति मतङ्गेनोच्यते—

श्रीशिवः—

रामोऽहन्तु भविष्यामि विष्वक्सेनसमन्वितः ।
दशाननपुरोगांश्च हनिष्ये राक्षसान् बहून् ।
ऋक्षवानररूपेण यूयं तु जनयिष्यथ ।
विहरिष्यामि (?) वने पुण्ये गोलाङ्गूलनिषेविते ।
नदीजलेन शुद्धेन तृप्तो मूलफलेन च ।
इत्युक्ता देवदेवेन भूतनाथेन राघव ।
संप्रहृष्टाः सुरगणा एवं जग्मुर्यथागतम् ।
स त्वं राम महाबाहो शङ्करो लोकशङ्करः ॥

वधार्थं रावणादीनां जातो रघुकुले शुभे ।
एवन्तु शेषधर्मोक्तरीत्या रामः शिव इतीर्यते (?) ।
ब्रह्माण्डस्कान्दमत्स्यादिष्वेवं प्रायो रघूत्तमः ।
शिव इत्युदितोऽन्यत्र तथा ब्रह्मेति कथ्यते ।

श्रीराममूर्तेर्ब्रह्मस्वरूपताप्रतिपादकप्रमाणवचनानि—

श्रीमद्रामायणे रामो ब्रह्मेत्याहाग्निजः पुमान् ।
प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप । इति बालकाण्डे ।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ।
गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति ।
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति । इति संक्षेपरामायणे ।

ब्रह्माण्डपुराणे—

लोकस्रष्टा पुरा देवैरवतीर्णो महीतले ।
राम इत्युच्यते लोके रावणादिवधान्मुने
एवं ब्रह्मपुराणेऽपि रामस्योक्ता विरिञ्चिता ।

इत्याद्यनेकपुराणवचनैः श्रीराममूर्तेः ब्रह्मस्वरूपत्वमप्रतिहतमेवेति श्रूयते । श्रीराममूर्तेः हरिहरस्वरूपताप्रमाणवचनानि स्कान्दे रावणवधाय सर्वदेवता-लोचना-वसरे अशरीरिवाक्यम्—

उभाभ्यां विनिहन्तव्यो रावणो लोकरावणः ।
अशरीरिवचः श्रुत्वा प्रहस्य हरिशङ्करौ ।
तथैव चक्रतू राजन् रामो हरिहरात्मकः ।
परब्रह्मस्वरूपोऽयं प्राकृतो न हि मानुषः ।
शिवरूपेण संहारं विष्णुरूपेण पालनम् ।
शिवविष्णुस्वरूपेण परब्रह्मैव केवलम् ।

दुर्वासोरामायणे ऋषीन् प्रति श्रीरामोक्तिः—

विष्णुयामले नारदः—

ब्रह्मविष्णुशिवाद्या यज्जगज्जन्मादिकारणम् ।
सदसद्रूपमव्यक्तं तद्रामोऽभूद्रघोः कुले ।

स्कान्दे—

रामो विष्णुश्च शंभुश्च त्रयो देवाश्च देवताः ।
सीता च पार्वती लक्ष्मीर्वाणी देवस्त्रियोऽपि च ।
त्वं शंभुरेव भूतेशो विष्णुरूपेण चाव्ययः ।
चतुर्मुखस्वरूपोऽसि त्रिमूर्तिस्त्वं परात्परः ।

हिरण्यगर्भसंहितायाम्—

ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा ।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ।

पाद्मे—ब्रह्मा विष्णुश्च रुद्रश्च त्वमेव रघुनन्दन ।
सहस्रशीर्षा पुरुषस्सहस्राक्षः सहस्रपात् ।

ब्रह्माण्डे वसिष्ठः—

ब्रह्मविष्णुशिवरूपतोऽखिलम् पाति हन्ति सृजति स्वयं प्रभुः ।
राम एव मुनिवर्य ततोन्यद् नास्ति नास्ति परमं खलु दैवम् ॥

इत्यादिस्कान्दपाद्मैश्च स्तवराजोक्तमार्गतः ।
अगस्त्यसंहिताश्लोकैः परो रामस्त्रिमूर्तितः ।
ब्रह्मस्तोत्रे च तापिन्यां रामस्योक्ताऽखिलात्मता ।
तथा त्रिमूर्त्यतीतत्वे सर्वकारणरूपता ।
तस्मात्तु तत्त्वजिज्ञासोः परमार्थप्रकाशनम् ।
विश्वामित्रेण रचितमध्यात्मपदपूर्वकम् ।
रामायणं रामभक्ततुष्टयेऽत्र प्रकाश्यते ।

---

# प्रशान्तरत्नाकरम्

(पूर्वानुवृत्तम्)

[ निबन्धकः—श्रीकालीपदतर्काचार्यः ]

र-माता—अहह ! आर्यपुत्र, विचेतनापि अन्तरान्तरा आत्रेयस्य वत्सायाः स्नुषायाश्च परिक्लेशं स्वप्नं गतेव स्मरन्ती विषीदामि, नास्ति मे मोहेऽपि प्रशान्तिः ! अहह ! सुदुःसहापि क्षुधातृष्णाप्रभवा वेदना तथा न व्यथयति यथा किल वत्सस्य आत्रेयस्य वत्साया वध्वाश्च सुदुःसहं कातर्यम् ! तत् कमद्य शरणमुपेत्य व्यसनप्रतीकारं करोमि। किञ्च गण्डस्योपरि विस्फोटकेनेव प्रदोषेऽपि वत्सस्य रत्नाकरस्यादर्शनेन सुतरां शङ्कितास्मि। तदस्या विपत्तेः प्रतीकाराय कमिदानीं शरणं गच्छामः ?

च्यवनः—ब्राह्मणि, देवतां ! देवतामेव शरणं गच्छ। विपत्तौ देवतामन्तरेण कोऽन्यः शरणं दुर्गतानाम् ?

र-माता—आर्यपुत्र, अपि नाम देवताः सन्ति ?

च्यवनः—प्रिये, किमिदं ब्रवीषि ?

र-माता—यदि सन्ति, किमिति तथा कातरं विलपतां पदे पदे कृपां भिक्षमाणानामपि नास्माकं दयन्ते, तन्नूनमसन्तो देवाः।

च्यवनः—ब्राह्मणि, मा मैवम्, नैवं देवतामधिक्षेप्तुमर्हसि। लोकानां स्वेनैव कर्मणा जनितमदृष्टमनुपतन्तो देवा नार्हन्ति स्वातन्त्र्येण किञ्चित् कर्तुम्, तदलं देवताधिक्षेपमहापातकेन। अधिक्षिप्यतां स्वमेवादृष्टं येन वयं तथा दुःखमये विपाके निक्षिप्ताः स्मः।

र-माता—आर्यपुत्र, नावगच्छामि, यद्याराधिता अपि देवाः प्रीणिताः स्वच्छन्दतो नार्हन्ति किञ्चित् सम्पादयितुं, कथन्तर्हि देवा आराध्यन्ते ?

च्यवनः—ब्राह्मणि, न जानासि तत्त्वं, यदेवं वदसि !

र-माता—किमिव ?

च्यवनः—देवाराधनेति नित्योऽयं विधिर्गृहस्थानाम्। अकृता सा प्रत्यवायमुत्पादयेत् तेन च कष्टात् किमपि कष्टतरमापतितं स्यात्।

र-माता—किमितोऽपि नः कष्टतरम् ?

च्यवनः—ब्राह्मणि, निर्विचारमभिहितम्। तथाहि पश्य,

अद्याप्यावासहेतोः परिजनसहिता वृक्षमूलं न याता
सोच्छ्वासैः पुत्रपौत्रादिभिरपि कलिता यापयस्येव कालम्।
अद्याप्यानन्दधारां वहसि निजदृशा लोकयन्ती स्ववर्गं
श्रोत्रेणाकर्णयन्ती स्वपरिजनकथां विन्दसेऽद्यापि मोदम् ॥

तद् देवाराधनामकुर्वाणा प्रत्यवायपराक्रमेण किमेतावदपि क्षपयितु-मिच्छसि ?

र-पत्नी—( संज्ञां लब्ध्वा ) अहो ! अवसन्नास्मि ! मातः ! अथ अद्यापि नागतस्ते पुत्रः ?

र-माता—वत्से, स्थिरा भव, एष आगतप्राय एव।

र-पत्नी—अप्रकाशेन जानामि प्रदोषो वर्तत इति। तदद्यापि नागतः ? हा हतास्मि मन्दभागिनी। न जाने किमतः परमपि कष्टतरं स्यात् ! अहह ! एष प्राणाधिको वत्सो मे मूर्च्छितः क्षितौ शेते ! दुर्वहञ्चेदं शरीरम् ! आर्यपुत्र ! क्वासि ? कियद्दूरे वर्तसे ? दृढं शङ्कितास्मि, तदेहि, सत्वरमेहि।

आत्रेयः—पितामह, कथमद्यापि तातो नागतः ?

च्यवनः—वत्स, स्थिरो भव, एष आगतप्राय एव।

आत्रेयः—सुचिरं कथयसि आगतप्राय इति, तन्नातः परं विश्वसिमि ! अहो ! शुष्कः कण्ठो मे, नार्हामि वाचमपि वक्तुम् ! घूर्णते शिरः ! क्षीणा दृष्टिः ! अवशं शरीरम् ! मातः ! कण्ठः शुष्यति ! दीयतां पानीयम्, ( मूर्च्छति )।

सर्वे—वत्स आत्रेय, किमेवं करोषि ?

च्यवनः—वत्से, शीघ्रं पानीयमाहर ।

र-पत्नी—हा देव, हा आर्यपुत्र, ( सत्वरं निष्क्रम्य पानीयमादाय प्रविश्य ) वत्स, इदं पानीयम् ! हा हा वत्स, किमेवं मूर्च्छां गतोऽसि ?

च्यवनः—( चक्षुषोः पानीयं निक्षिप्य ससंज्ञं दृष्ट्वा ) एष संज्ञां लभते !

आत्रेयः—पितामह, देहि पानीयम् !

र-माता—वत्स, इदं तत् पानीयं, पीयताम् । ( पानीयं समुपनयति )

आत्रेयः—( पानीयं पीत्वा ) आः ! समुज्जीवितोऽस्मि । मातः ! पितामह, पितामहि, यूयमपि पानीयं पिबत । येन पितुरागमनकालं यावत् स्वस्था भविष्यथ ।

च्यवनः—अहो वात्सल्यमात्रेयस्य ! भवतु, ब्राह्मणि, तदेव क्रियताम् ।

( सर्वे पानीयं पिबन्ति )

र-माता—आर्यपुत्र, किञ्चिद् वक्तुमिच्छामि ।

च्यवनः—कथय ।

र-माता—आत्रेयस्य स्नुषायाश्च वैक्लव्यं समीक्ष्य दृढं शङ्कितास्मि, रत्नाकरोऽपि सुतरां विलम्बते, तद् यदि नात्यायासकरं तदा प्रतिवेशिगृहे तावन्तं वृत्तान्तमावेद्य कथमपि शरावार्द्धमितं तण्डुलं समासादय, एवमपि वत्सयोरनयोः प्राणान् धारयितुं शक्नुयाम ।

च्यवनः—ब्राह्मणि, न जानासि प्रतिवेशिनामत्रत्यानां हृदयं, येनैवं ब्रवीषि, तथाहि

> बहुकृत्वः कृता भिक्षा मया तेषां समीपतः ।
> श्रुता च परुषा वाणी या स्मृता दहतीव माम् ॥

र-माता—यद्येवं धनदत्तस्य वणिजः समीपं गत्वा नातिचिरं निर्यातनीयेन मूल्येन तण्डुलानेतावन्मितान् समानय ।

च्यवनः—ब्राह्मणि, प्रभूतमृणं तस्मात् पुरैव गृहीतवानस्मि, येन धनदत्तः

साम्प्रतं मां समीक्ष्य दूरे तिष्ठति, नालापमपि कुरुते। किं बहुना कथञ्चित्तद्दर्शनपथं गतः परुषामपि वाणीं प्रयुङ्क्ते। ब्राह्मणि, अपराधो मे तस्माद् गृहीतपूर्वमृणं न निर्यातितमिति। तत्रैव पुनरपि ऋणार्थं गमनमुपदिशसि ? अथवा निष्फलमेव तत्र गमनमिति।

आत्रेयः—नहि नहि तत्र ऋणार्थं न गन्तव्यम्, हीनः खल्वसौ ; कदाचित्तस्य पुत्रो मां दरिद्रपुत्र इत्युपहसितवान्, तत्र नानेन प्रतिषेधः कृतः, परं स्मितेन पुत्राचरणस्य आनुकूल्यमेव प्रदर्शितम्। तत् तत्र न गन्तव्यम्।

च्यवनः—अहो तादृशीमवस्थां गतस्य बालस्यापि सत आत्रेयस्य अभिमानः! ( प्रकाशम् ) वत्स, स्थिरो भव, नाहं तत्र गमिष्यामि।

आत्रेयः—पितामह, कथमद्यापि तातो नागच्छति ?

च्यवनः—अलमाशङ्कया, अचिरमागमिष्यति ( स्वगतम् ) रत्नाकरं प्रति भृशमभिशङ्कते मे हृदयम्। अपि नाम दारिद्र्यनिर्विण्णेन तेन न किञ्चिदत्याहितमाचरितं भवेत् ? हा हतविधे, कियदपरं घटयिष्यसि ? अथवा शान्तं पापं प्रतिहतममङ्गलं मे वत्सस्य!

र-माता—आर्यपुत्र, एवं गते न स्थैर्यं गन्तुमर्हामि, वत्से रत्नाकरे बहुलमाशङ्कते मे हृदयम्। तद् यदि नातिदुष्करं तदा कियद्दूरमनुसृत्य तत्त्वमवगन्तुमर्हसि।

च्यवनः—आं ममापि रत्नाकरे विविधमनिष्टमाशङ्कते चेतः! क्रमेण प्रदोषतमसा समं प्रवर्धते शङ्का। तत् किन्तु खलु करिष्ये। अनशनेन मानसवैक्लव्येन च सुदुर्वहान्यङ्गानि! तथापि नैवं शक्यमुपेक्षितुम्। हा विधे,

मा नाम ह्रियतामेष दरिद्राणां समाश्रयः।
हृतेऽस्मिन्नेष दीनानां वर्गः सर्वो विनङ्क्ष्यति॥

ब्राह्मणि, दीयतां मे यष्टिका, यावत् पश्यामि।

र-माता—( यष्टिमुपनीय ) एषा यष्टिका!

च्यवनः—( यष्टिमवलम्ब्य स्थितः ) अहो स्थितस्यापि मे कम्पितौ चरणौ, कम्पते चायं हस्तः ! तथापि प्रयत्नेन बहिः कियद्दूरं गत्वा वत्सं रत्नाकरमाकारयामि ! ( पदान्तरं गत्वा ) ब्राह्मणि, ब्राह्मणि, एहि अवलम्बस्व मां ! अवशानि मे अङ्गानि, घूर्णते शिरः ! एषोऽहं नालमस्मि शरीरं धारयितुम् । ( मूर्च्छितः पतति )

र-माता—हा आर्यपुत्र, समाश्वसिहि, हा आर्यपुत्र, ममैव मन्दभाग्यायाः प्रेरणया विपद्यसे ! हा हतास्मि मन्दभागिनी ।

र-पत्नी—हा तात, कथमेवं पतसि ?

आत्रेयः—हा पितामह, कथमेवमसि ? ( उत्थातुमिच्छन् मूर्च्छति )

र-पत्नी—हा हा ! वत्सो मे आत्रेयोऽपि मूर्च्छितः ! हा आर्यपुत्र, क्वासि, सत्वरमेहि, पश्य ते तातस्य आत्रेयस्य च विषमां दशाम् । हा ! हा !!

र-माता—अहह ! किं करोमि, विमूढास्मि, आर्यपुत्र, समाश्वसिहि, वत्से, स्नुषे शीघ्रं सलिलमुपानय, यावद् एतौ उपचरामि ।

र-पत्नी—( सलिलमुपनीय ) इदं सलिलम् ।

र-माता—( उभौ यथाक्रमं सलिलेन उपचरति )

( ततः प्रविशति तण्डुलाद्युपकरणभारनम्रकायो रत्नाकरः )

रत्ना—अहो ! प्रथमेनानेन कठोरसाहसेन लज्जित इव संवृत्तोऽस्मि । अपि कृतो मया कुशल एष समारम्भः ? अथवा सुदूरमतिक्रान्तोऽस्मि, नायं समयः शुभाशुभे विचारयितुम् ! यत् कृतं, सुष्ठु कृतम्, अयमेक-एव मे पन्थाः स्वजनसञ्जीवनाय । तदिदानीम्—

साहसैरेव लब्धेन द्रव्येण मुदितो भृशम् ।
पितरौ वनितां पुत्रं जीवयाम्यविलम्बितम् ।
वृत्तं भग्नं भज्यतां किन्ततो मे ?
प्राणा नष्टा दीनयोः किन्ततो मे ?
पित्रोः पत्न्याः पुत्रकस्यात्मनश्च
प्राणा लब्धा लाभ एष प्रकामम् ।

द्वयोर्जीवननाशेन बहूनां यदि जीवनम् ।
लोकतो धर्मतो वापि किमनिष्टं ततो मम ?

अथवा धर्म इति कल्पनामात्रसारं स्वार्थेषु प्रबुद्धानाम् ।

कुतः ?

तावत्कालं रक्षितो धर्ममार्गः
किं तस्मान्मे क्लेशहानिः प्रजाता ?
अस्मादूर्ध्वं धर्मसिद्धान्तवैरं
कृत्वा कृत्वा स्वामवस्थां परीक्षे ।

अये कथमेतावद्गभीरः प्रदोषान्धकारः ! ( दृष्ट्वा ) आः ! मेघैः संवृतमन्तरीक्षम् ! अहो सुमहदुपकृतं खलु गभीरान्धकारेण रत्नाकरस्य । कुतः ?

हृत्वा शाकटिकं तथा धनपतिं द्रव्याणि हृत्वा ततश्चौराणां वसतिं समीक्ष्य निभृतामद्रौ च तैः पूजितः ।
स्कन्धेनापि वहन् बहूपकरणं मार्गं सशङ्कं श्रितः
प्राप्तोऽहं तमसैव संवृतवपुः पौरैरदृष्टः पुरम् ।

( वीरबलमुद्दिश्य ) सखे वीरबल, न जाने कीदृशस्त्वया सह मे जन्मान्तरीणः सम्बन्धः, येन स्वजनरक्षाया निरुपमं मार्गं प्रदर्शितवानसि । भवतु साम्प्रतं स्वजनानविलम्बितं पश्यामि, अपि नाम सर्वानेव कुशलिनः पश्येयम् ? ( परिक्रम्य दृष्ट्वा ) अये सर्व एवैते एकस्था दृश्यन्ते, अये किमिदम् ? जननी भूतले शयानं तातमुपचरति, प्रिया माधवी च तत्रैव शयानमात्रेयम् । मूढ रत्नाकर, अपि नाम विफलस्ते सर्वो महानारम्भः ? ( उपसृत्य) हा तात, हा आत्रेय, क्वासि, देहि मे प्रतिवचनम् । ( भारं त्यक्त्वा उपसर्पति )

र-माता—वत्स, रत्नाकर, आगतोऽसि ? हा ! हा ! पश्य ते पितुः पुत्रस्य च समवस्थाम् ! आर्यपुत्र, उत्तिष्ठ, देहि मे प्रतिवचनम् । एष ते रत्नाकरः प्राप्तस्तं कथं न सम्भाषसे ? वत्स, आत्रेय, उत्तिष्ठ, तातं परिष्वजस्व ।

च्यवनः—ब्राह्मणि, रोदिषि ? मा भैषीः, न च्यवनो म्रियते। क नु खलु रत्नाकरः ?

रत्ना—तात, एष ते सन्तापमात्रहेतुः पुत्रः पादयोः पतितोऽस्मि।

आत्रेयः—तात, अपि आगतोऽसि ? तात, अपि प्राप्तानि भोज्य-द्रव्याणि ? ( परिष्वजते )

रत्ना—वत्स, अथकिम्। ( अङ्के स्थापयति )

र-माता पत्नी च—अहो समुज्जीवितास्मि द्वयोरेव संज्ञालाभेन।

च्यवनः—वत्स, रत्नाकर, अलमिदानीं वाचां प्रपञ्चेन। ( उपकरण-भारं दृष्ट्वा ) संक्षेपतः कथय, कुत एतानि प्रभूतभोज्यद्रव्याणि समासादितानि ?

रत्ना—( स्वगतम् ) किं सत्यं कथयामि ? अथवा एवं तावत् कथयामि ; तात,

　　अद्य केनापि मित्रेण सन्दृष्टेन कृपावता।
　　अस्माकं रक्षिताः प्राणाः प्रभूतद्रव्यदायिना।

सर्वे—अहो दैवानुबन्धः ! अहो तस्य महानुभावता !

च्यवनः—वत्स, क एष महानुभावो नाम, यं द्वारीकृत्य विधात्रा दरिद्रकुलमिदमनुगृहीतम्। अप्यसाविहैव प्रतिवसति ?

रत्ना—नहि नहि, स खलु दूरे प्रतिवसति। महानुभावश्चासौ नास्माभिः स्वनाम कीर्त्यमानमिच्छति। तदलं तदीयनामश्रवणनिर्बन्धेन। परमद्य प्रभृति तमेतं महान्तमेव बान्धवं ज्ञातुमर्हसि।

च्यवनः—अहो ! देवतास्तस्य सर्वतः स्वस्ति करिष्यन्ति। वत्से स्नुषे, अलमद्यापि कालहरणेन, सत्वरमेव महानसं गत्वा भोज्यं निष्पाद्य आदौ वत्सस्य आत्रेयस्य समुज्जीवनं कुर्वीथाः, रत्नाकरस्य विलम्बकारणादिकमतः परं यथावसरं श्रोतव्यम्।

र-पत्नी—यथाज्ञापयति तातः। ( निष्क्रान्ता )

प्रथमाङ्कः समाप्तः

---

## द्वितीयाङ्कः

( ततः प्रविशति दण्डहस्तो रत्नाकरः )

रत्ना—अहो प्रसादः ! निःशेषमद्य निर्वासितं चिरसञ्चितं मनसो मालिन्यम् ! कुतः ?

द्वारे द्वारे प्रातरारभ्य पूर्वं
सायं यावत् पर्यटन् व्यर्थकामः ।
भाग्यात् स्वेषां मृत्युवक्त्रे स्थितानां
रक्षाकृत्ये शक्तिमान्नः कथञ्चित् ॥

अपि च

दूरे कोमलवृत्तयः परिचिता निर्वासिता मानसाद्
धर्म्यं शास्त्रवचः प्रवञ्चनपरं निर्धारितं सर्वतः ।
वृत्तिः क्रूरतमा तमालमलिना सम्पूजिताऽघ्र्यादिभि-
र्हस्ते न्यस्तकुशे विशेषविषये दण्डः समारोपितः ॥

अहो, एतावतो दिवसान् प्राक्तनसंस्कारखलीकृतेन चेतसा विनयं सेवमानेन मया महदन्याय्यमनुष्ठितम्, येन किल तावान् दुःखभोगः समजनि ।

मिथ्यैव मुग्धजनता जननाय भूते-
धर्म्यान् विधीन् परिचरन्ति परानुगत्या ।
दृष्टं विहाय फलमत्र परत्र लोके
किं नाम संस्मरति हा मतिमानदृष्टम् ॥

व्यर्थं दैवतपूजनं हतफलं धर्माद् भयं देहिनां
सत्यं निष्फलतामुपैति परितः सत्रञ्च सापत्रपम् ।
यद् यत् पौरुषसञ्चितं निजहितं सत्यं तदेवोचितं
लुप्तं सन्तमसं क्षणेन हृदि मे विज्ञानदीपोदयात् ॥

## मासिक-सभा

संस्कृत-साहित्य-परिषद् आगामिनी मासिक-सभा १३४५ वङ्गाब्दीय-सौरज्यैष्ठस्य ३०श (त्रिंश)-दिवसे सोमवासरे सायं सप्तवादनतो भविष्यतीति सर्वेषां संस्कृत-भाषाध्यायिना-मध्यापकानाञ्च तत्र समुपस्थितिः प्रार्थनीया ।

---

## মাসিক সভা

সংস্কৃত-সাহিত্য-পরিষদের আগামী মাসিক সভা—৩০শে জ্যৈষ্ঠ, ১৩৪৫, সোমবার, সন্ধ্যা ৭টার সময়ে হইবে। সর্ব্বসাধারণের উপস্থিতি একান্ত প্রার্থনীয়।

---

## পণ্ডিতগণের জীবনী-সংগ্রহ

সংস্কৃত ভাষাভিজ্ঞ ব্যক্তিমাত্রই অবশ্য স্বীকার করিবেন যে ভারতবর্ষের গৌরব ভূতপূর্ব্ব এবং বর্ত্তমান অধ্যাপকগণের জীবনী একত্র সংগ্রহ করিয়া প্রকাশ করার যথেষ্ট উপযোগিতা আছে। এ বিষয়ে পরিষদের পক্ষ হইতে তথ্যানুসন্ধান করা হইতেছে। বঙ্গদেশে এখনও প্রায় ১০০০ সুপ্রতিষ্ঠিত অধ্যাপক আছেন, তাঁহাদের এবং তাঁহাদের অধ্যাপক পণ্ডিতগণের জীবনী সংগ্রহ করিতে পারিলেও একটা উল্লেখযোগ্য কার্য্য সম্পন্ন করা যাইতে পারে। তদুদ্দেশ্যে প্রত্যেক অধ্যাপকের নিকট বিনীত অনুরোধ এই যে, তাঁহারা অনুগ্রহপূর্ব্বক নিজের এবং সুপরিচিত পরলোকগত বা বর্ত্তমান অধ্যাপকগণের মধ্যে অন্ততঃ দুই জনের সম্বন্ধে নিম্নলিখিত সংবাদগুলি **সংস্কৃত-সাহিত্য-পরিষৎ-সম্পাদকের** নামে লিখিতভাবে জানাইলে দেশের ও দশের মহৎ উপকার সাধিত হইবে :—

নাম, পিতার নাম, উপাধি, কর্ম্মস্থল, জন্মস্থান (গ্রাম, পোঃ, জেলা), জন্মদিবস (বাংলা তারিখ, অন্ততঃ আনুমানিক সাল), বর্ত্তমান বয়স (পরলোকগত-স্থলে মৃত্যুদিবস—বাংলা তারিখ), তাঁহার অধ্যাপকের নাম, স্বরচিত কোন গ্রন্থাদি থাকিলে তাহার নাম (মুদ্রিত বা অমুদ্রিত জানা দরকার), নিজে টোলে মোট যত ছাত্র পড়াইয়াছেন তাহার আনুমানিক সংখ্যা, টোলের নাম ও ঠিকানা। সংবাদদাতার নাম ও ঠিকানা।